THE

# CHOWKHAMBÂ SANSKṚIT SERIES,

A

COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS.

NO. 358

द्वैताद्वैतदर्शने

निम्बार्कपथानुगया सिद्धान्तसेतुटीकोपेतया

सिद्धान्तजाह्नव्या समलङ्कृतं

# ब्रह्मसूत्रम् ।

दशश्लोकी च

निर्दिष्टपथावलम्बिन्या लघुमञ्जूषाख्यव्याख्यया समुल्लासिता

THE

# BRAHMA SUTRAS

with a commentary, Siddhānta Jānhavī

and a sub-commentary, called Siddhāntasetu;

and

DAŚAŚLOKĪ,

with a commentary, called Laghumañjūṣā

FASCICULUS 3–३

*PRINTED-PUBLISHED & SOLD BY THE SECRETARY,*

CHOWKHAMBA SANSKRIT SERIES OFFICE.

*Vidya Vilas Press, North of Gopal Mandir, Benares.*

1927.

Agents:

1 Luzac & co, Booksellers,

LONDON.

2 Otto Harrassowitz, Leipzig:

GERMANY.

3 The Oriental Book-supplying Agency,

POONA.

CHOWKHAMBĀ SANSKRIT SERIES
Nos. 94, 99, & 358.

# ब्रह्मसूत्रम् ।

## द्वैताद्वैतदर्शनम् ।

श्रीमद्वैष्णवसंप्रदाय चतुष्टयान्यतम पूज्यपाद श्रीदसनकादिपथाश्रित सुन्दरभट्टविरचितयाऽऽप्रथमतरङ्गं सिद्धान्तसेतुकाभिधया टीकया समुल्लासितया निर्दिष्टपथावलम्बिश्रीश्री १०८ भगवद्वासुदेवपाणिस्थपाञ्चजन्यावतार श्रीदेवाचार्यप्रणीतया इन्द्रप्राणाधिकरणान्तं द्वितीयतरङ्गः सिद्धान्तजाह्नव्या समलङ्कृतम् ।

नेने इत्युपानह्व व्याकरणोपाध्यायेन
पं० गोपालशास्त्रिणा
संशोधितम् ।

# BRAHMASUTRA

with a Gloss called Dwaitadwait Sidhantasetuka
on 1 st Tarang by Shree Sundar Bhatta
and a commentary called
Sidhânt Jânhavi 1st and 2nd Tarang by
Shree Dewâchârya

Edited by
**Pandit Gopâl Sâstri Nene Vyâkaranopadhyâya,**

## सेतुसमुद्भासितजाह्नवीसहितस्य ब्रह्मसूत्रस्य

# विषयानुक्रमणिका ।

| विषयः | | पृ० |
|---|---|---|

विषयः

विषयानुक्रमणिकासमाप्तिः ।

द्वैताद्वैतोपपादनपरया ससिद्धान्त, सतुकाख्यव्याख्यया
सिद्धान्तजाह्नव्या वृत्त्या सनाथं

# ब्रह्मसूत्रम् ।

श्री १०८ नन्दनन्दनाय नमः ।

द्वैताद्वैतपथप्रदर्शकेभ्यः पूर्वाचार्य्येभ्यः

श्री सनकादिचरणेभ्यो नमः ।

शास्ता बुद्धेर्यश्च विश्वस्य हेतुः
कर्माध्यक्षः सर्वभूतान्तरात्मा ॥
देवाचार्य्यैस्तस्य देवस्य रूपं
भर्गं नित्यं चिन्तयेऽहं वरेण्यम् ॥ १ ॥

इह खल्वनादिवेदान्तसम्प्रदायं प्रवर्त्तयितुं सकलविश्वजन्मादिकारणमोक्षदातृमुक्तोपसृप्यवेदान्तवेद्याखिलशक्तिकल्याणगुणाब्धिभगवत्पुरुषोत्तमश्रीवासुदेवाज्ञापरिपालनाय तदाचिन्त्यशक्त्युपबृंहितानन्तशक्तिर्भगवान्सुदर्शनो नियमानन्दाभिधाचार्य्यरूपेणावनितलावतीर्णः सकलवेदार्थवेदान्तपारिजातसौरभाख्यादिग्रन्थविरचनव्याजेन वाक्यार्थसंग्रहं निभालयामास, तत्र भगवान् शङ्खावतारोऽचिन्त्यशक्तिस्तच्छिष्यप्रवरः श्रीश्रीनिवासाचार्य्यो निगदं बभाषे, तस्यातिगम्भीराशयत्वेन मन्दमतीनां निखिलशास्त्रार्थजिज्ञासूनामलसानां प्रवेशानर्हत्वं निश्चिन्वानस्तेभ्यः पूर्वाचार्य्यप्रणीताखिलशास्त्रार्थं जि-

ग्राहयिषुर्भगवत्करस्थपद्मानतारो भगवान्करुणासागरः श्री-देवाचार्य्यरूपेणाविर्भूत्वा विस्तृतं सर्ववेदान्तशास्त्रार्थं संक्षेपेण प्रकाशयितुं समस्तवेदान्तसारभूतां सिद्धान्तजाह्नव्याख्यां शारीरकमीमांसासूत्रवृत्तिं प्रणीतवान्, तस्याश्च यथामति पदयोजनामात्रं व्याख्यानं मिताक्षरं सिद्धान्तसेतुकाभिध-मञ्जसा तदर्थोपलब्धये समारभ्यते श्रीगोविन्दप्रसादकामेन ।

तत्र तावच्चिकीर्षितग्रन्थनिर्विघ्नसमाप्त्यर्थं श्रीभगवदाचार्य्य-वन्दनरूपं मङ्गलमाचरति ।

**नियमेन यदानन्दो जगद्धाम्नयतेऽखिलम् ।**

**तमहं नियमानन्दं वन्दे कृष्णं जगद्गुरुम् ॥१॥**

**नियमेनेति** । तस्य व्याख्या द्विविधा परमेश्वरविषयिका-ऽऽचार्यविषयिका चेति । तत्र परमेश्वरपरत्वेनादौ व्याक्रियते तं कृष्णमहं वन्द इत्यन्वयः । कृष्णशब्दस्य निरुक्तिं पर्यायेणाह—**नियमानन्दमिति** । नियमो देशकालवस्त्वपरिच्छिन्नं सद्वस्तु स चासावानन्दश्च नियमानन्दः समस्तदेशकालवस्तुव्यापक-सदानन्दरूपः ।

"कृषिर्भूवाचकः शब्दो णश्च निर्वृतिवाचकः ।

तयोरैक्यं परं ब्रह्म कृष्ण इत्यभिधीयते," इत्यादिवचनात् ।

एतेन "सत्यं ज्ञानमनन्तं ब्रह्मे"ति लक्षणवाक्यं व्याख्यातम् । अथ लक्षणान्तरमाह—**नियमेनेति** । यदानन्दो यश्चासावानन्द-श्चेति कर्मधारयसमासः । यच्छब्दः "सर्वे वेदा यत्पदमामनन्ति" "नामानि सर्वाणि यमाविशन्ति," "यः सर्वज्ञः सर्वविद् यस्य ज्ञानमयं तपः," "यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ती," त्यादिसमस्तवेदान्तप्रसि-द्धश्रीपुरुषोत्तमपरामर्शपरः । आनन्द आनन्दस्वरूपः "विज्ञान-

मानन्दं ब्रह्मे"ति श्रुतेः। जगद्भासयतेऽखिलमिति। अखिलं जगद्भासयते तमित्यन्वयः। अखिलं चेतनाचेतनरूपेणानन्तविचित्रविशेषसम्पन्नं जगद् वियदादिभोग्यभोक्तृरूपं भासयते प्रलये सूक्ष्मावस्थाऽऽपन्नमव्यक्तनामरूपकं व्यक्तनामरूपावस्थं कृत्वा दर्शयतीति यावद् "आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते आनन्देन जातानि जीवन्ति आनन्दं प्रयन्त्यभिसंविशन्ती"ति श्रुतेः। यद्वा, यस्यानन्दो यदानन्द इति षष्ठीतत्पुरुषोऽयं समासः। एते"नानन्दं ब्रह्मणो विद्वान्न बिभेति कुतश्चने"ति श्रुत्यर्थो व्याख्यातः। तथा हि, यस्य परब्रह्मणो गुणरूप आनन्दोऽखिलं जगद् दुःखादिसम्पन्नतया बन्धकारणत्वेन भासयते, दर्शयित्वा ततो मोचयतीति भावः। एतेनानन्दमात्रमेव ब्रह्म नानन्दगुणकमिति पक्षो निरस्तः। आनन्दरूपगुणमात्रज्ञानादेव मोक्षश्रवणात् तच्चानन्दमयाधिकरणे वक्ष्यते। अथ विश्वहितोपदेष्टाऽपि स एवेत्याह—जगद्गुरुमिति। जगतो ब्रह्मादिस्थावरान्तस्य हितोपदेष्टा सर्वसुहृत्त्वात् "सर्वस्य शरणं सुहृदि"ति श्रुतेः। "निवासः शरणं सुहृदि"ति भगवद्वचनाच्च। यद्वा ब्रह्मादीनामाचार्यत्वेन प्रसिद्धानामपि विद्योपदेष्टा वेदप्रवर्त्तकत्वाद् "यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै तं ह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये," "यो ब्रह्माणं विदधाति पूर्वं यो वै विद्यास्तस्मै गोपायति स्म कृष्णं तं ह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणं व्रजेदि"ति मन्त्राभ्याम्। यद्वा जगद्गुरुमिति जगद्विषयकान्धकारनाशकमित्यर्थः। "तस्य भासा

---

१ गुशब्दस्त्वन्धकाराख्यः रुशब्दस्तन्निरोधकः।
अन्धकारनिरोधित्वाद् गुरुरित्यभिधीयते॥

इति निरुक्तेश्च।

सर्वमिदं भाती"ति श्रुतेः। तस्य पुरुषोत्तमस्य ब्रह्मणो भगवतः स्वरूपगुणादिविषयकज्ञानं सर्वं जगत्प्रकाशयतीति भावः। "येनाश्रुतं श्रुतं भवति" "आत्मन्परे दृष्टे श्रुते सर्वं विज्ञातं यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्यादि"त्यादिश्रुतेः। तमहं वन्द इति। एकवचनं चात्र जात्यभिप्रायकम्, अहमर्थत्वावच्छिन्नैर्जीवात्मभिर्देवपदार्थाभिन्नकृष्णपदार्थः सततं वन्दनार्चनाऽऽद्युपासनाविषयत्वेन भावनीयः। अस्मदर्थानां तदात्मकत्वात् तन्नियम्यत्वात् तद्व्याप्यत्वाच्च, तस्य च सर्वात्मत्वात् सर्वनियन्तृत्वात् सर्वव्यापकत्वाच्च "पतिं विश्वस्यात्मेश्वर एष सर्वभूतान्तरात्मा अन्तः प्रविष्टः शास्ता जनानां,"

यच्च किंचिज्जगत्यस्मिन् दृश्यते श्रूयतेऽपि वा।
अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थित,इत्यादिस्मृतेः।

अथाचार्यपक्षे व्याख्यानमुच्यते—नियमेनेति। तं नियमानन्दमहं वन्द इत्यन्वयो वक्तव्यः। तमेव व्युत्पत्तिमुखेन विवृणोति—नियमेनेति। नियमोऽत्र व्यभिचाराभाव ऐकान्त्यमिति यावत्। यदानन्द इति। यस्योपदिष्टो ब्रह्मविषयभूत आनन्द ऐकान्त्येनाखिलं जगद्भासयते तं वन्द इति योजना, यत्तदोर्नित्यसम्बन्धात्। अखिलं भोक्तृभोग्यनियन्तृरूपं तत्त्वमित्यर्थः। "जगदिति"चतुर्थ्यर्थे द्वितीया,णिजन्तमिदं,भास इत्यस्य धातो रूपं, जगते विश्वस्मै सर्वं तत्त्वं प्रकाशयत इत्यर्थः। जगच्छब्दश्चात्र चेतनविशेषमुमुक्षुवाचकः, अचेतनस्य ज्ञानाश्रयत्वाभावेनोपदेशानर्हत्वात्। तथा च श्रुतिः "तस्मै स विद्वानुपसन्नाय सम्यक्प्रशान्तचित्ताय समन्विताय येनाक्षरं परमं वेदसत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्यां यथा सोम्य पुरुषं गन्धारेभ्योऽभिनद्धाक्षमुपानीय तं ततो तिविजने विसृजेत्, स यथा तत्र प्राग्वोदग्वा-

ऽधरं वा विसृष्टस्तस्य यथाऽभिनहनं प्रमुच्य ब्रूयादेतां दिशं गन्धारा एतां दिशं व्रजेति स ग्रामाद् ग्रामं पृच्छन्पण्डितो मेधावी गन्धारानेव सम्पद्यते एवमेवेहा"चार्य्यवान्पुरुषो वेद" इत्यादि, तस्यैव भगवद्भावं विधत्ते । कृष्णमिति । आचार्य्यावताररूपं भगवन्तमित्यर्थः । आचार्यस्यापि भगवच्छक्त्युपबृंहिताचिन्त्यशक्तित्वेन तत्त्वाभिधानस्याविरुद्धत्वात् ।

यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ ।
तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः ॥

"आचार्य्यदेवो भवेत्या"दि श्रुतेः । अहं वन्द इति । अहमित्युपलक्षणं श्रेयोऽर्थिभिर्मुमुक्षुभिराचार्य्यचरणावेवोपायत्वेनोपेयत्वेन वरणीयावित्यर्थः ॥ १ ॥

एवं मङ्गलश्लोको व्याख्यात, इदानीं ग्रन्थव्याख्योपक्रमः । तत्र स्वप्रणीतग्रन्थस्य प्रयोजनं वदन्नाचार्यावतारादिप्रयोजनमुपक्षिपति—इह खल्वित्यादिना ।

इह खलु सकलविश्वहेतुर्निरवधिकरुणावरुणालयो निरतिशयाचिन्त्यानन्तस्वरूपगुणशक्तिवैभवो भगवान्वासुदेवोऽखिललोकपुरुषार्थसिद्धये पाराशर्यरूपेणावतीर्य स्वनिःश्वसितान्वेदाननेकशाखाऽऽत्मना विभज्य तेषां स्त्रीशूद्रानाधिकारिकत्वं निश्चिन्वानस्तद्धितचिकीर्षया भारतादीन्विधाय साधारण्यात् श्रीभगवद्भावापत्तिलक्षणमोक्षेप्सूनां

वेदसरोजातोपनिषत्पद्ममकरन्दभृङ्गाणां विधिप्राप्तोपनयनसंस्कारादिसम्पन्नानां गुरूपसत्तिपूर्वकमधीतषडङ्गवेदानां जिज्ञासितधर्ममीमांसानिरस्तकर्मफलादिविषयकसंशयानामैहिकामुष्मिकभोगवासनाशून्यानां भगवत्प्रसादैकैषणानां तद्दिदृक्षातृणीकृतसर्वपुरुषार्थानां गुरुभक्तिपूर्णमनस्कानां तत्र प्रवृत्त्यनर्हतां विचिन्त्य तेषामनन्ताचिन्त्यनिरतिशयस्वरूपगुणशक्तिवैभवपरब्रह्मपुरुषोत्तमश्रीवासुदेवविषयकजिज्ञासावतां शास्त्रविचारसमर्थानां मुमुक्षूणां तद्भावापत्तिरूपमोक्षोपलब्धये सर्ववेदार्थमध्यायचतुष्टयात्मकशारीरकमीमांसाऽऽख्यं वेदान्तशास्त्रं सूत्रयामास । तच्च मुमुक्षजनोद्दिधीर्षया श्रीपुरुषोत्तमाज्ञयाऽनादिवेदान्तसन्ततिं सनातनीमपि कलौ नष्टामुद्धर्त्तुमवनीतलावतीर्णो भगवान्सुदर्शनावतारो नियमानन्दाख्य आचार्यो वेदान्तपारिजातसौरभाख्यग्रन्थरचनया वाक्यार्थरूपेण व्याचकार । तदपि भगवाञ्छ्रीनिवासाचार्यो निगदं बभाषे । तस्यातिगम्भीराशयत्वेनोक्तलक्षणाधिकारिकत्वेन च मन्दमतीना निखिलवेदान्तार्थजिज्ञासूनां शि-

थिलप्रयत्नानामवगाहनानर्हत्वेन प्रवृत्त्यनर्हत्वात् तेषामुपकारार्थं मिताक्षरारूपां सिद्धान्तजाह्नव्याख्यां सूत्रवृत्तिं समारभते ।

## अथातो ब्रह्मजिज्ञासा ।१।१।१॥

**सकलविश्वहेतुर्भगवान्वासुदेवः पाराशर्यरूपेणावतीर्य वेदान्विभज्य तेषां स्त्रीशूद्रानधिकारिकत्वं निश्चिन्वानस्तद्धितचिकीर्षया भारतादीन्विधाय साधारण्यात्तत्र मुमुक्षूणां प्रवृत्त्यनर्हतां विचिन्त्य तेषां मोक्षोपलब्धये वेदान्तशास्त्रं सूत्रयामासेत्यन्वयः ।** तत्र भगवन्तं विशिनष्टि—**सकलविश्वहेतुरिति** । सकलविश्वस्य जन्माद्यभिन्ननिमित्तोपादानकारणं चतुर्मुखादीनामपि विश्वैकदेशकारणत्वात्तत्रातिप्रसङ्गवारणाय सकलपदसंग्रहः । एतेन वक्ष्यमाणं ब्रह्मलक्षणमुक्तं "यतो वा इमानि भूतानि जायन्ते" "जन्माद्यस्य यत" इत्यादिवक्ष्यमाणशास्त्रात् । अथ तस्यावतारे हेतुमाह । **निरवधिककरुणावरुणालय इति** । स्वाभाविककरुणागुणवशीभूतत्वादित्यर्थः । तत्स्वरूपं सङ्गृह्णाति—**निरतिशयेति** । अतिशयसाम्यरहिता अचिन्त्या इयत्ताऽवच्छेदेन चिन्तयितुमनर्हा अनन्ताः परिच्छेदशून्याः सर्वगताः स्वरूपगुणशक्तिवैभवा यस्य सः ।

"न तत्समश्चाभ्यधिकश्च दृश्यते पराऽस्य शक्तिर्विविधैव श्रूयते" ।

"स्वाभाविकी ज्ञानबलक्रिया चे"ति श्रुतेः । **भगवानिति** । षड्गुणसम्पन्नः ।

ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः ।
ज्ञानवैराग्ययोश्चैव षण्णां भग इतीङ्गना ॥

इति पराशरोक्तषड्गुणाश्रय इत्यर्थः । अवतारप्रयोजनमाह । **स्वनिःश्वसितान् वेदान्विभज्येति** । वेदविभाग एवावतारप्रयोजनमित्यर्थः । अन्यस्य तद्विभागानर्हत्वं दर्शयितुं **स्वनिः–श्वसितानि**तिविशेषणसंग्रहः । परमेश्वरश्वासरूपत्वेनेतरैस्तत्तात्पर्यस्य निर्णेतुमशक्यत्त्वादिति भावः । अथ वेदविभागप्रयोजनमाह । **अखिललोकपुरुषार्थसिद्धये** । अर्थधर्मकाममोक्षप्राप्त्यर्थमिति यावत् । सर्वजीवानां स्वेष्टपुरुषार्थसिद्धिरेवास्य प्रयोजनं बोध्यम् । **तेषां**, वेदानां शाखाऽऽत्मना विभक्तानाम् । **स्त्रीशूद्रानधिकारिकत्वं निश्चिन्वान इति** । वेदाध्ययनस्योपनयनसंस्कारतन्त्रत्वात् । "तं होपनिन्ये अधीहि भगव" इति श्रुतेः, शूद्रस्य वेदाध्ययननिषेधाच्च । "पद्युह वा एतच्छ्मशानं यच्छूद्रस्तस्माच्छूद्रस्य समीपे नाध्येतव्यं तस्माच्छूद्रो बहुपशुरयज्ञिय" इति श्रुतेः । श्रवणाभावेऽध्ययनाभावः सुतरां सिद्धो भवति, अनुश्रवणपूर्वकत्वादध्ययनस्येति भावः ।

"न शूद्रे पातकं किंचिन्न च संस्कारमर्हति ।
न चास्योपदिशेद्धर्मं न चास्य व्रतमादिशेदि" त्यादिस्मृतेश्च ॥

शूद्रश्चतुर्थो वर्ण एकजातिः, अथास्य वेदमुपशृण्वतस्त्रपुजतुभ्यां श्रोत्रपूरणम्, उदाहरणे जिह्वाच्छेदः, धारणे शरीरभेदः । धर्मश्चात्र वैदिको विवक्षितः, पुराणादौ तस्याधिकारित्वात् तच्च शूद्राधिकरणे निपुणं वक्ष्यते । भारतादिविधानप्रयोजनमाह । **तद्धितचिकीर्षया** । शूद्रादीनां पुरुषार्थसिद्धय इत्यर्थः । एवं प्रासङ्गिकं श्रीपाराशर्यावतारादिप्रयोजनं निरूप्य प्रकृतमनुसरति मुमुक्षुविशेषनिर्धारणमुखेन । **तेषां-मुमुक्षूणां तत्र भारतादौ प्रवृत्त्यनर्हतां विचिन्त्येति** ।

अप्रवृत्तौ हेतुमाह—**साधारण्यादिति**। भिन्नशास्त्रप्रणयने हेतुर्बोध्यः। सकामनिष्कामसाधारणाधिकारित्वेन साधारणप्रयोजनवत्त्वेन चेति विवक्षितोऽर्थः, व्यवहारविषयत्वाच्चेत्यपि ज्ञेयं, व्यवहारविशिष्टाख्याने विक्षेपहेतुत्वेन मुमुक्षुप्रवृत्त्यभावस्य प्रत्यक्षसिद्धत्वात्। मुमुक्षून्विशिनष्टि—**भगवद्भावापत्तिलक्षणमोक्षकामानामिति**। अनेन मुमुक्षुपदनिर्वचनमुक्तं भवति। तेषां ज्ञानेच्छालम्पटत्वं दर्शयन्नाह-**वेदसरोजातेत्यादि**। वेद एव सरस्तत्र जातं यदुपनिषद्रूपं पद्मं तस्य मकरन्द इव मकरन्दस्तत्त्वसिद्धान्तरसस्तस्य भृङ्गा इव भृङ्गास्तद्रसातिलुब्धास्तेषामित्यर्थः। तेषां शास्त्राधिकारस्य योग्यतामाह-**विधिप्राप्तेति**। संस्कारवत्तायाः प्रयोजनमाह—**गुरूपसत्तिपूर्वकेति**। सामान्यवेदाध्ययनस्य संशयनिवर्त्तकत्वाभावात्। तत्र संशयनिवृत्तौ हेतुविशेषं दर्शयन्नाह—**जिज्ञासितेति**। जिज्ञासिता या धर्ममीमांसा तया निरस्तो विनष्टः कर्मफलनित्यत्वादिसंशयो येषां तेषाम्। संशयहानेः फलं दर्शयति-**ऐहिकामुष्मिकेति**। वेदे सामान्यतः कर्मफलानां नित्यानित्यरूपोभयप्रकारतां दृष्ट्वा कर्मफलं नित्यं वाऽनित्यं वेति जातो यः संशयस्तस्य च कर्ममीमांसाशास्त्रविचारेण कर्मफलानामनित्यत्वनिश्चयात्तेन निरस्तो भोगवासनाविषयकसंशयो येषां तेषामित्यर्थः। निर्वेदो घटत एव तस्यैव संशयनाशफलकत्वादित्यर्थः। दुर्वासनानिवृत्तेः फलं दर्शयति—**भगवत्प्रसादेति**। एकशब्दोऽत्रान्ययोगव्यवच्छेदपरः। स चैषणाऽन्तरं व्यावर्त्तयति। तद्व्यावर्त्त्यं व्यञ्जन्नाह-**तद्दिदृक्षेति**। दर्शनव्यतिरिक्तपुरुषार्थेच्छाशून्यानां, सर्वशब्दोऽत्र त्रिवर्गपरत्वेन व्याख्येयोऽन्यथा मुमुक्षुत्वहानिप्रसङ्गात्। यद्वा, तद्दर्शनं तद्भावापत्तिलक्षणमेव विवक्षितं, तेन मुमुक्षुत्वानिवृत्तेरप्यविरुद्धत्वात्। तत्र कारणमाह—**गुरुभक्तिपूर्णमनस्काना-**

मिति। स्पष्टमन्यत्। एतेनास्य शास्त्रस्याधिकारिविषयप्रयोजन-संबन्धरूपानुबन्धचतुष्टयं निरूपितं,सर्वस्यापि शास्त्रस्यानुबन्धापेक्षितत्वात्। यद्यपि "भगवद्भावे"त्यारभ्य "मुमुक्षूणामि"त्यन्तेन संदर्भेणाधिकारिविशेषणमुक्तं तथाऽप्यर्थबलाच्चतुर्णां रूपं बोध्यते। तथा हि। भगवद्भावेत्यादिना मुमुक्षुस्वरूपमुक्त"मर्थी समर्थो विद्वानधिकारी"ति शास्त्रोक्तलक्षणस्यात्र व्याप्तिदर्शनात्, तत्र भगवद्भावेत्यादिद्वयेन तस्यार्थित्वं बोध्यते भगवद्भावापत्तिरूपमोक्षार्थवत्त्वात्। शास्त्रविचारसमाथानामितिविशेषणेन समर्थत्वं विचारकौशल्यसामर्थ्ययोगात्। जिज्ञासितधर्मेत्यादिद्वयेन च विद्वत्त्वं नित्यानित्यवस्तुविषयकविवेकवत्त्वात्। भगवत्प्रसादेत्यनेन सर्वसाधनानां भगवदनुग्रहकिंकरत्वं सर्वेषां तत्सापेक्षत्वात्। तद्दिदृक्षेत्यनेन तद्दर्शनस्य तदनुग्रहैकलभ्यत्वं मोक्षासाधारणकारणत्वं चोक्तं भवति। गुरुभक्तीति। गुरुभक्तेर्भगवत्प्रसादकारणत्वं वेदान्ततत्त्वप्रकाशकत्वं चोक्तम्। विधिप्राप्तेतिद्वयेन वेदाध्ययनयोग्यताविधानेन तस्य त्रैवर्णिकत्वं, व्यतिरेकेण शूद्रादिनिषेधश्चेत्यधिकारिनिर्णयः। अनन्ताचिन्त्येत्यादिनाऽस्य विषयो व्याख्यात उक्तस्वरूपस्य श्रीवासुदेवस्यैव वेदान्तशास्त्रविषयत्वात्। तद्भावेति प्रयोजनोक्तिः। प्रतिपाद्यप्रतिपादकसम्बन्धोऽर्थसिद्धः, इति विवेकः। तथा च शास्त्रं "स्वाध्यायोऽध्येतव्यः" "स गुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठं" "तद्यथेह कर्मचितो लोकः क्षीयते, एवमेवामुत्र पुण्यचितो लोकः क्षीयते" "परीक्ष्य लोकान्कर्मजितान्ब्राह्मणो निर्वेदमायात्" "नास्त्यकृतः कृतेन" "अन्तवदेवास्य तद्भवति" "न ह्यध्रुवैः प्राप्यते ध्रुवं" "प्लवा ह्येत अदृढा यज्ञरूपाः" "जुष्टं यदा पश्यत्यन्यमीशं तन्महिमानमिति वीतशोकः"।

यदा पश्यः पश्यते रुक्मवर्णं कर्त्तारमीशं पुरुषं ब्रह्मयोनिम् ।
तदा विद्वान्पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति ॥
यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ ।
तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः ॥
तमक्रतुं पश्यति वीतशोकः धातुः प्रसादान्महिमानमात्मनः ।
यमेवैष वृणुते तेन लभ्यः सर्वे वेदा यत्पदमामनन्ति ॥

तं त्वौपनिषदं पुरुषं पृच्छामि, नामानि सर्वाणि यमाविशन्ति, शास्त्रयोनित्वात्, वेदैश्चसर्वैरहमेव वेद्यः, निरञ्जनः परमं साम्यमुपैति, तन्महिमानमिति वीतशोकः, न स पुनरावर्त्तते, तन्निष्ठस्य मोक्षोपदेशात्,

बहवो ज्ञानतपसा पूता मद्भावमागताः ।
इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः ॥
सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति ते, ।

तत्तु समन्वयात्, नमामः सर्ववचसां प्रतिष्ठा यत्र शाश्वती, त्यादि। एवं वेदान्तशास्त्रस्यानुबन्धचतुष्टयं निरूपितमिदानीमाचार्याणां सहेतुकमवतारप्रयोजनं दर्शयंस्तस्य प्रवृत्तिप्रकारं व्यनक्ति, तच्चेत्यादिना। तच्च **भगवानाद्याचार्यो** व्याचकारेत्यन्वयः । तत्स्वरूपं दर्शयति—तच्छक्तिज्ञापनाय **सुदर्शनावतार इति** । अवतारे हेतुमाह-**श्रीपुरुषोत्तमाज्ञयेति** । भगवनीयाऽऽज्ञैवावतारहेतुरित्यर्थः। तत्र प्रयोजनमाह। **वेदान्तसन्ततिमिति**। ननु वेदान्तसम्प्रदायस्यानादित्वात् प्रयोजनासिद्धिरिति चेत्तत्राह—**सनातनीमपि कलौ नष्टामिति** । छिन्नसम्प्रदायत्वात्तदुद्धरणरूपप्रयोजनसिद्धिरित्यर्थः । तस्य मङ्गलरूपं नामधेयमाह—**नियमानन्दाख्य इति** । तन्निरुक्तिश्च पूर्वमेवोक्ता । वेदान्तसन्ततेरुद्धार एव किमर्थ इत्याशङ्क्याह—**मुमुक्षुजनोद्दिधी-**

र्षयेति । कथं व्याचरेत्याशङ्क्याह—**वेदान्तपारिजातेति ।** वेदान्तपारिजातसौरभाख्यं ग्रन्थं सन्दर्भयित्वा तत्र सर्ववेदान्त शास्त्राधिकरणार्थं वाक्यार्थमुखेन संगृहीतवानित्यर्थः। ननु संक्षेपेण कथं संशयनिवृत्तिरित्याशङ्क्याह—**तदपीति** । उक्तसंज्ञकं ग्रन्थम्। **भगवच्छ्रीनिवास इति** । शङ्कावतारत्वाद्भाषे, भाष्यमुखेन विशदीचकारेत्यर्थः । नन्वेवं तर्हि मोक्षरूपप्रयोजनस्य पूर्वाचार्यप्रणीतशास्त्रसिद्धत्वान्नवीनग्रन्थरचनारूपस्य प्रयासस्य निष्प्रयोजनत्वेन वैयर्थ्यादित्याशङ्क्य प्रयोजनविशेषं दर्शयन्नाह—**तस्यातिगम्भीराशयत्वेनेति** । अर्थतो विश्वतो मुखत्वाद् दुरवगाहत्वं,शब्दतश्चातिविस्तृतत्वादपारत्वमित्यर्थः । तत्रैव हेत्वन्तरमाह—**उक्तलक्षणेति** । उक्तं भगवद्भावापत्तीत्यादिविशेषणैर्लक्षणं येषां तथाभूता अधिकारिणो यस्य तस्य भावस्तत्त्वम् । तेन मन्दमतीनामल्पबुद्धीनां मन्दबुद्धित्वेऽप्युच्चार्थित्वं दर्शयति—**निखिलवेदान्तार्थजिज्ञासूनामिति** । ननु मन्दमतित्वेऽप्यभ्यासश्रमेण कालविशेषे सिध्यत्येव पुरुषार्थ इत्याशङ्क्याह—**शिथिलप्रयत्नामिति।** प्रयत्नशैथिल्यादवगाहनानर्हत्वमिति भावः। मन्दमतित्वशिथिलप्रयत्नत्वयोः सतोः सर्ववेदान्तार्थविषयकज्ञानेच्छूनामुपकारः सर्वशास्त्रार्थज्ञानप्राप्तिरेवास्य प्रयोजनमित्यर्थः । ग्रन्थसंज्ञां दर्शयति—**सिद्धान्तजाह्नव्याख्यामिति** । तस्य सौलभ्यगुणयोगमाह—**मिताक्षररूपामिति** । "समारभत" इति प्रथमपुरुषप्रयोगेण मदन्तर्गतः श्रीनिवासाचार्य एव स्वकृतभाष्योक्तार्थं संक्षेपेण ग्राहयितुं सूत्रवृत्तिं समारभत इति श्रीदेवाचार्यपादैः स्वदैन्यं सूचितम् ।

एवं चिकीर्षितस्य ग्रन्थस्य प्रयोजनादिकं निर्धार्य्य शास्त्रं व्याख्यातुमुपक्रमते । **अथातो ब्रह्मजिज्ञासेति** ।

प्रथमं तावदुद्देशमुखेन पदार्थान्विभजते ।

**अत्रा"थ"शब्द आनन्तर्य्यार्थक एव, "अत" इति शब्दो हेतुवाचकः, अथानन्तरमतो हेतोर्ब्रह्मजिज्ञासा कर्त्तव्येत्यध्याहृतेन विध्यर्थकपदेनान्वयः ।**

अत्रेति। अस्मिन्सूत्रे। अथशब्द इति । अत्रैवकारोऽन्ययोगव्यवच्छेदार्थकस्तेनान्येऽर्था व्यावर्त्यन्ते। तथा हि, अनेकार्थकोऽयमथशब्दः, अर्थान्तरमङ्गलाधिकारारम्भानन्तर्यभेदात् । तत्र न तावदर्थान्तरपरः, उपक्रमवाक्यत्वात् पूर्वनिर्वचनाद् व्याख्यानान्तरकथनमर्थान्तरं, यथा माया रमाया धवः स्वामी माधवः, अथ वा मधुवंशे भवो माधव इति। स चात्र न सम्भवति पूर्वनिर्वचनाभावादित्यर्थः। नापि

ॐकारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा ।
कण्ठं भित्वा विनिर्यातौ तस्मान्माङ्गलिकावुभाविति—

स्मृत्युक्तमङ्गलार्थकः, वेदान्तानां भगवत्स्वरूपगुणादिप्रतिपादनपरतया सर्वेषामपि वाक्यपदवर्णमात्राणां मङ्गलरूपत्वेन मङ्गलान्तरनिरपेक्षत्वात्। नाप्यधिकारवाचकः,शब्दादिवद् ब्रह्मणोऽधिकार्य्यत्वासम्भवात् । नाप्यारम्भपरः, वेदान्तस्यानादित्वाभ्युपगमात्। अन्यथौपचारिकादिमत्त्वाङ्गीकारेऽप्रधानताऽऽपत्तेः । अतः परिशेषादानन्तर्यार्थवाचक एवेतितात्पर्य्येणोक्तमानन्तर्य्यार्थक एवेति । नान्यार्थक इति यावत् ।

द्वितीयादिपदार्थावुद्दिश्येते—अत इति । विधिरर्थो यस्य तेन तव्यप्रत्ययान्तेन, न योग्यार्थकोऽत्रायं तव्यप्रत्यय

इति भावः । नन्वध्याहारस्य पूर्ववाक्योपजीवित्वादस्य तु प्रथमवाक्यत्वात् कथमत्राध्याहार इति चेद् । मैवम् । सूत्राणां विषयवाक्योपजीवित्वं सर्वमतेऽविरुद्धं तदभावे न वाक्यार्थसिद्धिरिति नियमस्याव्यभिचरितत्वात् । एवं च आत्मा वा रे द्रष्टव्य इति विषयवाक्येऽध्याहरणीयपदस्य विधिवाचकस्य तव्यप्रत्ययान्तस्य विद्यमानत्वात् तस्यैव विषयवाक्यस्थस्यात्र योजनामात्रत्वान्नोक्तशङ्काऽवकाशः ।

एवमुद्देशविवरणयोर्व्याख्याभूषणादिति व्याख्याऽलङ्कारोक्तरीत्योद्दिष्टस्यैवार्थस्य विवरणमाह ।

**तत्राथानन्तरमिति। धर्मजिज्ञासाविषयभूतधर्मस्वरूपतत्साधनतदनुष्ठानप्रकारतत्फलविषयकज्ञानानन्तरं "स्वाध्यायोऽध्येतव्य"इति विधीयमानसंस्कारादिपूर्वकं साङ्गवेदमधीत्य तत्र कर्मफलस्य क्षयाक्षयविधायकानि "अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति" "अपाम सोमममृता अभूम" "यत्र नोष्मा न च शीतं स्यान्न ग्लानिर्नाप्यरातय" इत्यादीनि "तद्यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयत" "अन्तवदेवास्य तद्भवति" "न ह्यध्रुवैः प्राप्यते ध्रुवं" "नास्त्यकृतः कृतेन" "प्लवा ह्येते अदृढा यज्ञरूपा" इत्यादीनि, च परस्परविरुद्धप्रकारकाणि वाक्यानि सामान्यतो दृष्ट्वा विशेषतो निर्णेतुमनीश्वरस्तन्निवृत्तये धर्मजिज्ञा-**

सायां प्रवृत्तस्तया सम्यङ्निर्णीतकर्मस्वरूपतदनुष्ठानप्रकारतत्फलकस्तथाभूतज्ञानमापद्यते तदनन्तरमित्यर्थः । विवेकादेः साधनचतुष्टयस्यात्रैवान्तर्भावान्न पृथग्ग्रहणापेक्षाऽपीति भावः।

तत्रेत्यादिना । तत्रानन्तर्यार्थकपदस्य विवृतिमाह । "धर्मजिज्ञासे"त्यारभ्य "न पृथग्ग्रहणापेक्षे"त्यन्तेन ग्रन्थेन। धर्मजिज्ञासाविषयभूतो यो धर्मस्तत्स्वरूपं च नित्यनैमित्तिककाम्यादिभेदादनेकविधं, तत्साधनानि च यागादीनि साङ्गानि, तस्यानुष्ठानप्रकारश्च हस्तक्रियाऽऽदयस्त,त्फलानि च स्वर्गादीनि, एतानि विषयो यस्य तथाभूतज्ञानस्यानन्तरमिति । तदेव प्रतिपादयति—विधिप्राप्तं साङ्गं वेदं संस्कारादिपूर्वकं यथा स्यात्तथाऽधीत्य जातसंशयस्तन्निवृत्तये धर्मजिज्ञासायां प्रवृत्तस्तया सम्यङ्निर्णीतकर्मस्वरूपादिकस्तथाभूतज्ञानमापद्यत इत्यन्वयः। स्वाध्यायशब्दोऽत्रार्थोपलक्षणपरः, संस्कारश्चोपनयनादिरूपः, साङ्गमङ्गैः सहितम्, अङ्गानि च—

छन्दः पादौ, शब्दशास्त्रं च वक्त्रं,
कल्पः पाणी, ज्यौतिषश्चक्षुषी, च ॥
शिक्षा घ्राणं, श्रोत्रमुक्तं निरुक्तं,
वेदस्याङ्गान्याहुरेतानि षट् चेति—

वचनात् । जातसंशय इत्युक्तं, तत्र बीजमाह । कर्मफलस्य क्षयाक्षयविधायकानि वाक्यानि, अत एव परस्परविरुद्धान्वयानर्हरूपः प्रकारोऽर्थो येषां तानि वाक्यान्येव कानि चित्पठ्यन्ते "अक्षय्यं ह वै चातुर्मास्ययाजिन" इत्यादीन्यक्षयफलत्वप्रतिपादकानि, यथेह "कर्मचितो लोकः क्षीयते" इत्यादीनि च क्षयप्रति-

पादकानीति विवेकः। **सामान्यत इति**। आद्यन्ततः। ननु ज्ञात-वेदार्थश्चेत्कथं न निश्चिनुयादित्याशङ्क्याह—**विशेषतो निर्णेतुमनीश्वर इति**। विचाराकुशलः, अध्ययनमात्रं न तात्पर्य-निर्णये नियामकं, किं तु षड्लिङ्गोपेतवाक्यविचार इति भावः। लिङ्गानि चोपक्रमादीनि वक्ष्यन्त उपरिष्टात्। तया धर्मजिज्ञासया सम्यगुपक्रमादिभिर्निर्णीतं कर्मस्वरूपादिकं येन सः, तथा च ज्ञानं कर्मस्वरूपादिविषयकनिर्णयात्मकं, कर्मफलविषयकसंशय-निवृत्तिफलिकैव कर्मस्वरूपादिविषयकज्ञानापेक्षेति भावः।

केचित्तु विद्याकर्मसमुच्चय एव भगवतः सूत्रकारस्याभिमेतः, वक्ष्यते च "सर्वापेक्षा यज्ञादिश्रुतेरश्ववदि"ति, तथा च कर्मण्य-ज्ञाते केन सह विद्यया समुच्चयः केन च विभाग इति विवेच-यितुं न शक्यते हेयोपादेयप्रतिपत्त्यभावात्, पूर्ववृत्ते तु कर्मज्ञाने काम्यं निषिद्धं च हेयं, नित्येन च कर्मणा समुच्चय इति प्रति-पत्तुं शक्यते, एतदर्थमेव धर्मविषयकं ज्ञानमपेक्षितमित्याहुः।

न चैतद् युक्तं "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसा नाशकेने"त्यादिना कर्मणां विविदिषाया-मेवोपयोगोक्ते,र्न फलोत्पत्तौ तत्प्रतिपादनेनैव तेषां नैराकाङ्क्ष्यात् तस्मादुक्तसिद्धान्त एव गरीयान्। अत्रेदमाकूतम्। अत्र वेदान्त-शास्त्रे श्रीभगवद्भावापत्तिलक्षणमोक्ष एव पुरुषार्थः आत्मत्वेन शाश्वतत्वेन च "निरञ्जनः परमं साम्यमुपैति" "पुष्टस्ततस्तेनामृत-त्वमेति" "न स पुनरावर्त्तते" इत्यादिश्रुतिभ्यः। स च भगवत्प्रसा-दलभ्यस्तत्साक्षात्कारैकलभ्यः "नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुधा श्रुतेन यमेवैष वृणुते तेन लभ्यः"।

भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः।
क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे॥

"यदा पश्यः पश्यते रुक्मवर्णं
कर्तारमीशं पुरुषं ब्रह्मयोनिम् ।
तदा विद्वान् पुण्यपापे विधूय
निरञ्जनः परमं साम्यमुपैति" ॥

इत्यादिश्रुतिभ्यः । तत्रापि भगवत्प्रसादे तत्स्वरूपगुणादिविषयकज्ञानवानेवाधिक्रियते ज्ञानिनोऽनन्यभागवतस्य भगवन्निरतिशयप्रीतिविषयत्वात् ।

"प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः" ।

इतिभगवद्वचनात् । तथाभूतस्य ज्ञानस्य श्रवणमननात्मकशास्त्रविचारजन्यत्वात् तदर्थकोऽयं शास्त्रविचारारम्भस्तस्माच्छ्रवणादिपूर्ववृत्तं कर्मस्वरूपादिज्ञानमेवापेक्षितम्, अतो धर्ममीमांसाविचारजातनिश्चयो मुमुक्षुः काम्यादिकर्मणां हेयतां, नित्यनैमित्तिकानां च भगवदाज्ञारूपाणां तत्प्रसादहेतुतया विविदिषाद्वारेणोक्तज्ञानकारणत्वं च निश्चित्य श्रवणादौ प्रवर्तते, तत्रैव कर्मविषयकज्ञानोपयोगात्तस्यैव श्रवणादिपूर्ववृत्तत्वं निश्चायत इति, एतच्चाग्रे ध्वनयिष्यते ग्रन्थकृद्भिरिति ।

ननु श्रवणादौ साधनचतुष्टयस्यान्तरङ्गत्वादवश्यापेक्षितत्वात्तस्यैव पूर्ववृत्तं निश्चेतव्यं, कर्मणस्तु विविदिषोत्पत्तौ विनियोगेन तयैव नैराकाङ्क्ष्याद् "विविदिषन्ती"तिश्रुतेः । साधनचतुष्टयं च नित्यानित्यवस्तुविवेकः, शमदमादिसाधनषट्कसंपद्, इहामुत्रफलभोगविरागः, मुमुक्षुत्वमिति, चेत्तत्राह—विवेकादेरिति । कर्मस्वरूपफलादिज्ञानेन जातनिर्वेदस्य विवेकादीनां स्वतः संपद्यमानत्वादिति भावः । एतावताऽऽनन्तर्यार्थकाथशब्दविवरणमुक्तम् ।

इदानीं पदान्तरे विव्रियेते ।
अत इत्यादिना ।

अतो हेतोरिति कर्मफलस्य सान्तत्वसातिशयत्वनिश्चयात् "तद्यथेह कर्मचितो लोकः क्षीयते" इति श्रुतेः, "आब्रह्मभुवनाल्लोकाः पुनरावर्त्तिनोऽर्जुने"ति स्मृतेश्च । ब्रह्मज्ञानस्य च निरतिशयानन्तफलकत्वनिश्चयात् । "तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय" ।

यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवाः ।
तदा देवमविज्ञाय दुःखस्यान्तं निगच्छति ॥

इत्याद्यन्वयव्यतिरेकवाक्येभ्यः "यो वा एतदक्षरमविदित्वा गार्ग्यस्माल्लोकात्प्रैति स कृपण" इतिश्रुतेरनात्मज्ञस्य कार्पण्यवत्त्वादियोगरूपनिन्दाश्रवणाच्च ब्रह्मजिज्ञासा कर्त्तव्येति यावत् । केनेत्यपेक्षायाम्, एभ्यो हेतुभ्यः कर्मफलादौ जातनिर्वेदेन श्रीभगवद्दर्शनस्य मोक्षासाधारणकारणत्वं श्रुत्वा तज्जन्यव्यवसायजन्यदिदृक्षाग्रहगृहीतेन श्रीपुरुषोत्तमप्रसादैकेप्सुनाऽऽचार्यैकदेवेन गुरूपसन्नेन गुरुभक्त्येकहार्देन मुमुक्षुणेत्यन्वे-

ति परीक्ष्य लोकान्कर्मचितान्ब्राह्मणो निर्वे-दमायात्" ।

यदा पश्यः पश्यते रुक्मवर्णं
कर्तारमीशं पुरुषं ब्रह्मयोनिम् ।
तदा विद्वान्पुण्यपापे विधूय
निरञ्जनः परमं साम्यमुपैति ॥
जुष्टं यदा पश्यत्यन्यमीशं
तन्महिमानमिति वीतशोकः ।
पृथगात्मानं प्रेरितारं च मत्वा
जुष्टस्ततस्तेनामृतत्वमेति ॥
भिद्यते हृदयग्रन्थिः छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे ॥
यमेवैष वृणुते तेन लभ्य-
स्तस्यैष आत्मा वृणुते तनुं स्वाम् ।
तमक्रतुं पश्यति वीतशोकः
धातुः प्रसादान्महिमानमीशम् ॥

"तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठं," "तस्मै स विद्वानुपसन्नाय सम्यक् प्रशान्तचित्ताय समन्विताय येना-

क्षरं परमं पुरुषं वेद सत्यं प्रोवाचतां तत्त्वतो ब्रह्मविद्याम् आचार्यदेवो भव,

यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ ।
तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः ।

इत्यादिश्रुतिभ्यः ।

हेतोरित्यत्रैकवचनं जात्यभिप्रायकम्, अन्यथा एभ्यो हेतुभ्य इत्युत्तरोक्तिविरोधात् । सान्तत्वं नाम ध्वंसाभावप्रतियोगित्वं, सातिशयत्वं चातिशयेन ज्ञानफलेन साहित्यं ज्ञानफलान्मोक्षादत्यन्तन्यूनमिति यावत् तयोर्निश्चयादिति समासः । तत्र प्रमाणमाह—तद्यथेति । ननूक्तवाक्यस्याक्षयत्वप्रतिपादकवाक्यान्तरेण सत्प्रतिपक्षताग्रस्तत्वाद्धेत्वाभासानुमानवत्प्रमाणाभासत्वात्कथं प्रामाण्यं, कथं वा निश्चायकत्वं, स्थाणुर्वा पुरुषो वेति वाक्यवदप्रमाणत्वमेवेति चेन्न । क्षयित्वप्रतिपादकवाक्यस्य न्यायसहकृतत्वेन प्राबल्यात्तेनाक्षयित्ववाक्यं सङ्कुच्यते, तथा चात्र प्रयोगः—दिव्यभोगाः सलोकाः, क्षयिष्णवः, कर्मजन्यत्वात्, मानुषभोगवत् । तस्मान्न सत्प्रतिपक्षलक्षणप्रमाणाभासत्वं नतरां निश्चायकत्वहानिरित्यर्थः । ननु तथाप्यक्षयवाक्यस्य निर्विषयत्वापत्त्या व्याकोपप्रसङ्गो दुर्वार इति चेन्न । तस्य कालभूयस्त्वविधानपरत्वात्सविषयत्वासिद्धिः । उक्तसातिशयत्वं व्याख्यास्यन् हेत्वन्तरमाह—ब्रह्मज्ञानस्य चेति । उक्तार्थे श्रुतिं प्रमाणयति—तमेवेति । अन्ययोगव्यवच्छेदार्थकैवकारं विवृण्वञ्छ्रुत्यन्तरमाह—यदेति । आदिना "न स पुनरावर्त्तते," "निरञ्जनः परमं साम्यमुपैति," "नान्यः पन्थाः विद्यतेऽयनाये" त्यादिवाक्यसं-

ग्रहः । अविदुषः केवलकर्मनिष्ठस्य दोषवत्त्वद्योतकहेत्वन्तरमाह–**अनात्मज्ञस्येति** । स्वपरस्वरूपादिज्ञानाभाववतः । कार्पण्यादीत्यत्रादिपदेन जन्मादिचक्रात्मकसंसारित्वग्रहः । तथा च श्रुतिः–"मृत्वा पुनर्मृत्युमापद्यतेऽद्यमानः स्वकर्मभि"रिति । हेत्वन्तरश्रुत्या द्रढयति–**यो वा इति** । अस्माल्लोकान्मनुष्यदेहात् । उक्तहेतून्समुच्चिनोति, वाक्यार्थं निरूपयिष्यमाणः–**एभ्यो हेतुभ्य इति** । ब्रह्मजिज्ञासा कर्त्तव्येति पूर्वोक्तमत्र सम्बध्यते । जिज्ञासोर्विशेषं विवक्षुः स्वयमेवाशङ्कते–**केनेति** । अत्र किंशब्दप्रयोगस्य विशेषविवक्षाबीजत्वात्तेन शङ्कोत्थानमिति भावः । अत्रोत्तरमाह–**मुमुक्षुणेति** । तमेव विशिनष्टि–**कर्मफलादाविति** । आदिना तदनुष्ठानादिग्रहः । निर्वेदो द्विविधः। सहेतुको, निर्हेतुकश्चेति । तत्र स्वरागविषयीभूतपुत्रकलत्रवित्तैश्वर्यादिध्वंसात्मकवियोगेन प्रतिकूलदारिद्र्यादिसंयोगेन हेतुना जातः सहेतुकः, स चाविवेकपूर्वकत्वाद्व्यभिचरितस्वभावः । यदि श्रीभगवतो निर्हेतुकापरिमितकरुणावरुणालयस्य माधवस्य कृपाकटाक्षावलोकितश्चेत्तर्हि तत्कृपाभाजनानाम्

तेषामेकान्तिनः श्रेष्ठा ये चैवानन्यदेवताः ।
अहमेव गतिस्तेषां निराशीःकर्मकारिणाम् ॥
अनन्याश्चिन्तयन्तो मां ये जनाः पर्य्युपासते ।
तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम् ॥

इत्युक्तलक्षणसम्पन्नानन्यभागवतानां, कृपापात्रं भूत्वा शास्त्रीयमार्गे प्रवृत्तो भगवन्तं भजन् तद्दार्ढ्यार्थं भूयो भूयो यतते ह्यनुतिष्ठति च, अन्यथा पुनर्भ्रश्येदपि, अनैकान्त्यस्वभावादेव । द्वितीयश्च, जन्मान्तरसहस्रार्जितपुण्यपुञ्जस्य "पुरुषत्वे चाविस्तरामा,त्मा स हि विज्ञानेन सम्पन्नतमो विज्ञातं वदति विज्ञातं पश्यति

श्वस्तनं वेद लोकालोकौ मर्त्येनामृतत्वमीप्सत्येवं सम्पन्नोऽथेत-रेषां पशूनामशनापिपासे एवाभिज्ञानं न विज्ञातं वदन्ति न विज्ञातं पश्यन्ति न विदुः श्वस्तनं लोकालोकाविति ता एता देवताः सृष्टाः, अस्मिन् महत्यर्णवे प्रापतस्तमशनापिपासाभ्यामन्ववार्जत्, ता एनमब्रुव"न्नायतनं नः प्रजानीहि यस्मिन्प्रतिष्ठिता अन्नमदामे-ति," ताभ्यो गामानयत्ता अब्रुवन् "न वै नोऽयमलमिति" ताभ्यो-ऽश्वमानयत्ता अब्रुवन् "न वै नोऽयमलमिति," ताभ्यः पुरुषमान-यत्ता अब्रुवन् "सुकृतं बतेति पुरुषो वाव सुकृतमिति" ।

अत्र जन्मसहस्राणां सहस्रैरपि सत्तमम् ।
कदा चिल्लभते जन्तुर्मानुष्यं पुण्यसञ्चयात् ॥
गायन्ति देवाः किल गीतकानि
धन्यास्तु ते भारतभूमिभागे ।
स्वर्गापवर्गास्पदभागभूते
भवन्ति भूयः पुरुषाः सुरत्वात् ॥
कर्माण्यसङ्कल्पिततत्फलानि
संन्यस्य विष्णौ परमात्मभूते ।
अवाप्य तां कर्ममहीमनन्ते
तमालयं ते त्वमलाः प्रयान्ति ॥

इत्यादिश्रुतिस्मृतिश्लाघितमनुष्यभावं श्रीहरिकृपाभूषण-भूषितस्य विक्षेपासहिष्णुतया बाल्यादेव प्रवृत्तौ ग्लानिमतः श्रवणपरायणस्य श्रवणलभ्यसत्प्रसङ्गलभ्यकथाश्रवणात् जीव-स्य कर्मफलानि दुःखात्मकानि श्रुत्वा वर्तमानशरीरोपल-ब्धानि दुःखानि स्वस्मिन्परस्मिंश्च भूयो भूयो जन्ममरणादि-लक्षणचक्रभ्रमणात्मकं दुःखमनुभूय जातवेपथोर्जायमानो निर्हे-तुकः । स च विवेकजन्यत्वान्मोक्षौपयिकाव्यभिचरितस्वभावः ।

दुःखं द्विविधम्। गर्भाद्यवस्थारूपम्, आध्यात्मिकादिभेदभिन्नं च। तत्राद्यं यथा—पितृमूत्रद्वारा निःसृत्य मातृयोनिप्रवेश,स्ततो गर्भेऽनुदिनं कललबुद्बुदपिण्डकाठिन्याद्यवस्थाप्राप्ति,स्ततः क्रमेणावयवेन्द्रियादियोग,स्ततश्चेतनीभाव,स्ततो मातापितृरेतोवैषम्यनिरूपितस्त्रीपुरुषषण्डभावप्राप्ति,रर्वाक्शिरा ऊर्द्ध्वपाज्जरायुवेष्टितो भूत्वा मलमूत्रागारे विष्ठाकृमिभिः सह वासः, प्रसवकाले योनिद्वारं प्राप्य यन्त्रेण पीड्यमान इव मूर्छितस्य पूतिव्रणात्कृमिक इव महता दुःखेन महीपतनं, कौमाराद्यवस्थाजन्यदुःखानुभवपूर्वकं मरणं, ततो धार्मिकश्चेत्तर्हि स्वर्गं गत्वा स्वपुण्यार्जितं सुखम्, असूयेर्ष्याऽऽदिजन्यं दुःखं चानुभूय धूममार्गेण पुनरावृत्त्य व्रीह्यादिभावप्राप्ति,स्ततः पेषणपाकभक्षाद्यवस्थोद्भवक्लेशानुभवपूर्वकं पितृरेतोभावप्राप्तिः,पुनर्मातृयोनिप्रवेशादिभिश्चक्रीभावेन संसारभ्रमणं, दुष्कर्मा चेन्नरकादिप्राप्तिः श्वसूकरसरीसृपस्थावरादिगतिश्चेति, गर्भोपनिषदि निपुणं प्रोक्तम्। द्वितीयं त्रिविधम्। आध्यात्मिकमाधिदैविकमाधिभौतिकं चेति। आद्यं द्विविधम्। शारीरमानसभेदात्। शिरोऽक्षिरोगादिज्वरादिकं शारीरं, कामक्रोधभयद्वेषलोभमोहविशादशोकासूयाऽपमानेर्ष्याऽऽदिजातं मानसम्। शीतोष्मवातवर्षाजलविद्युदादिसमुद्भवमाधिदैविकम्। मृगपक्षिमनुष्यराक्षससर्पादिभ्यो जातमाधिभौतिकमिति विवेकः। पुनश्च प्रकारान्तरेण निर्वेदो द्विविधः। जिहासाद्वारोद्भवविचारजातः, सद्योजातश्च। आद्यः सौभरिणा वैष्णवेन प्रोक्तः।

पद्भ्यां गता यौवनिनश्च जाता
दारैश्च संयोगगताः प्रसूताः।
दृष्टाः सुतास्तत्तनयप्रसूतिं
द्रष्टुं पुनर्वाञ्छति मेऽन्तरात्मा॥

द्रक्ष्यामि तेषामपि चेत्प्रसूतिं
मनोरथो मे भविता ततोऽन्यः ।
पूर्णोऽपि तत्राप्यवरस्य जन्म
निवार्यते केन मनोरथस्य, ॥

इत्यारभ्य,

यथा हि भूयः परिहाणदोषो
जनस्य दुःखैर्भविता न दुःखी ।
सर्वस्य धातारमचिन्त्यरूप-
मणोरणीयांसमतिप्रमाणम् ॥
सितासितं चेश्वरमीश्वराणा-
माराधयिष्ये तपसैव विष्णुम्, ॥

इत्यन्तेन । द्वितीयो ययातिवत् सद्योजायमानस्तथा च तेनैव गीतम् ।

न जातु कामः कामानामुपभोगेन शाम्यति ।
हविषा कृष्णवर्त्मेव भूय एवाभिवर्द्धते ॥
या दुस्त्यजा दुर्मतिभिर्या न जीर्यति जीर्यतः ।
तां तृष्णां सन्त्यज्यन् प्राज्ञः सुखेनैवाभिपूर्यते ॥
जीर्यन्ति जीर्यतः केशा दन्ता जीर्यन्ति जीर्यतः ।
धनाशा जीविताशा च जीर्यतोऽपि न जीर्यति ॥
पूर्वं वर्षसहस्रं मे विषयासक्तचेतसः ।
तथाऽप्यनुदिनं तृष्णा ममैतेष्वेव जायते ॥
तस्मादेतामहं त्यक्त्वा ब्रह्मण्याधाय मानसम् ।
निर्द्वन्द्वो निर्ममो भूत्वा चरिष्यामि मृगैः सह ॥

इत्यादि । तत्र सहेतुकस्य व्यभिचरितस्वभावेन न मोक्षोपयोगोऽनियतत्वात् । निर्हेतुक एव "जातनिर्वेद" इत्यत्र विवक्षितः ।

उक्तदुःखानां कर्मफलत्वाविशेषात्तद्दर्शनजात उक्तलक्षणो निर्वेदो यस्य तेनेत्यर्थः । निर्वेदफलं निर्दिशन्विशिनष्टि—**श्रीभगवद्दर्शनस्येत्यादि** । तद्दर्शनसाधनमाह—**श्रीपुरुषोत्तमप्रसादैकेप्सुनेति** । तद्दर्शनस्य तत्प्रसादैकलभ्यत्वात् । अनेन पूर्णनिष्कामत्वं द्योत्यते । आत्मानुभवमात्रलक्षणे कैवल्येऽपि निर्वेदवानित्यर्थः । तत्रापि कारणमाह—**आचार्यैकदेवेनेति**। आचार्य एवैको मुख्योऽद्वितीयो वा देव उपास्यो, भगवत्स्वरूपादिद्योतको वा यस्य तेन । एतेन देवानां भक्तिर्भगवत्प्रसादहेतुरिति पक्षो निरस्तः । "यो वै स्वां देवतामतियजति परस्यायै देवतायै च्यवते न परां प्राप्नोति पापीयान्भवती"त्यादिश्रुतेः। अन्यदेवोपासकानां दुर्बुद्धित्वं स्वयमेव गीतं श्रीमुखेन—

"अन्तवत्तु फलं तेषां तद्भवत्यल्पमेधसाम् ।
देवान् देवयजो यान्ति मद्भक्ता यान्ति मामपि ॥

यान्ति मद्याजिनोऽपि मामि"त्यादिना। अत्रापि कारणमभिधत्ते—**गुरूपसन्नेनेति** । आचार्य्यैकदेवत्वस्य गुरूपसत्तिलभ्यत्वात् । गुरूपसन्नस्य लक्षणगर्भितकृत्यमाह—**गुरुभक्त्येकहार्देनेति** । गुरुभक्तावेवैकं मुख्यं हार्दन्तात्पर्यं यस्य तेन गुरुभक्तिपूर्णहृदयेनेति यावत् । तत्र यथाक्रमं श्रुतिप्रमाणं पठ्यते—"**परीक्ष्ये**"त्यादिना—लोकानां कर्मजन्यत्वेन हेतुना क्षयिष्णुत्वं व्यनक्येत्यर्थः। यदा पश्यः द्रष्टा पुरुषं पश्यते तदैव पुण्यपापे विधूय साम्यमुपैतीत्यन्वयः । **निरञ्जनः** पुण्यादिलक्षणाञ्जनस्य नष्टत्वात् । पुरुषं विशिनष्टि—**रुक्मवर्णमिति** । प्रकाशात्मकं वर्णरूपं यस्य त "मादित्यवर्णन्तमसः परस्तादि"ति वाक्यान्तरात् । अनेन "नीरूपस्यैव ब्रह्मणो दर्शनं मोक्षहेतुरि"ति मन्यमानो निरस्तः । जीवेऽतिप्रसक्तिं वारयन्नाह—**कर्त्तारमिति** । विश्वस्येति शेषः ।

तत्र हेतुः—**ईशमिति** । चतुर्मुखस्यापि विश्वकर्तृत्वेशत्वयोः सत्त्वाद्व्यावृत्त्यर्थमाह—**ब्रह्मयोनिमिति** । चतुर्मुखस्यापि कारणं "यो ब्रह्माणं विदधाति पूर्वमि"तिश्रुतेः । यद्वा वेदस्यापि विधिद्वारेणेशनशीलत्वाज्जगन्निमित्तत्वाच्च, तत्रातिव्याप्तिवारणार्थमाह—**ब्रह्मयोनिम्** । वेदस्यापि कारणमित्यर्थः । साम्यं विशिनष्टि—**परममिति** । स्वरूपेण सार्वज्ञ्यादिगुणेन च साम्यात्परमत्वम् । ननु रूपाकृतिमद्ब्रह्मदर्शनं भवतु नाम मोक्षकारणं, तथाऽपि प्रत्यगभिन्नमेवेत्याशङ्कोपशमार्थं वाक्यान्तरमाह-**जुष्टमिति** । स्वस्मादन्यं सर्वनियन्तारं यदा पश्यति तदा तन्माहिमानमिति एति, गुणाभावश्छान्दसः । वैलक्षण्यं द्योतयति—**जुष्टम्** । ब्रह्मादिसेव्यम् । यद्वा ईशत्वेऽपि दयालुत्वं व्यनक्ति-**जुष्टम्** । भक्तैः प्रीतं स्वीयानां प्रीतिविषयमिति यावत् । नन्वन्यशब्दस्य देहादिभेदपरत्वाभ्युपगमे क्षत्यभावान्न प्रत्यग्भेदपरत्वमुदाहृतवाक्यस्येति चेत्तत्राह—**पृथगित्यादि** । आत्मानं प्रेरितारं प्रेरयितारं च पृथङ्मत्वा, तेन जुष्टो भगवता प्रीतः सन्नमृतत्वं मृत्युरूपसंसारनिवृत्तिलक्षणं मोक्षमेति प्राप्नोति । तदुपोद्बलनार्थं वाक्यान्तरमाह-**भिद्यत इति** । तस्मिन्सर्वज्ञे सर्वेश्वरे ब्रह्मणि दृष्टे सति । सर्वज्ञत्वं व्यनक्ति—**परावरे** अस्मदादिभ्य परे ऐश्वर्यज्ञानादिनोत्कृष्टा अपि ब्रह्मादयोऽवरे निकृष्टा यस्मात्तस्मिन् । हृदयग्रन्थिर्देहे तत्सम्बन्धिषु ह्यहंताममताऽऽत्मिका स्वयमेव भिद्यते, तन्निमित्तकाः संशयाश्च भगवद्दर्शनानुग्रहेण स्वयमेव च्छिद्यन्ते । **अस्य कर्माणीति** । अस्य विदुषो भगवत्साक्षात्कारवतः कर्माणि सञ्चितक्रियमाणप्रारब्धरूपाणि सर्वाण्यपि क्षीयन्ते नश्यन्तीत्यर्थः । "**यमेवैष**" इत्यादेर्व्याख्यानमुपरिष्टाद्वक्ष्यते । **तद्विज्ञानार्थम्** । तस्य वेदान्तवेद्यस्य ब्रह्मणः स्वरूपगुणादिविषयकविज्ञानार्थं साक्षात्कारानुभवार्थम् । स मुमुक्षुः । रिक्तहस्तत्वा-

णायाह–समित्पाणिरिति। उपलक्षणमेतत् पूजोपकरणस्य, यथाशक्ति पूजोपकरणहस्त इत्यर्थः। गुरोर्लक्षणमाह विशेषणद्वयेन–श्रोत्रियमिति। वेदान्तार्थावगाहिनम्। श्रोत्रियमिति विशेषणस्य सर्वसंशयच्छेदनार्थं संग्रहः, व्यतिरेके निन्दास्मरणात्।

भिन्ननावं श्रितः स्तब्धो यथा पारं न गच्छति।
ज्ञानहीनं गुरुं प्राप्य कुतो मोक्षमवाप्नुयादिति॥

न केवलं शास्त्रज्ञमात्रं, किं तु ब्रह्मनिष्ठं ब्रह्मस्वरूपगुणाद्यनुभवपरिपूर्णमनस्कम्। मुमुक्षोः शिष्यस्य लक्षणमाह-सम्यगुपसन्नाय। मायादम्भादित्यागपूर्वकाचार्यानन्याश्रिताय। तत्र हेतुः-प्रशान्तचित्ताय। प्रशान्तं वित्तलोकाद्येषणाशून्यं चित्तं यस्य तस्मा अत एव-शमान्विताय। विक्षेपादिशून्याय। कामादीनां विक्षेपहेतूनां नष्टत्वात्। कारणाभावे कार्य्याभाव इति न्यायात्। स विद्वानुक्तलक्षणो गुरुस्तस्मै उक्तलक्षणाय मुमुक्षवे शिष्याय तां ब्रह्मविद्यां प्रोवाच प्रकर्षेणोपदिशेत्। उपदेशप्रकर्षं व्यञ्जन्नाह। येन तत्त्वतः पुरुषं वेद। अनुभवतीति। तल्लक्षणं द्योतयन् विशिनष्टि-सत्यम्। उपलणमेतज्ज्ञानादीनाम्, "सत्यं ज्ञानमनन्तं ब्रह्मे" तिलक्षणलक्षितमित्यर्थः। येनेति। यच्छब्दो ब्रह्मविद्यापरामर्शपरः। यत्तदोर्नित्यसम्बन्धात्। लिङ्गव्यत्ययोऽत्र च्छान्दसः। यद्वा येनोपदेशेन। स्पष्टार्थकानि चान्यानि वाक्यानि।

**ब्रह्मणो जिज्ञासा ब्रह्मजिज्ञासेति, ब्रह्मण इति कर्मणि षष्ठी "कर्तृकर्मणोः कृती" ति शास्त्रात्।**

औपनिषदाभिमतं ब्रह्मपदार्थमाह—

**ब्रह्म चाचिन्त्यानन्तनिरतिशयस्वाभाविकबृहत्तमस्वरूपगुणाद्याश्रयभूतो रमाकान्तः श्री-**

पुरुषोत्तम एव "यः सर्वज्ञः सर्वविद्यस्य ज्ञानमयं तपः, तमीश्वराणां परमं महेश्वरं तन्देवतानां परमं च दैवतं, न तस्य कार्यं करणं च विद्यते पराऽस्य शक्तिर्विविधैव श्रूयते, स्वाभाविकी ज्ञानबलक्रिया चे"त्यादिश्रुतिभ्यः। तद्विषयकमेव ज्ञानं तथाभूतेष्यमाणज्ञानविषयिकैवेच्छेत्यर्थः । तथा च श्रुतिः—"आत्मा वा रे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" "सोऽन्वेष्टव्यः स विजिज्ञासितव्य इत्याद्या।

ब्रह्म चेति। तत्रेयत्तावच्छेदेन चिन्ताविषयत्वं चिन्त्यत्वन्तद्भिन्नत्वमचिन्त्यत्वम्। न च सर्वप्रमाणाविषयत्वमिति वाच्यम्। गगनकुसुमायमानत्वापत्तेः। देशकालवस्तुपरिच्छेदशून्यत्वमनन्तत्वम्। तत्र सर्वगतत्वं, देशपरिच्छेदशून्यत्वम्।

यच्च किंचिज्जगत्यस्मिन्दृश्यते श्रूयतेऽपि वा।
अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः॥

इति श्रुतेः।

मया ततमिदं सर्वं जगदव्यक्तमूर्त्तिना।
मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इवेति, स्मृतेश्च॥

सर्वकालवृत्तित्वेनाद्यन्तशून्यत्वं, कालपरिच्छेदशून्यत्वम्।

अनाद्यनन्तं महतः परं ध्रुवं निचाय्य तं मृत्युमुखात्प्रमुच्यते।
इति श्रुतेः।

नान्तं न मध्यं न पुनस्तवादिं पश्यामि विश्वेश्वर! विश्वरूपमिति भगवद्गीतावचनाच्च। परिच्छिन्नवस्तुविलक्षणत्वं वस्तुपरि-

च्छेदशून्यत्वम् "अस्थूलमनणु" इति श्रुतेः । विश्वात्मकत्वेन सर्वसामानाधिकरण्यार्हत्वाच्च । अन्तःप्रविष्टः शास्ता जनानां सर्वात्मा पतिं विश्वस्यात्मेश्वरमि"तिश्रुतेः । सर्वसामानाधिकरण्यार्हत्वादेव ।

नारायणः परो ध्याता ध्यानं नारायणः परः ।
स ब्रह्मा स शिवः सेन्द्रः सोऽक्षरः परमः स्वराट् ॥
इत्यादिसामानाधिकरण्यश्रुतेः ।
अहमात्मा गुडाकेश सर्वभूताशयस्थितः ।

इति विश्वात्मतामुक्त्वा; स्वस्य सर्वसामानाधिकरण्यार्हत्वं यावदध्यायसमाप्ति श्रीमुखेनैव गीतम् । न च वस्तुमात्राभावत्वं वस्त्वपरिच्छिन्नत्वमिति वाच्यम् । तथात्वे च देशकालयोरपि वस्तुत्वाविशेषेण वस्तुपदार्थ एवान्तःपातित्वाद् वस्तुपरिच्छेदेनैव परिच्छेदमात्रोपस्थित्याऽनन्तत्वसिद्धेस्तयोः पृथक्केनाभ्युपगमस्य वैयर्थ्यात् । तस्मादुक्तस्यैवार्थस्य वरीयस्त्वम् । निरतिशयत्वं,निर्गतोऽतिशयो यस्मात्तत्त्वम् । स्वाभाविकत्वं, स्वरूपवद्यावदात्मवृत्तित्वम्, अचिन्त्यानन्तानिरातिशयस्वाभाविकबृहत्तमस्वरूपगुणादिकमित्यर्थः । तत्र प्रमाणमाह—**यः सर्वज्ञ इत्यादिना** । **तद्विषयकमिति** । उक्तलक्षणब्रह्मविषयकमिति । तदेवाग्रेक्ष्यमाणं, तद्विषयिकैवेच्छा सम्पादनीयेति सिद्धान्तः । उक्तार्थे प्रमाणमाह—**तथा चेति** । सैव पठ्यते—"आत्मा वा रे" इत्यादिना ।

तदेव तत्त्वं वादिविवादपूर्वकं निर्णीयते ।

अथ किं प्रकारकं तत् ब्रह्मेति ।

**अथ किंप्रकारकं तद् ब्रह्मेत्यपेक्षायाम् ।**

किंशब्दोऽत्र संशयपरः । औपाधिकभेदाभेदाश्रयो, वा

जगदसन्ताभिन्नं, वा तदसन्तभिन्नं, वा चेतनाचेतनशरीरकत्वेन तद्विशिष्टं, वा स्वाभाविकभेदाभेदाधिकरणं, वेति यावत् ।

तत्राद्यं मायावादिमुखेनानूद्य दूषयितुमाह । अत्राहुः केचिदिति ।

**अत्राहुः केचि"त्सदेव सोम्येदमग्र आसीदे" "कमेवाद्वितीयम्" "आत्मा वा इदमेक एवाग्र आसीत्" "एको ह वै नारायण आसीदि"त्यादिश्रुतिभ्यः, स्वरूपत एकमेव ब्रह्माभेदाश्रयभूतम्, अनाद्युपाधिना च भेदः, तत्त्वमस्यादिवाक्यजन्यज्ञानात्तन्निवृत्तिरिति चेत् ।**

औपाधिकभेदाभेदवादिनो भास्करभट्टादयः । तमेव पक्षं विवृणोति—सदेव सोम्येत्यादिना तदनुवादः ।

एतन्मतं मायावादिमुखेन निराकरोति ।

तत्राहुरन्य इति ।

**तत्राहुरन्ये । नैतद्युक्तिमद्, विकल्पासहत्वात् ।**

मायावादिन इत्यर्थः ।

किं तदित्यपेक्षायामाह—नैतद्युक्तिमदिति । तत्र हेतुमाह—विकल्पासहत्वादिति ।

तमेव पञ्चधा विकल्प्याद्यं दूषयति ।

**तथा हि । न तावदुपाधिना छिन्नो ब्रह्मखण्डो जीवात्मा, ब्रह्मणोऽच्छेद्यत्वाद्, जीवस्य साद्यत्वापत्तेश्च ।**

नाप्यच्छिन्न एवाणुरूपोपाधिसंयुक्तो ब्रह्मप्रदेशविशेषो जीवः। ब्रह्मैकप्रदेश उपाधिसम्बन्धापत्त्या सर्वे दोषाः तस्यैव स्युः। उपाधौ गच्छति सति उपाधिना ब्रह्मप्रदेशाकर्षणानर्हत्वेनानुक्षणमुपहितब्रह्मप्रदेशभेदेन क्षणे क्षणे बन्धमोक्षौ च भवेताम्। आकर्षणपक्षाभ्युपगमे चाच्छिन्नत्वात् कृत्स्नस्य ब्रह्मण आकर्षणं स्यात्। तदसम्भवाभ्युपगमे पूर्वोक्तदोषतादवस्थ्यम्। अच्छिन्नब्रह्मप्रदेशेषु सर्वोपाधिसंसर्गेण सर्वजीवानां ब्रह्मण एव प्रदेशत्वेनैकत्वप्रतिसन्धानं स्यात्। प्रदेशभेदादप्रतिसन्धाने चैकस्यापि स्वोपाधौ गच्छति सति प्रतिसन्धानं न स्यात्।

नाप्युपाधिसंयुक्तं ब्रह्मस्वरूपमेव जीवः। ब्रह्मस्वरूपस्यैवोपाधिसम्बन्धेन जीवत्वापत्तेः, तदतिरिक्तानुपहितब्रह्मासिद्धेः।

न चोतोपाधिसंवलितश्चेतनान्तरमेव जीव इति चेतनान्तरानभ्युपगमात्। अभ्युपगमे च भेदस्यौपाधिकत्वसिद्धान्तभङ्गात्, परपक्षपातित्वापत्तेश्च।

नाप्युपाधिरेव जीवो बाह्यमतप्रसङ्गात्।

**तथा हीति**। अच्छेद्यत्वाच्छेतुमनर्हत्वात्। "निष्कलं निष्क्रियमि"त्यादिवाक्यात्। तत्रैव दोषान्तरमाह—**जीवस्येति**। तथात्वे तु "अजो ह्येको जुषमाणोऽनुशेते" "प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपी"त्यजत्वानादित्वनियमभङ्गप्रसङ्गादित्यर्थः।

द्वितीयं कल्पं दूषयति—**नाप्यवच्छिन्न एवेति**। ब्रह्मण एव जीवत्वात्तत्रैव सर्वदोषयोग इति यावत्। दोषान्तरमाह—विकल्पमुखेन। उपाधिना स्वगमनादौ स्वावच्छिन्नं ब्रह्माकृष्यते, न वेति। अन्त्ये दूषणमाह—**उपाधाविति**। नित्यमुक्तप्रदेशोऽकस्माद्बध्येत, अनादिबद्धश्च स्वयमेवाकस्मान्मुच्येतेति भावः। आद्यम्प्रत्याह—**आकर्षणपक्षाभ्युपगम इति**। **कृत्स्नस्येति**। मुक्तप्राप्यब्रह्माभावप्रसङ्गादिति भावः। ननु ब्रह्मण आकर्षणानर्हत्वादेव तदभाव इति चेत्तत्राहुः—**अच्छिन्नब्रह्मदेशेष्विति**। एकत्वप्रतिसन्धानं सर्वेषां जीवानां परस्परैकत्वज्ञानं भवेत्। भिन्ना इति चेत्तत्राहुः—**प्रदेशभेदादिति**। एकस्यापि स्वस्यापि।

तृतीयं निराकरोति। **नाप्युपाधिसंयुक्तं ब्रह्मस्वरूपमेवेति**। निषेधे हेतुः-**ब्रह्मस्वरूपस्यैवेति**। तत्रापि हेतुमाहुः-**तदतिरिक्तेति**। स्वरूपैकत्वस्य निर्विवादत्वात्। किं च ब्रह्मस्वरूपस्यैवोपाधिसम्बन्धः सहेतुको, निर्हेतुको वा। नाद्यो वक्तुं शक्यः, अप्रसिद्धत्वात्। अन्यथा कल्पनायामनवस्थाऽऽपत्तेः। नाप्यन्त्यः। मुक्तस्यापि पुनराकस्मिकबन्धापत्तिप्रसङ्गात्। आकस्मिकत्वाविशेषात्। न चानादिकर्मसम्बन्ध एवात्र कारणमिति वाच्यम्। ब्रह्मणः कर्मसम्बन्धाभ्युपगतौ कदाचिदपि निवृत्तिर्न स्यात्। तन्निवर्त्तकान्तराभावात्। अविद्यानिवर्त्तकस्यैव बन्धवत्त्वाभ्युपगमाच्चेति।

चतुर्थं प्रत्याहुः। **संवलितं चेतनान्तरमेवेति**। उतेति पक्षान्तरे। तत्र हेतवः, चेतनान्तरेत्यादयः। एभिस्त्रिभिर्दूषण-

अयमुक्तं भवति। चेतनान्तराङ्गीकारे नियमभङ्गः, औपाधिकभेदाभ्युपगमनियमभङ्गः परपक्षप्रवेशापत्तिश्चेति तच्चास्मदिष्टापन्नमिति भावः ।

चरमन्निराकरोति—नाप्युपाधिरेवेति । तत्र हेतुः । बाध्येति । सर्वशास्त्रासम्मतत्वादित्यर्थः ।

एवं तन्मतं निराकृत्य स्वमतं स्थापयन्ति मायावादिनः, तस्मादित्यादिना—

**तस्मात् क्षराक्षरात्यन्ताभिन्नं सजातीयविजातीयस्वगतभेदत्रयशून्यं सर्वविशेषविनिर्मुक्तमनुभूतिमात्रं ब्रह्म सर्ववेदान्तप्रतिपाद्यम् ।**

क्षराक्षरसकलप्रपञ्चविवर्त्ताधिष्ठानमिति भावः । त्रिविधभेदशून्यं, तत्र घटाद् घटान्तरस्य भेदः सजातीयः, घटात् पटादीनां भेदो विजातीयः, एकस्मिन् शरीरे करचरणाद्यवयवभेदः स्वगतभेद इति विवेकः । तस्य त्रिविधस्यापि ब्रह्मण्यभावः । तत्र न तावत्सजातीयः, चेतनान्तराभावात् । नापि विजातीयः, अचेतनवस्त्वन्तराभावात् । तत्प्रतीतेर्भ्रान्तिकल्पितत्वेन तन्मिथ्यात्वाभ्युपगमात् । नापि स्वगतभेदः, ब्रह्मणः सावयवत्वसविशेषत्वाद्यनभ्युपगमादित्यर्थः ।

एवं मायावादिमतमनूद्य भेदवादिमुखेन निराकरोति, अयुक्तं चैतदिति ।

**इति प्राप्ते प्राहुरन्ये ।**

**अयुक्तं चैतद्, भेदविषयकवाक्यसहस्रविरोधात् ।**

ननु वेदान्तशास्त्रे भेदाभेदविषयकाणामुभ-यविधवाक्यानां श्रूयमाणत्वेऽपि जीवेश्वरभेदस्य प्रत्यक्षसिद्धत्वेन भेदप्रतिपादकवाक्यकदम्बस्य भेदानुवादपरत्वेन दौर्बल्याद्, अभेदपराणां तु वाक्यानामन्यविषयाभावेन स्वार्थ एव प्रामाण्यात् प्राबल्यम्, उपक्रमादिषड्लिङ्गोपेतत्वाच्च, तस्मादत्यन्ताभिन्नं ब्रह्म सर्ववेदान्तार्थभूतमिति चेद् न ।

इत्युक्तप्रकारेण मायावादिनिर्णये प्राप्ते सति एतदयुक्तं चेत्यन्ये भेदवादिनो माध्वाः प्राहुरित्यन्वयः । अयुक्तं च, अनुपपन्नम् । अनुपपत्तौ हेतुमाहुः—भेदविषयकेति । वाक्यानि तु—भोक्ता-भोग्यं प्रेरितारञ्च मत्वा पृथगात्मानं प्रेरितारञ्च मत्वा, जुष्टं यदा पश्यत्यन्यमीशं, सर्वं प्रोक्तं त्रिविधं ब्रह्ममेतत्, प्रधानक्षेत्रज्ञपतिर्गुणेशः संसारबन्धस्थितिमोक्षहेतुः, नित्यो नित्यानां चेतनश्चेतानामेको बहूनां यो विदधाति कामान्, ज्ञाज्ञौ द्वावजावीशानीशौ, अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः, द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते, ऋतं पिबन्तौ सुकृतस्य लोके, गौरनाद्यवती, अजामेकां लोहितशुक्लकृष्णामि,ति । भेदव्यपदेशाच्च, अधिकन्तु भेदव्यपदेशात्, शारीरश्चोभयथाऽपि हि भेदेनैनमधीयते, भेदव्यपदेशाच्चान्य इति ।

द्वाविमौ पुरुषौ लोके क्षरश्चाक्षरमेव च ।
क्षरः सर्वाणि भूतानि कूटस्थोऽक्षरमुच्यते ॥
उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।
यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ॥

यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः ।
अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ॥

इत्यादीनि बहुशोऽनुसंधेयानि । स्यादेतत् । तथाऽपि भेद वाक्यानां निर्बलत्वात्कल्पितभेदविषयकत्वेन नैराकाङ्क्ष्याच्च तद्बाधो न दोषावह इत्याशयेन भूयोऽप्युत्थायाशङ्क्यते ।

**ननु वेदान्तशास्त्र** इति । वेदान्तशास्त्रे उभयविधवाक्यानां श्रूयमाणत्वेऽपि तयोर्मध्येऽभेदपराणां वाक्यानां प्राबल्यमित्यन्वयः । तदर्थं हेतुमाहुः—**भेदप्रतिपादकवाक्यकदम्बस्य दौर्बल्याद्** दुर्बलत्वं हेतुना द्रढयति । जीवेश्वरभेदस्य प्रत्यक्षसिद्धत्वेन न स्वार्थपरत्वमिति शेषः । ननु स्वार्थबाधे कथं तेषां नैराकाङ्क्ष्यमिति चेत्तत्राहुः—**भेदानुवादपरत्वेनेति** । कल्पितभेदप्रतिपादनेन नैराकाङ्क्ष्यमित्यर्थः । वाक्यानामुभयविधत्वं विशेषणमुखेन विव्रियते—भेदाभेदविषयकाणामिति । भेदाभेदौ विषयौ येषां तेषामिति समासः । भेदविषयकाणि वाक्यानि न स्वार्थवन्ति, तद्विषयस्य जीवेश्वरभेदरूपस्य प्रत्यक्षसिद्धत्वात् । यद्वाक्यं प्रमाणान्तरसिद्धविषयकं, तन्न स्वार्थपरम्, अग्निर्हिमस्य भेषजमित्यादिवदिति प्रयोगोऽप्यत्र सूचितो भवति । हेत्वन्तरमाहुः—**अभेदपराणां तु वाक्यानां स्वार्थ एव प्रामाण्यादिति** । तुशब्दोऽत्यन्तवैलक्षण्यपरो भेदाभेदवाक्ययोर्दौर्बल्यप्राबल्यरूपं महद्वैलक्षण्यं द्योतयति । तत्र हेतुमाहुः—**अनन्यविषयाभावेनेति** । अनन्यविषयकत्वेनेत्यर्थः । अत्र प्रयोगः—अभेदविषयकवाक्यानि, स्वार्थपराणि, अनन्यविषयकत्वात्, विधिवाक्यवदिति, यद्यद्वाक्यमनन्यविषयकं तत्तत्स्वार्थपरम् । तत्रैव हेत्वन्तरमाहुः—**उपक्रमादीति** । तथा हि ।

उपक्रमोपसंहारावभ्यासोऽपूर्वताफले ।
अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णय इति—

वचनात् । अत्रामनन्तिच्छन्दोगाः । सदेव सोम्येदमग्र आसीदे,कमेवाद्वितीयमित्युपक्रमः । ऐतदात्म्यमिदं सर्वं, तत्सत्यं, स आत्मा, तत्त्वमसी,त्युपसंहारः। तत्त्वमसीति नवकृत्वोऽभ्यासः। अभेदस्य प्रमाणान्तरानवगतत्वादपूर्वता । येनाश्रुतं श्रुतं भवतीत्यादिरर्थवादः । मृल्लोहतप्तपरशुग्रहणादिदृष्टान्त उपपत्तयः । आचार्यवान्पुरुषो वेद, तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ संपत्स्ये, इति फलम् । उपसंहरते—तस्मादिति । उक्तहेतुसमुदायादिति शङ्काग्रन्थार्थः ।

अथैतन्निराकरोति—नेत्यादिना । भवदुक्तो राद्धान्तोऽनुपपन्न इत्यर्थः । प्रतिज्ञाऽर्थे हेतुमाह—उभयविधेति ।

**उभयविधवाक्यानामपि तुल्ययोगक्षेमत्वात्। तथा हि। न तावत्प्रत्यक्षगोचरो जीवेश्वरभेदः तयोरतीन्द्रियत्वेन प्रत्यक्षाविषयत्वात्। "नेन्द्रियाणि नानुमानामि"ति श्रुतेः। अनुयोगिप्रत्यक्षानिरूप्यत्वाद्भेदप्रत्यक्षस्य। एवं भेदस्य प्रत्यक्षगोचरत्वासिद्ध्या तद्विषयकवाक्यानामनुवादपरत्वानर्हतया स्वार्थ एव सुप्रमाणत्वात्। नापि तात्पर्य्यनिर्णयौपयिकषड्लिङ्गोपेताभेदवाक्यप्रतिपाद्यं ब्रह्म, सर्वधर्मविनिर्मुक्तस्य निर्विशेषस्य ब्रह्मणो वाच्यत्वानभ्युपगमाद्, वाक्यजातस्य किंचिद्धर्मावच्छिन्नवस्तुप्रतिपादनपरत्वानियमात्। एवं सर्वप्रमाणाविषयत्वेन गगनकु-**

सुमायमानत्वप्रसङ्गाच्च। वाच्यत्वे चास्य प्रत्यक्षा-भ्युपगमप्रसङ्गाद्,अस्मन्मतप्रवेशाच्च। नापि षड्लि-ङ्गोपेतत्वेनाभेदवाक्यानां प्राबल्यं वक्तुं शक्यते, भेद-वाक्यानामपि तथात्वश्रवणात्। तथा ह्याम्नायतेऽन्तर्यामिब्राह्मणे भेदस्य षड्लिङ्गोपेतवाक्यवाच्यत्वं बृहदारण्यके-वेत्थ त्वं काप्यन्तर्यामिणमित्युपक्रमः। एष त आत्माऽन्तर्यामीत्युपसंहारः। एष त आत्मेत्येकविंशतिकृतोऽभ्यासः। अन्तर्यामिताया अप्राप्तत्वादपूर्वता। स वै ब्रह्मविदित्यादि फलम्। तच्च त्वं याज्ञवल्क्य सूत्रमविद्वांस्तवान्तर्यामिणं ब्रह्म गवीरुद्रजसे मूर्द्धा ते पतिष्यतीति निन्दारूपोऽर्थवादः। यस्य पृथिवी शरीरं यं पृथिवी न वेदेत्याद्युपपत्तिरिति। तथैवान्यत्राप्यूह्यम्। तस्मादभेदवाक्यानां साम्यप्रतिपादकताऽभ्युपगमेन सार्थक्याद् भेद-वाक्यानामपि प्राबल्यादत्यन्तभेदविषयकमेव वेदान्तशास्त्रं तत्सिद्धं चेतनाचेतनात्यन्तभिन्नं ब्रह्म।

तदेव विवृणोति—तथा हीति। यदुक्तो भेदवाक्यानामनुवादपरत्वेन दुर्बलत्वादभेदवाक्यानां प्राबल्यमिति दौर्बल्यरूपान् हेतूंस्तावन्निर्मूलयन्ति—न तावदिति। तत्र प्रमाणमाह—नेन्द्रियाणि नानुमानमिति श्रुतेः। भेदप्रत्यक्षस्येति। भेदश्चात्र

जीवेश्वरविषयको विवक्षितो,न भेदमात्रं, स च भेदोऽन्योन्याभावरूपस्तत्प्रत्यक्षस्यानुयोगिप्रत्यक्षतन्त्रत्वात् । उपसंहरति—एवमिति । भेदस्य प्रत्यक्षविषयताऽसिद्धौ सत्यां तद्विषयकवाक्यानां च सुतरां निर्विषयकत्वापत्तौ, सुतमां च तेषां स्वार्थपरत्वं, तस्मात्स्वरूपासिद्धोऽयं हेतुर्न प्रमाणपदारोहणार्ह इत्यर्थः । एतेनैव भेदवाक्यानां स्वार्थपरत्वप्रतिपादनेन द्वितीयस्याभेदपराणां स्वार्थ एव प्रामाण्यादित्यस्यापि हेतोरनैकान्तिकत्वेन हेत्वाभासत्वं व्याख्यातं, स्वार्थप्रमाणत्वस्योभयत्राविशेषात् । किं च स्यादेतदभेदवाक्यानां षड्लिङ्गोपेतत्वं, तथाऽपि नैतावता भवतामिष्टसिद्धिरित्याशयेनोपसंहरन्नाह । **नापि तात्पर्येत्यादिना** । सजातीयादिभेदशून्यं सर्वविशेषरहितं तत्त्वं षड्लिङ्गोपेतवाक्यानां वाच्यतयाऽभ्युपगतं न वेति विवेचनीयम् । नाद्यो वक्तुं शक्यत इत्याह । **नापीति** । उक्तप्रकारं ब्रह्म तात्पर्यनिर्णयौपयिकषड्लिङ्गोपेताभेदवाक्यप्रतिपाद्यं न भवतीति । तत्र हेतुः—**ब्रह्मणो वाच्यत्वानभ्युपगमात्** । एतत्प्रपञ्चयन्विशिनष्टि—**सर्वधर्मविनिर्मुक्तस्य** । सर्वे धर्माः शक्तिगुणादयस्तैः शून्यस्य । **अत एव निर्विशेषस्येति** । किं च तथात्वे द्वैतापत्तिर्दुर्वारेत्याह । **वाक्यजातस्येति** । नाप्यन्त्य इत्याह । **एवं सर्वप्रमाणाविषयत्वेनेति** । अप्रामाण्ये फलं दर्शयन्हेतुमाह । **गगनकुसुमायमानत्वेति** । व्यतिरेके दोषमाह । **वाच्यत्वे चेति** । **अस्मदिति** । अपसिद्धान्तापत्तेरित्यर्थः । वाच्यत्वे द्वैतापत्तिरवाच्यत्वेऽप्रमाणत्वमित्युभयतःपाशा रज्जुरिति भावः ।

अथ तृतीयस्यापि हेत्वाभासतां प्रपञ्चयंस्तन्निराकरोति—**नापीत्यादिना** । **तथात्वश्रवणादिति** । षड्लिङ्गोपेतत्वश्रवणात् । तदेव प्रपञ्चयति—**तथा हीत्यादिना** । अ-

न्यत्राप्यूह्यम्। उपनिषदन्तरेष्वपि चिन्तनीयमित्यर्थः। उक्तस्य हेतोर्भेदवाक्येष्वप्यव्यभिचारादनैकान्तिकत्वेन हेत्वाभासत्वं सुव्यक्तमित्यर्थमुपसंहरन् स्वसिद्धान्तमाह । तस्मादिति । अत्यन्तभेदविषयकमेव वेदान्तशास्त्रमिति विज्ञायते। कुतः भेदवाक्यानामपि प्राबल्यादिति । नन्वेवमभेदवाक्यसमुदायबाधोऽत्रापि तुल्य इति चेत्तत्राहुः। अभेदवाक्यानां साम्यप्रतिपादकताऽभ्युपगमेन नैराकाङ्क्ष्यादित्यर्थः। ननु द्वैतापत्तिदोषाद् ब्रह्मणो वाच्यत्वानभ्युपगमेऽपि नोक्तदोषप्रसरस्तस्य लक्षणाविषयत्वाभ्युपगमात्–तथा चैष वाक्यार्थः। सर्वज्ञसर्वशक्त्याश्रयविश्वनियन्तृजगज्जन्मादिकारणं ब्रह्म तत्पदार्थः। बुद्ध्याद्यवच्छिन्नश्चेतनांशोऽल्पशक्त्याद्याश्रयो जीवक्षेत्रज्ञादिशब्दाभिधेयस्त्वंपदार्थः। उभयत्रस्यूताऽभिन्ना सत्ताऽसिपदार्थः। एवं तत्त्वंपदार्थयोः परस्परविरुद्धधर्मावच्छिन्नतयाऽभेदान्वयोऽनुपपन्नो, यथा सोऽयं देवदत्त इत्यत्र तद्देशकालवैशिष्ट्यैतद्देशकालवैशिष्ट्ययोरितरेतरात्यन्तविरोधात्तत्पिण्डमात्रशक्यैकदेशभूतं भागलक्षणया पदाभ्यामुपस्थाप्यते उभयपदार्थाश्रितानां परस्परविरोधहेतूनां शक्यैकदेशानां सार्वज्ञ्यादीनामल्पशक्त्यादीनां च त्यागेनोभयत्रानुगताखण्डत्वेनोभयपदार्थाभेदान्वय इति चेद् । नैवम् । यः सर्वज्ञः सर्ववित्सत्यकामः सत्यसङ्कल्पः, स्वाभाविकी ज्ञानबलक्रिया च, सर्वनामा सर्वकर्मा सर्वलिङ्गः सर्वकामः सर्वधर्मः सर्वरूप, इति अविनाशी वा अरेऽयमात्माऽनुच्छित्तिधर्मा, न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यतेऽविनाशित्वाद्,न हि श्रोतुः श्रुतेः, न हि मन्तुर्मतेः न हि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यतेऽविनाशित्वादि,त्यादिश्रुतिभिः स्वाभाविकत्वेनोद्घोषितानां यावदात्मवृत्तीनामुभयपदार्थनिष्ठधर्माणां त्यक्तुमशक्यत्वात् । त्यागे प्रमाणाभावाच्च । तत्र न तावच्छब्दः,अप्रसिद्धत्वात्।न च नेह नानाऽस्ति किं चन,

मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यती,त्यादीनां सत्त्वान्ना-
प्रामाण्यमिति वाच्यम् । तेषां निरतिशयबृहत्स्वरूपगुणशक्त्याश्रय-
स्य ब्रह्मपदार्थस्य भगवत एकत्वप्रतिपादनपरत्वात्। तस्य चास्मद-
भीष्टतमत्वात् । न च ब्रह्मवृत्तिधर्मनिषेधाविषयिकेयं श्रुतिः, केवलो
निर्गुणश्चेतिश्रुत्यैक्यार्थादिति वाच्यम् । महाऽनुपपत्तिमत्त्वात् ।
न हि महाऽऽदरेण स्वाभाविकयावदात्मवृत्तिधर्मान्स्वयमेव प्रतिपाद्य
भूयस्तन्निषेधे प्रवर्त्तेत सर्वज्ञा भगवती श्रुतिः । तथात्वे चोन्मत्तप्रज-
ल्पितमिव श्रुतिवचनस्यानाप्तत्वप्रसङ्गात् । न चैवं निर्गुणवाक्य-
विरोधापत्तिरिति वाच्यम्। तस्य प्राकृतगुणनिषेधेन कृतार्थत्वात्।
किं चैषाऽऽनन्दस्य मीमांसेत्युपक्रम्य मनुष्यानन्दप्रभृति चतुर्मुखा-
नन्दावसानमुत्तरोत्तरशतगुणानन्दान् प्रपञ्च्य; सर्वेषां परिच्छिन्ना-
नन्दाश्रयत्वं च निर्णीय; यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सह,
आनन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्चने,ति मन्त्रेण ब्रह्मण आन-
न्दलक्षणगुणस्यापरिच्छिन्नत्वेन तस्य सर्वभयनिवृत्तिरूपमोक्षप्रदान-
शक्तियोग उक्तस्तैत्तिरीये, तथाभूतगुणस्य तुच्छत्वे मोक्षविधा-
यकश्रुतेः सुतरां बाधो नालोच्यते देवानांप्रियैः पण्डितमानिभिः ।
तत्सिद्धं ब्रह्मणः स्वाभाविकगुणनिषेधे शब्दस्यामानत्वमिति ।
नापि तर्कः। नैषा मतिस्तर्केणापनेयेतिश्रुतेः। अचिन्त्या खलु ये भा-
वा न तांस्तर्केण योजयेदितिमनुस्मृतेश्च निश्चयात्। तर्काप्रतिष्ठा-
नादितिन्यायाच्चेति । अश्रुतिमूलकतर्कस्याप्रामाण्यकथनात् ।
न हि वायोः स्पर्शोऽग्नेरौष्ण्यं जलस्य शैत्यमिति केनाप्यनुन्मत्तेन त-
र्ककुशलेन पुरुषेण निषेद्धुं शक्यते, स्वाभाविकत्वात्। तथैव ब्रह्म-
धर्मा अपि निषेधगन्धसम्बन्धानर्हा इति। किं च तत्त्वमादिपदल-
क्ष्यं वस्तु पदान्तरवाच्यं न वेति विवेचनीयम्।नाद्यः। पूर्वोक्तद्वैताप-
त्तिदोषस्य तादवस्थ्यात्। नान्त्यः। अप्रमाणकत्वेन तुच्छत्वात्। न च

तस्यापि लक्ष्यत्वान्नोक्तदोष इति वाच्यम्। लक्ष्यस्य लक्ष्यत्वेऽनवस्थाऽऽपत्तिप्रसङ्गात्। किं च सोऽयं देवदत्त इतिदृष्टान्ते देशकालयोरनित्यसम्बन्धत्वाद्धेयत्वं, पिण्डस्य च शक्यैकभागस्य रूपाद्यनेकविशेषवत्त्वात् पिण्डशब्दवाच्यत्वाच्चोपादेयत्वम। एवं हेयत्वोपादेयत्वयोः सम्भवात् भागत्यागलक्षणा कल्पने ब्रह्मणि, प्रकृते तु धर्मधर्मिणोः स्वाभाविकसम्बन्धश्रवणान्न हेयता, लक्ष्यभागस्य च निर्विशेषत्वादवाच्यत्वाच्च नोपादेयत्वम्। एवं हेयोपादेययोरभावान्न भागलक्षणासम्भवः, विषमदृष्टान्तत्वात्। वाच्यत्वलक्ष्यत्वयोः सामानाधिकरण्यनियमाच्च। अपि चोक्तन्यायः सत्यादिवाक्ये तुल्यो द्रष्टव्यः। तथा हि। सत्यादिवाक्यार्थेऽपि वाच्यत्वे पूर्वदोषव्याप्तेर्लक्षणैवाकामेनापि त्वयाऽङ्गीकर्त्तव्या। एवं तर्हि सत्यादिवाक्ये का वा लक्षणेति विवेचनीयं, जहत्स्वार्थाऽजहत्स्वार्था, जहदजहत्स्वार्था वेति। नाद्यः पक्षः। गङ्गायां घोष इत्यत्र शक्यस्य प्रवाहस्य त्यागात्तीरस्याशक्यस्य कल्पनावत् सत्यज्ञानानन्दानां पदार्थानां शक्यभूतानां त्यागादसत्यमज्ञानं दुःखमित्येतद्वाक्यार्थोऽभ्युपगतः स्यात्। नापि द्वितीयः। द्वैतापत्तेः, परमतप्रवेशाच्च। नापि तृतीयः। उक्तप्रकारेण हेयोपादेयभागासंभवात्। किं च, निर्धर्मके सम्बन्धाभावात्। तदभावे सुतरां लक्षणाऽभाव इत्यर्थः। न च शाखाचन्द्रन्यायेन कल्पितसम्बन्धेनापीष्टार्थसिद्धिरिति वाच्यम्। विषमदृष्टान्तत्वात्। तथा हि। शाखाचन्द्रयोः सम्बन्धिनोः प्रत्यक्षप्रमाणगोचरत्वेनानेकधर्मवत्त्वेन च सम्बन्धित्वकल्पनायोग्यत्वात्। दार्ष्टान्तिके तु सर्वविशेषशून्यतया सर्वप्रमाणाविषयत्वाद् न शशशृङ्गकल्पे वस्तुनि सम्बन्धित्वकल्पनाऽवकाश इति। किं बहुना, वाच्यत्वानभ्युपगमे सर्वथा लक्षणोपपत्तिरेव, वाच्यस्यैव लक्ष्यत्वनियमादिति पूर्वमेवोक्तम।

तथाऽत्र प्रयोगः। लक्ष्यं, न निर्वाच्यं, शब्दार्थत्वात्, कुसुमितद्रुमा गङ्गेत्यादिवदित्यलं विस्तरेण।

एवं परमतं निराकृत्य स्वसिद्धान्तमाहुः। तात्सिद्धमित्यादिना। किं च तत्त्वमसीत्यत्र षष्ठ्यन्तात्तत्पदात् सुपां सुलुगितिसूत्रेण षष्ठीविभक्तेर्लुकि कृते तत्त्वमसीति वाक्यस्यापि भेदपरत्वं सुव्यक्तमिति विवक्षितार्थः।

एतन्मतं विशिष्टाद्वैतवादिमुखेन निराकरिष्यन्नाह-आहुरेक इति।

**इतिप्राप्ते प्राहुरेके नैतद्रमणीयम्। अभेदश्रुतीनां सर्वस्वार्थत्यागेनात्यन्तबाधप्रसङ्गाद्, अपि तु चेतनाचेतनवस्तुजातस्य ब्रह्मविशेषणत्वात्तद्विशिष्टं चैकं सर्वज्ञं सर्वशक्ति अनवधिकातिशयानन्तकल्पाणगुणगणाकरं ब्रह्म वेदान्तशास्त्रप्रतिपाद्यम्। एवं चेतचेतनयोर्ब्रह्मविशेषणत्वेऽपि तद्भिन्नत्वान्न तद्गुणसांकर्यशङ्कागन्धोऽपीति।**

इति प्राप्ते नैतद्रमणीयमित्येके प्राहुरित्यन्वयः। एतत्पूर्वोपन्यस्तं न रमणीयम्, अङ्गीकारार्हन्न भवतीत्येके विशिष्टाद्वैतं ब्रह्माभ्युपगच्छन्तो वदन्तीत्यर्थः। तत्रहेतुः—अभेदश्रुतीनां बाधप्रसङ्गादिति। स्वार्थत्यागादित्यर्थः। उपलक्षणार्थोऽयं हेतुर्भेदनिन्दाश्रवणाच्च। तत्सर्वं परादाद्य आत्मनोऽन्यत्र सर्वं वेदेत्यादिश्रुतेः। किं तावद्रमणीयं भवतामित्यपेक्षायां स्वसिद्धान्तमाहुः—अपि त्विति। एवं सिद्धान्त इत्यर्थः। तदेवोपन्यासमुखेनाहुः—चेतनाचेतनेत्यादिना। तथा चैवं वाक्यार्थः। तत्त्वमिति सामानाधिकरण्येन जीवशरीरतया जीवप्रकारं ब्रह्मैवाभि-

हितम्। एवमभिहिते सत्ययमर्थो ज्ञायते त्वमिति यः पूर्वं देहाधिष्ठातृतया प्रतीतः स परमात्मशरीरतया परमात्मप्रकारभूतः परमात्मपर्यन्तः पृथक्स्थितिप्रवृत्त्यनर्हः। अतस्त्वमिति। त्वत्प्रकारविशिष्टन्त्वदन्तर्यामिणमेवाचष्ट इति। अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणीति, ब्रह्मात्मकतयैव यस्य जीवस्य शरीरिणः स्वनामभाक्त्वात्। तत्त्वमिति सामानाधिकरण्यप्रवृत्तयोर्द्वयोरपि पदयोर्ब्रह्मैव वाच्यं, तत्र तत्पदं जगत्कारणभूतं सकलकल्याणगुणगणाकरं निर्विकारमाचष्टे, त्वमिति च तदेव ब्रह्म जीवान्तर्यामिरूपेण स्वशरीरं जीवमाचष्ट इत्यादि।

एवं तन्मतमनूद्य तन्निरसितुमुपक्रमते।

अत्र ब्रूम इति।

अत्र ब्रूमः नैतच्चारुतरं स्वारस्याभावात्।

तथा हि। व्यावर्त्तकत्वं तावद्विशेषणात्वमिति सर्वपक्षसामान्यम्। एवं चिदचिद्वस्तुनोर्ब्रह्मविशेषणात्वाभ्युपगमे किं वा वस्तु ताभ्यां व्यावर्त्तकाभ्यां व्यावृत्तं विवक्षितमिति विवेचनीयम्। न च तावच्चेतनाचेतनभूतावेव ताभ्यामेव व्यावर्तेतेति वाच्यम्। अत्यन्तासम्भवाद्। एकस्यैव वस्तुनः कर्मकर्तृवद्व्यावर्त्यव्यावर्त्तकत्वादृष्टश्रुतत्वाद्। नापि वस्त्वन्तरं व्यावर्त्यमिति वाच्यम्। तत्त्वत्रयभिन्नपदार्थान्तराभावाद् अनभ्युपगमाच्च। अपि च चेतनाचेतनविशिष्टब्रह्माद्वैताभ्युपगमेऽपि ब्रह्मणश्चेतनाचेतनाभ्यां

भेदस्तयोश्च परस्परभेदः स्वाभाविकोऽभ्युपगम्यत एव भवद्भिः । अन्यथा स्वभावसाङ्कर्यप्रसक्तेः । एवं भेदमप्यङ्गीकृत्य पुनर्विशिष्टाङ्गीकारात्मकगौरवाद्वरीयस्त्वं स्वाभाविकभेदाभेदमतस्यैव लाघवात् । तस्माच्चेतनाचेतानात्मजगद्भिन्नाभिन्नस्वभावं ब्रह्म सर्ववेदान्तप्रतिपाद्यं तदेवन्न जिज्ञासाविषयतया सूत्रितं श्रीभगवता बादरायणेनेति । तदेव ह्यौपनिषदानां तत्त्वम् ।

ननु स्वाभाविकभेदाभेदवादेऽपि ब्रह्मण स्वत एव जीवभावाभ्युपगमाद् गुणवद्दोषाश्च स्वाभाविका भवेयुरिति निर्दोषब्रह्मतादात्म्योपदेशा विरुद्धा एवेति चेन्न । स्वरूपतो जीवेशयोरैक्यानभ्युपगमात् । तथा हि । ब्रह्मणश्चेतनाचेतनयोश्च स्वरूपेण भेदः, इतरेतरात्यन्तविलक्षणत्वात् । अस्थूलमनणिवत्यादिश्रुतेः । तत्र चेतनस्याणुत्वेन निर्देशार्हत्वम्, अचेतनस्य च स्थूलत्वेन ब्रह्मणस्तयोर्वैलक्षण्येनेति विवेकः । एवमेव तस्य तयोश्च सर्वात्मत्वसर्वनियन्तृत्वसर्वव्यापकत्वस्वतन्त्रसत्त्वसर्वाधारत्वादियोगेन ब्रह्मात्मकत्वतन्नियम्यत्वतद्व्याप्यत्वतत्तन्त्रसत्त्वपराधेयत्वादियोगेन चा-

**भेद इति एष सर्वभूतान्तरात्मा अन्तःप्रविष्टः शास्ता जनानाम् ।**

अत्रैवंप्राप्ते नैतच्चारुतरमिति ब्रूमः प्रतिजानीमः । नत्वप्र-सयान्तशब्दप्रयोगात्पूर्वोक्तानां पक्षाणामत्यन्ततुच्छत्वं सूचितं प्रतिज्ञातेऽर्थे हेतुमाहुः—**स्वारस्याभावादिति** । अस्वारस्यं व्यनक्ति । **तथा** हीत्यादिना । उक्तविशेषणलक्षणेऽन्यत्संमतन्त्र-माहुः—**सर्वपक्षसामान्यमिति** । किं च विशेषणस्य व्याव-र्त्त्यभावे साफल्यमिति प्रसिद्धे तस्य चात्राभाव इति विक-ल्पमुखेनाह—एवमित्यादि । तत्राद्यं दूषयति—**न च नार्थादिति** । तत्र हेतुः—**असंभवादिति** । असम्भवत्त्वमपि हेतुना द्रढ-यति—एकस्येत्यादि । प्रत्यक्षश्रुत्यादिप्रमाणशून्यत्वादित्यर्थः । द्वि-तीयं निर्मूलयति—**नापीति** । तच्च हेतुभ्यां दृढीकरोति—**तत्त्व-त्रयभिन्नपदार्थान्तराभावादिति** । उपास्यफलादिभेदादे-रत्रैवान्तर्भावादित्यर्थः । नापि तार्किकादिवत्पदार्थान्तराभ्युप-गमः शक्यते वक्तुमपसिद्धान्तापत्तेरिति तात्पर्येण द्वितीयहेतुक-थनम्—**अनभ्युपगमाच्चेति**। ननु चेतनविशिष्टस्याचेतनविशिष्टं व्यावर्त्त्यं, तद्विशिष्टस्य च चेतनविशिष्टं व्यावर्त्यमतो व्यावर्त्याभा-वाभावान्नोक्तदोष इति चेन्न। विशिष्टस्यैकत्वाभ्युपगमात् । अन्यथा विशिष्टाद्वैतसिद्धान्तस्य भङ्गप्रसङ्गात् । अपि च चेतनाचेतनविशि-ष्टाभ्यामितरेतरद् व्यवच्छिद्यतेऽतस्तयोः साफल्यमिति । सत्यं नात्र विवादावकाशः, तथाऽप्युभयविशिष्टस्य व्यावर्त्याभावतादवस्थ्य-मेवेति दोषान्तरमाह—**अपि चेति** । भेदः स्वाभाविकोऽभ्युप-गम्यत एव भोक्तृभोग्यनियन्त्रात्मकविभागो निरुपाधिकः स्वरू-पकृतः । एवकारोऽत्रायोगव्यवच्छेदपरः । भोक्त्रादिविभागो न

स्वाभाविक इति वक्तुं न शक्यत इत्यर्थः । **भवद्भिरिति** । स्वपक्षासम्भवमालोकयद्भिरकामैरपि । तथा च विशिष्टस्याभेदो-भोक्तृभोग्यनियन्तॄणामितरेतरस्वाभाविको भेदश्च तव श्रीमुखेनैव प्रतिपाद्यते । स्वाभाविकभेदाभेदाश्रयं ब्रह्मेत्यस्मत्पक्षः सुतरां सिद्धः। विशिष्टाङ्गीकारस्तु केवलो भवतां गौरवावह एवेति भावः। स्वाभाविकभेदानङ्गीकारे दोषमाह—**अन्यथेति** । साङ्कर्यं च, भोक्तरि भोग्यत्वनियन्तृत्वयोः समावेशः, भोग्ये भोक्तृत्वनियन्तृत्वयोः, नियन्तारि भोक्तृत्वभोग्येत्वयोः समावेशोऽनुसन्धेयः। जीवगता गुणा ज्ञातृत्वादयो भोग्यवर्गेऽचेतनभूते ब्रह्मणि च प्राप्नुयुः, तद्गुणाः सत्त्वादयो दोषाः परिणामादयश्च जीवे ब्रह्मणि च प्राप्नुयुः, ब्रह्मधर्माः सार्वज्ञ्यनियन्तृत्त्वशास्त्रयोनित्वादयो जीवात्मनि भोग्यवस्तुनि चेति महादूषणकदम्बापात इति निर्गलितार्थः। किं च, "गौरवं च परित्यज्य लाघवं तु समाश्रयेदि"ति लौकिकन्यायमाश्रित्य गौरवलाघवयोर्विवेकमाह—**एवं भेदमपी ति** । स्वाभाविकमिति भेदविशेषणमत्र योज्यम्, अन्यथाऽतिप्रसङ्गात्। अथ स्वसिद्धान्तमाह—**तस्मादिति**। गौरवलाघवयोर्विवेकालोचनादित्यर्थः। चेतनश्चाचेतनश्चात्मा स्वरूपं यस्य तथाभूतं यज्जगत्तेन भिन्नाभिन्नः स्वभावो यस्य तथाभूतं ब्रह्म सर्वशास्त्राऽर्थभूतमित्यर्थः। तदेव सूत्रकृतामभिप्रेतमित्याह—**तदेवात्रेति**। अत्रास्मिन्नुपक्रमपठितसूत्रे। तत्रैवात्मनिष्ठार्हतां द्योतयति—**तदेव हीति** । श्रीबादरायणसूत्रनिर्णीतमेवौपनिषदानामुपनिषत्प्रतिपाद्यतत्त्वनिष्ठानां तत्त्वमिति सिद्धान्त इत्यर्थः । एतदुक्तं भवति । शास्त्रे तावत् सदेव सोम्येदमग्र आसीदे,कमेवाद्वितीयम्,आत्मा वा इदमेक एवाग्र आसीद्, एको ह वै नारायण आसीत्, तत्त्वमस्ययमात्मा, ब्रह्म आत्मैवेदं सर्वं, सर्वं खल्विदं ब्रह्म,त्वं वा अहमस्मि भगवो देवते

अहं वै त्वमसि देवते, तदात्मानमेवावेदा,हं ब्रह्मास्मी,ति तदनन्य-
त्वमारम्भणशब्दादिभ्य, इत्यादीनामभेदवाक्यानां", नित्यो नित्या-
नां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्, ज्ञाज्ञौद्वावजा-
वीशनीशौ, अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगा-
मजोऽन्यः,जुष्टं यदा पश्यत्यन्यमीशं तन्महिमानमिति वीतशोकः,
पृथगात्मानं प्रेरितारं च मत्वा, जुष्टस्ततस्तेनामृतत्वमेति, प्रधान-
क्षेत्रज्ञपतिर्गुणेशः, अक्षरात्परतःपरः, तस्मिल्लोकाः श्रिताः सर्वे,
तदु नात्येति कश्चन, भीषास्माद्वातः पवते भीषोदेति सूर्यः
भीषास्मादग्निश्चेन्द्रश्च मृत्युर्धावति पञ्चमः, यद्भूतयोनिं प्रवदन्ति-
धीराः, एष योनिः सर्वस्य स्थावरस्य चरस्य च सर्वाल्लोकानीशते
ईशिनीभिः सर्वस्य प्रभुमीशानं सर्वस्य शरणं सुहृत्, तमीश्वराणां
परमं महेश्वरं, न तत्समश्चाभ्यधिकश्च दृश्यते पराऽस्य शक्तिर्वि-
विधैव श्रूयते स्वाभाविकीज्ञानबलक्रिया च, सर्वस्य वशी सर्व-
स्येशानः, विवक्षितगुणोपपत्तेश्च, सर्वधर्मोपपत्तेश्च, सर्वोपेता च,
भेदव्यपदेशाच्चान्य, अधिकं तु भेदनिर्देशादि"त्यादिभेदपराणां
सर्वं तं परादाद्योऽन्यत्रात्मनः सर्वं वेदेत्यादिभेदनिषेधपराणां
अथात आदेशो नेति नेति, अन्यत्र धर्मादन्यत्राधर्माद्, अस्थूलम-
नणु,इत्यादिनिषेधविषयकाणां" च श्रवणाद् न तेषामितरेतरबा-
धकभावो वक्तुं शक्यः। तुल्यबलत्वात् तच्चोभयेषां भेदाभेदवि-
षयकाणां षड्लिङ्गोपेतत्वप्रतिपादनेन पूर्वमेव साम्यं निर्णीतम्।
एवं सर्वेषामपि स्वार्थे प्रामाण्यसिद्धये भिन्नाभिन्नब्रह्मसूत्रकृद्भि-
र्निर्णीतं तेनाभिप्रायेण तद्घटकसूत्राणि प्रणीतवान् अंशो
नानाव्यपदेशात्, अन्यथा चापि दासकितवादित्वमधीयते एके,
उभयव्यपदेशात्त्वहिकुण्डलवत्,शारीरश्चोभयेऽपि हि भेदनैनमधी-
यते, इत्यादीनि। अतश्चैवं वाक्यार्थः,तत्त्वमसि,सर्वं खल्विदं ब्रह्म,-

श्यादिभ्यश्चिदचिदात्मनोर्ब्रह्मतादात्म्योपदेशस्य तयोर्ब्रह्मात्मकत्वेन ब्रह्मायत्तस्थितिप्रवृत्तिकत्वेन ब्रह्मव्याप्यत्वेन च स्वार्थपरत्वं समञ्जसं तत्र ब्रह्मात्मकत्व नाम ब्रह्मात्मा यस्य चेतनाचेतनवस्तुजातस्य तद्ब्रह्मात्मकं तस्य भावस्तत्त्वं, तेन एष मे आत्माऽन्तर्यामी एष सर्वभूतान्तरात्मा सर्वव्यापी सर्वभूतान्तरात्मा पतिं विश्वस्यात्मेश्वरम्, आत्मेति तूपगच्छन्ति ग्राहयन्ति च, अहमात्मागुडाकेश सर्वभूताशयस्थितः, क्षेत्रज्ञं चापि मां विद्धि, अहं भवो भवन्तश्च सर्वे नारायणात्मकाः, ।

इन्द्रियाणि मनो बुद्धिः सत्त्वं तेजो बलं धृतिः ।
वासुदेवात्मकान्याहुः क्षेत्रं क्षेत्रज्ञ एव च, ॥

इत्यादिश्रुतिस्मृतिसूत्रेभ्यः सर्वात्मा स्वतन्त्रसत्ताऽऽश्रयः परब्रह्म श्रीपुरुषोत्तम इति सिद्धम् ।

स्वतन्त्रसत्त्वं च आत्मतन्त्रत्वे सति स्वायत्तस्थितिप्रवृत्तिकत्वं नियन्तृत्वादिवदसाधारणधर्मविशेषस्तस्य च भगवद्ब्रह्मात्मसन्नारायणादिशब्दवाच्ये श्रीकृष्ण एवान्वयः । तस्यैव सर्वानियन्तृत्वात् नियतृत्वस्वतन्त्रसत्त्वयोः सामानाधिकरण्यनियमात्, सदेव सोम्येदमग्र आसीद्, एतदक्षरस्य प्रशासने गार्गि ! सूर्याचन्द्रमसौ विधृतौ तिष्ठतः, भीषास्माद्वातः पवते, आत्मा हि परमस्वतन्त्रोऽधिगुणः, न तत्समश्चाभ्यधिकश्च दृश्यते, न चेशिता नैव च तस्य लिङ्गं, सकारणं कारणाधिपाधिपः, न तस्य कश्चिज्जनिता न चाधिपः, सर्वस्य चाहं हृदि सन्निविष्टो मत्तः स्मृतिर्ज्ञानमपोहनं च, ।

बुद्धिर्ज्ञानमसंमोहः क्षमा सत्यं दमः शमः ।
भवन्ति भावा भूतानां मत्त एव पृथग्विधाः, ॥

इत्याद्यन्वयव्यतिरेकसावधारणवाक्येभ्यः तदेव सर्वात्मत्वं

पुरस्कृत्य तद्विषयकत्वेनाभेदविषयकवाक्यजातस्य प्रवृत्तिः। एवं तस्य सर्वात्मनो भगवतः श्रीकृष्णस्यात्मीयनियम्यपरतन्त्रसत्त्वाश्रयं चिदचिद्रूपं विश्वमिति फलितम्। परतन्त्रसत्त्वं च परायत्तस्थितिप्रवृत्तिकत्वम्। तच्च नियम्यवर्गाश्रितं,तदसाधारणधर्मत्वात्। यदासीत्तदधीनमासीदि,ति तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाती,त्यादिश्रवणात्।

ससुरासुरगन्धर्वसयक्षोरगराक्षसम्।
जगद्वशे वर्त्ततेऽदः कृष्णस्य सचराचरम्॥

अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्त्तते।

इत्यादिस्मरणाच्च। परतन्त्रसत्त्वं द्विविधं, कूटस्थविकारिभेदात्। कौटस्थ्यं नाम जन्मादिविकारशून्यत्वे सति शाश्वतत्वं, तदधिकरणं जीवक्षेत्रज्ञपुरुषादिशब्दवाच्यं चेतनवस्तु, अजो ह्येको जुषमाणोऽनुशेते, न जायते म्रियते वा विपश्चित्,

न जायते म्रियते वा कदाचि-
न्नायं भूत्वा भविता वा न भूयः।
अजो नित्यः शाश्वतोऽयं पुराणो-
न हन्यते हन्यमाने शरीरे॥

इत्यादिवचनेभ्यः। विकारवत्त्वे सति नित्यत्वं द्वितीयं, तदधिकरणं चाचेतनं प्रधानमायाऽऽदिशब्दाभिधेयम्, अजामेकां लोहितशुक्लकृष्णां, गौरनाद्यन्तवती,

त्रिगुणं तज्जगद्योनिरनादिप्रभवाप्ययम्।
अचेतना परार्था च नित्या सततविक्रिया॥
तदेतदक्षयं नित्यं जगन्मुनिवराखिलम्।
आविर्भावतिरोभावजन्मनाशविकल्पवदि-

त्यादिवचनात्। तथा च परतन्त्रसत्त्वविषयकत्वेन भेद-

शास्त्रस्य प्रवृत्तिः, तथैव तेषां नैराकाङ्क्ष्यं च। एवमेव भेदनिषेधपराणां चेतनाचेतनवृत्तिस्वतन्त्रसत्त्वनिषेधविषयकत्वेन नेतिनेतीत्यादिनिषेधपराणां ब्रह्मणः सर्ववैलक्षण्यप्रतिपादनेन च तथात्वमिति निरवद्यम्। इत्थं विश्वात्मपरब्रह्मसर्वज्ञसर्वशक्तिस्वतन्त्रसत्त्वावच्छिन्नतत्पदार्थाभिन्नतदात्मकपरतन्त्रसत्ताऽऽश्रयचेतनत्वंपदार्थावच्छिन्नसर्वान्तरात्मा वासुदेवस्त्वंपदार्थोऽसीति वाक्यार्थः। स च शक्यत्वान्मुख्य एव, ब्रह्मणः सर्वात्मत्वेन स्वतन्त्रसत्त्वाश्रयत्वेन च सर्वशब्दवाच्यत्वात्।

ननु परब्रह्मणः श्रीपुरुषोत्तमस्य नारायणादिपदार्थस्य सर्वात्मनस्तत्पदार्थत्वे न कश्चिद्विवादावकाशः, श्रौतत्वात्। परंतु जीवान्तर्यामिणस्त्वंपदार्थत्वं कथमिति वक्तव्यं, त्वंपदस्य जीवविषयकत्वातिप्रसिद्धत्वादिति चेन्न। विश्वात्मत्वेन सर्वशब्दवाच्यत्वादेवेति ब्रूमः। यथाऽग्नेर्ढगित्यत्राग्निशब्दोऽकारगकाराद्यवच्छिन्नानुपूर्वीकाग्निशब्दपरः, अग्नौ जुहोतीत्यत्र च स एवाग्निशब्दो दहनप्रकाशनादिधर्मावच्छिन्नपदार्थोपस्थापनपरः। एवमुभयार्थप्रतिपादकत्वं शक्यत्वात्तयोर्मुख्यमेवेति शाब्दिकानां राद्धान्तः। तथैवात्रापि सर्वेषां चेतनाचेतनवस्तुजातवाचकानां तत्तत्पदार्थवाचकत्वेऽपि तत्पदार्थान्तरात्मभूतब्रह्मपरत्वमविरुद्धं, सर्वात्मत्वात्। यथा चतुर्मुखादिशरीराणि तत्तदवच्छिन्नाः तत्तच्चेतयितारश्च चतुर्मुखादिशब्दवाच्यास्तेषां शक्या एव तैरभिधीयन्ते स्वशक्तिभिरेव, तथैव तेषां चतुर्मुखादिपिण्डतत्तदवच्छिन्नक्षेत्रज्ञाभिधानपरत्वेऽपि तस्य तत्तदन्तरात्मत्वाद् ब्रह्माभिधानपरत्वं प्रधानमेवेति सुशकं वक्तुमिति भावः। एतदभिप्रायमाश्रित्य वस्तुजातस्य ब्रह्मतादात्म्यमुद्घोषयन्ति श्रुतयः, ऐतदात्म्यमिदं सर्वं, सर्वं खल्विदं ब्रह्म, भोक्ता भोग्यं प्रेरितारं च मत्वा सर्वं प्रोक्तं

त्रिविधं ब्रह्ममेतत्, नारायणः परो ध्याता ध्यानं नारायणः परः इत्याद्याः ।

ननु पूर्वदृष्टान्तोक्ताग्निशब्दस्योभयाभिधानपरत्वं पाणिन्यादिस्मृतिविधेयत्वाद् उक्तार्थे प्रमाणत्वं सुशकं, न तथोक्तार्थः प्रमाणपदवीमारोहति, प्रमाणशून्यत्वात् । न चोक्तोपमानमेवात्र प्रमाणमिति वाच्यम्। अश्रौतस्योपमानस्यातिदुर्बलत्वादिति चेन्न । नामानि सर्वाणि यमाविशन्ति, सर्वे वेदा यत्पदमामनन्ति, नमामः सर्ववचसां प्रतिष्ठा यत्र शाश्वती,त्यादिशास्त्रस्यैवात्र प्रमाणत्वात् । तत्सिद्धं भगवतः सर्वात्मत्वेन, विश्वस्य च तदात्मकत्वेन तत्तादात्म्योपदेशार्हत्वमिति। तथा चोक्तं श्रीभगवद्भिराद्याचार्य्यचरणैः—

सर्वं हि विज्ञानमतो यथार्थकं
श्रुतिस्मृतिभ्यो निखिलस्य वस्तुनः ।
ब्रह्मात्मकत्वादिति वेदविन्मतं
त्रिरूपताऽपि श्रुतिसूत्रसाधितेति ॥

एष श्लोको वेदान्तरत्नमञ्जूषायां निपुणं व्याख्यातः श्रीपुरुषोत्तमाचार्यचरणै,र्विस्तरभिया नात्र व्याख्यायते । किंच ब्रह्मायत्तस्थितिप्रवृत्तिकत्वेनापि जगतो ब्रह्मतादात्म्योपदेशः सुशकः । यद्यदायत्तस्थितिप्रवृत्तिकं तत्तदभेदव्यपदेशार्हमिति व्याप्तिमामनन्तिच्छन्दोगाः प्राणसंवादे, न वै वाचो न चक्षूंषि न श्रोत्राणि न मनांसीत्याचक्षते, प्राण एवैतानि सर्वाणि भवतीत्यादिना । ब्रह्मव्याप्यत्वेनापि वस्तुजातस्य ब्रह्मतादात्म्यं सुघटितमेव ।

यच्च किञ्चिज्जगत्यस्मिन् दृश्यते श्रूयतेऽपि वा ।
अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः ॥

द्यावा पृथिव्योरिदमन्तरं हि व्याप्तं त्वयैकेन दिशश्च सर्वाः इति शास्त्रवचनात् ।

योऽयं तवागतो देव ! समीपं देवतागणः ।
स त्वमेव जगत्स्रष्टा यतः सर्वगतो भवान् ॥

सर्वं समाप्नोषि ततोऽसि सर्व इतिघटकस्मृत्या व्याप्यस्य व्यापकाभिन्नत्वनिर्देशार्हत्वं प्रतिपादितम् ।

इत्थं सामान्येनोक्तं तत्त्वं श्रुत्वा; विशेषतो वाक्यार्थं श्रोतुकामा निर्णीतार्थे शङ्कामुद्भावयन्ति—नन्वित्यादिना ।

यथा ब्रह्मणो गुणाः स्वाभाविकाश्च श्रूयन्ते स्वाभाविकी ज्ञानबलक्रिया चेत्यादिना, तथा जीवगतदोषा ब्रह्मण्येव स्वाभाविकाः स्युस्तयोरेकत्वादित्यर्थः। उक्तदोषं परिहरन्समाधत्ते—नेति । नोक्तशङ्काऽवकाश इति प्रतिजानाति। प्रतिज्ञातार्थे हेतुमाह—स्वरूपत इत्यादि । स्यादेतद्यदि जीवेशस्वरूपैक्याङ्गीकारो, न तु सोऽस्ति, अपि तु तद्विलक्षणमेवेत्याशयेन व्यञ्जन् वाक्यार्थमाह—तथा हीत्यादिना । प्रतिज्ञातं विवृणोति—ब्रह्मण इत्यादि । उक्तार्थे हेतुमाह—इतरेतरेति । तत्र चेतनः स्वरूपेण परिच्छिन्नः, अणुपरिमाणकत्वात् । अचेतनोऽपि तथैव स्थूलाद्यनेकरूपत्वाद् । ब्रह्म तूभयविलक्षणं त्रिविधपरिच्छेदशून्यत्वात् । तच्चोक्तं पूर्वमेवानन्तपदव्याख्याने तदेवात्र श्रुतिमुखेन द्रढयति—अस्थूलेति । स्थूलादिविलक्षणमित्यर्थः । श्रुत्युक्तवैलक्षण्यं विभजते तत्रेति । तत्र तेषु त्रिषु मध्ये । ब्रह्मणस्तयोरिति । तत्पदार्थस्य भोक्तृभोग्यवृत्त्यणुत्वस्थूलत्वधर्मावच्छिन्नपरिमाणधिकरणयोश्चेतनाचेतनयोरित्यर्थः । एतेन भोक्तृभोग्यनियन्तृवृत्तिस्वाभाविकभेदनिरूपणेन चेतनानामपीतरेतरभेदोऽर्थात्सिद्धो भवति "अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्य इति श्रुतेः।

एवं भेदप्रकारो निरूपितः। इदानीमभेदप्रकारमाह—एवमेवेति। एवमेवाभेद इत्यन्वयः। यथा स्वाभाविको भेदस्तथैवाभेद इत्यर्थः। तमेवाभेदं दर्शयति—तस्येत्यादिना। तस्य सर्वात्मत्वादियोगेन तयोश्च ब्रह्मात्मकत्वादियोगेनेति क्रमेणान्वयः। तत्र शास्त्रं प्रमाणयति—एष सर्वभूतान्तरात्मेत्यादि। एतानि च क्रमतः सर्वात्मत्वादिविशेषणेषु प्रमाणतया योज्यानि, तान्येव च व्यतिरेकमुखेन ब्रह्मात्मकत्वादिविशेषणेष्वपि प्रमाणत्वेनानुसन्धेयानि।

यच्च किञ्चिज्जगत्यस्मिन् दृश्यते श्रूयतेऽपि वा।
अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः॥

आत्मा हि परमः स्वतन्त्रोऽधिगुणः, तस्मिंल्लोकाः श्रिताः सर्वे, इत्यादिश्रुतिभ्यः। यद्यदात्मकं यन्नियम्यं यद्व्याप्यं यत्तन्त्रसत्ताकं यदाधेयं च तत्तदभिन्नत्वनिर्देशार्हं पृथिवीघटादिवद्, अग्निधूमवत्, प्राणेन्द्रियवद्, भूतभौतिकवच्च। किं च। यथा घटो द्रव्यं पृथिवी द्रव्यमित्यत्र द्रव्यत्वावच्छिन्नस्य घटत्वावच्छिन्नपृथिवीत्वावच्छिन्नयोश्च सामानाधिकरण्यं मुख्यं, विशेषस्य सामान्याभिन्नत्वनियमात्। तथैव सार्वज्ञाद्यनन्तगुणावच्छिन्नस्यापरिच्छिन्नशक्तिवैभवस्य ब्रह्मणः स्वात्मकचेतनाचेतनवस्त्ववच्छिन्नतदन्तरात्माभिन्नत्वमपि सुव्यक्तम्। एतदर्थकानि तत्त्वमस्यादिवाक्यानी-

ति तात्पर्यार्थः । तस्मात्स्वभावतोऽपास्तसमस्तदोषोऽनन्ताचिन्त्यविचित्रयावदात्मवृत्तिस्वाभाविककल्याणगुणशक्तिवैभवाश्रयो जगज्जन्मादिहेतुरखिलशास्त्रैकवेद्यो मुक्तप्राप्यः परब्रह्मभगवदादिशब्दाभिधेयश्चिदचित्पदार्थभिन्नाभिन्नसम्बन्धाश्रयः श्रीपुरुषोत्तमो रमानिवासोऽत्र जिज्ञास्यो मुमुक्षुभिरिति निर्गलितोऽर्थः ।

एवमुक्तसिद्धान्ते तत्पदार्थो निरूपितः ।

तत्रैव व्याप्तिं दर्शयन्ननुमानमाह—यद्यदात्मकमित्यादि । तथा हि । जग, द्ब्रह्माभिन्नं भवितुमर्हति, तदात्मकत्वाद्, यो यदात्मकः स तदभिन्नो दृष्टो यथा मृदात्मको घटो मृदभिन्ननिर्देशार्हस्तद्वत् । तन्नियम्यत्वाद् । यो यन्नियम्यः स तदभिन्ननिर्देशार्हः यथा जीवनियम्यं शरीरं जीवाभिन्नं प्रतीयते तद्वत् । तद्व्याप्यत्वाद्, यो यद्व्याप्यः स तदभिन्ननिर्देशार्हः, यथा वन्हिव्याप्यो धूमस्तदभिन्नस्तद्वत् । तदधीनत्वात्, यद्यदधीनं तत्तदभिन्ननिर्देशार्हं यथा प्राणायत्त इन्द्रियगणस्तदभिन्ननिर्देशार्हस्तद्वत् । तदाधेयत्वाद्, यो यदाधेयः स तदभिन्ननिर्देशार्हः यथा भौतिकं स्वकारणरूपाधिकरणमहाभूताभिन्ननिर्देशार्हं तद्वदित्यादि । अत्राभिन्नत्वं च पृथक्स्थितिप्रवृत्त्ययोग्यत्वं विवक्षितं, तथा च नोक्तार्थे व्यभिचारशङ्केत्यर्थः । एवं सामान्येनाभेदप्रकार उक्तः । इदानीं स्वस्य हार्दं दर्शयन्नाह-किं चेति । घटो द्रव्यमित्यत्र घटस्य द्रव्यतादात्म्यं शक्यत्वान्मुख्यमेव घटत्वावच्छिन्नस्य द्रव्यत्वावच्छिन्नं विना पृथक्स्थितिप्रवृत्त्यनर्हत्वाद्, द्रव्यात्मकत्वात् । एवं विश्वं ब्रह्मेत्यत्रापि चेतनाचेतनरूपविश्वस्य

ब्रह्मतादात्म्योपदेशो मुख्य एव शक्यत्वसाम्यात्। ब्रह्मविरहेण विश्वस्य पृथगवस्थानप्रवर्त्तनार्हत्वायोगाद् ब्रह्मात्मकत्वादिति भावः। विशदार्थत्वाद्व्याख्यातप्रायोऽयं ग्रन्थः।अपरिच्छिन्नेति। अपरिच्छिन्नौ शक्तिवैभवौ यस्य। स्वात्मकेति । स्वं ब्रह्मैवात्मा यस्य तत्स्वात्मकं च तच्चेतनाचेतनवस्तु च तदवच्छिन्नश्चेतनाचेतनान्तरात्मन्तर्यामी तदभिन्नत्वमित्यर्थः। एतदर्थकानीति । एष उक्तार्थस्तादात्म्यप्रकारो येषां तानि तत्त्वमस्यादिवाक्यानीत्यत्रादिपदेन ऐतदात्म्यमिदं सर्वम्, अयमात्मा ब्रह्म, आत्मैवेदं सर्वं, सर्वं खल्विदं ब्रह्म, त्वं वा अहमस्मि भगवद्देवते, अहं वै त्वमसि देवते तदात्मानमेवावेदाहं, ब्रह्मास्मी,ति ।

स ब्रह्मा स शिवः सेन्द्रः सोऽक्षरः परमः स्वराट् ।
क्षेत्रज्ञं चापि मां सिद्धि सदसच्चाहमर्ज्जुनः ॥
मत्तः सर्वमहं सर्वं मयि सर्वं सनातने–
त्यादीनां श्रुतिस्मृतीनां संग्रहः ।

उपसंहरति–तस्मात्सर्वभावतइत्यादिना । स्वत एवापास्ता निरस्ताः समस्तदोषाः क्लेशकर्मविपाकादयो यस्मात्स तथा। तत्र क्लेशः पञ्चविधः, अविद्याऽऽदिभेदात्। कर्म द्विविधम्, पुण्यापुण्यभेदात् । द्विविधमपि प्रकारान्तरेण त्रिविधं, सञ्चितक्रियमाणप्रारब्धभेदात्। विपाकस्तु सुखदुःखात्मकस्वर्गनरकादिभेदादनेकविध इति बोध्यम् । तत्र हेतुमाह– अनन्तेत्यादि। वक्ष्यमाणलक्षणलक्षितजगत्कारणत्वयोगं विधत्ते–जगज्जन्मादिहेतुरिति। उक्तार्थे प्रमाणमाह। अखिलशास्त्रैकवेद्य इति। तस्यैव फलरूपतां दर्शयन् विशिनष्टि–मुक्तप्राप्य इति।तस्य सर्वशास्त्रवाच्यत्वं व्यञ्जन्नाह–परब्रह्मेत्यादि । औपनिषदार्थं संगृह्णन् विशिनष्टि-चिदचिदित्यादि। तस्यैव सर्वोत्कृ-

ष्टत्वं दर्शयन्नाह—पुरुषोत्तम इति। विशेष्यं दर्शयति—रमानिवासेति। अत्रास्मिञ्छास्त्रे जिज्ञास्यो जिज्ञासासूत्रोक्तेष्यमाणज्ञानस्य विषय इति तत्पदार्थो वेदमातृमन्त्राभिहितदेवपदवाच्य इति यावत्। इदानीमुक्तवाक्यार्थमनूद्य पदार्थान् व्याख्यास्यन्नाह—एवमित्यादिना।

वक्ष्यमाणमुपक्रमते—अथ प्रसङ्गादिति।

अथ प्रसङ्गात् त्वंपदार्थादिचिदचित्स्वरूपं निरूप्यते। तत्र देहेन्द्रियमनोबुद्धिप्राणादिविलक्षणो ज्ञानस्वरूपो ज्ञाताऽहमर्थरूपः परमेश्वरायत्तस्वरूपस्थितिप्रवृत्तिकोऽणुपरिमाणकः प्रतिशरीरभिन्नोऽनन्तव्यक्तिर्बन्धमोक्षार्हश्चेतनपदार्थः। तथा चोक्तं भगवद्भिराद्याचार्यचरणैः।

ज्ञानस्वरूपं च हरेरधीनं<br>
शरीरसंयोगवियोगयोग्यम्।<br>
अणुं हि जीवं प्रतिदेहभिन्नं—<br>
ज्ञातृत्ववन्तं यदनन्तमाहु—

रित्यादिना। व्याख्यातश्चायं श्लोकः श्रीपुरुषोत्तमाचार्यचरणैर्वेदान्तरत्नमञ्जूषायां तत्रैव द्रष्टव्यम्। तथा च श्रुतयो न्यायाश्च, तस्माद्वा एतस्मान्मनोमयादन्योऽन्तरात्मा विज्ञानमय इति। यथा सैन्धवघनोऽनन्तरो बाह्यः कृत्स्नो रसघन

एवं य आत्माऽनन्तरो बाह्यः कृत्स्नः प्रज्ञानघन एवा,त्रायं पुरुषः स्वयंज्योतिर्भवति, अविनाशी वा अरे अयमात्मा अनुच्छित्तिधर्मा, अथ योऽयं वेद जिघ्राणीति स आत्मा, कतम आत्मा योऽयं विज्ञानमयः प्राणाः सुहृदन्तर्ज्योतिः पुरुष एव द्रष्टा श्रोता रसयिता घ्राता मन्ता बोद्धा विज्ञानात्मा पुरुषः, न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यतेऽविनाशित्वाद्, न हि श्रोतुः श्रुतेः, न हि मन्तुर्मतेः, न हि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यतेऽविनाशित्वाद्, विज्ञातारमरे केन विजानीयाद्, जानात्येवायं पुरुषः, न पश्यो मृत्युं पश्यति न रोगं नो तद्दुःखतां स उत्तमः पुरुषो नोपजनं स्मरन्निदं शरीरम्, एवमेव परिद्रष्टुरिमाः षोडश कलाः पुरुषायणाः पुरुषं प्राप्यास्तं गच्छन्ति ज्ञोऽत एव कर्ता शास्त्रार्थत्वाद्, अहं वै त्वमसि देवते, सोऽहं ब्रह्मास्मीति, मृत्युमृत्युं नमाम्यहं, तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति, एष एव साधुकर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषते, स एवासाधुकर्म कारयति तं यमेभ्यो लोकेभ्योऽधो नि-

नीयते, स कारयेत्पुण्यमथापि पापं, न तावता दोषवानीशिताऽपि जीवोऽल्पशक्तिरस्वतन्त्रोऽवरः, अणुर्ह्येष आत्मा चेतसा वेदितव्यो यस्मिन्प्राणः पञ्चधा शं विवेश अणुर्ह्येष आत्माऽयं वा एते सि नीताः पुण्यं पापं,

बालाग्रशतभागस्य शतधा कल्पितस्य च ।
भागो जीवः स विज्ञेयः स चानन्ताय कल्पते ॥

बुद्धेर्गुणेनात्मगुणेन चैव ह्याराग्रमात्रो ह्यवरोऽपि दृष्टः ।

उत्क्रान्तिगत्यागतीनां नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारात्, तद्गुणसारत्वात्तद्व्यपदेशः प्राज्ञवत्, नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्, अंशो नानाव्यपदेशात्, अस्ति खल्वन्योऽपरो भूतात्मा योऽयं सितासितैः कर्मफलैरविभूयमानः सदसद्योनिना यस्य संमूढत्वादात्मस्थम्प्रभुं भगवन्तं कारयितारं नापश्यद् गुणैः रूप्यमाणः कलुषीकृतश्चेति, अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः, निरञ्जनः परमं साम्यमुपैति, न स पुनरावर्त्तते, अनावृत्तिः श्रवणादित्याद्याः ।

तत्रेति। तयोश्चेतनाचेतनयोर्मध्ये। अत्र भूतचतुष्टयमेवात्मेति लोकायतिका आहुः। तस्य घटौदनादावतिव्याप्तत्वेन दुष्टत्वाद् देह एव आत्मेति चार्वाकाः। देहे मृते चैतन्यादर्शनाद् देहातिरिक्तस्तत्परिमाणकश्चेतन इति दिगम्बराः। तस्य प्रत्यक्षप्रमाणागोचरत्वात् सत्त्वेऽपीन्द्रियैर्विना रूपादिविषयज्ञानासिद्धेरिन्द्रियाण्येवात्मतत्त्वमित्येके तदनुयायिनः। सुषुप्तौ तेषां देहवल्लयदर्शनाद् य एवाहं रूपमद्राक्षं स एवाहं शब्दं शृणोमि गन्धं जिघ्रामीत्यादिप्रत्यभिज्ञाबाधाद् रूपाद्यनुभवस्य यौगपद्योपपत्तेः तत्क्रमभङ्गाच्चेत्यादिहेतुभिर्नेन्द्रियाणामात्मत्वं, किं तु चक्षुरादिनियामकं शरीराश्रयं मन एवात्मेति केचित्। क्षणिकविज्ञानव्यतिरिक्तवस्त्वन्तराभावात् क्षणिकविज्ञानमेव चेतन आत्मेति योगाचाराः। ज्ञानाकारानुमेयः क्षणिकबाह्यार्थ एव तत्त्वमिति सौत्रान्तिकाः। क्षणिकबाह्यार्थ एवात्मेति वैभाषिकाः। क्षणत्रयेऽपि स एवायमित्यादिप्रत्यभिज्ञाऽसम्भवात् सुषुप्तौ तेषामभावदर्शनाच्चासम्भवः। न च प्रत्यभिज्ञाया ज्वालाया इव संततविज्ञानोदयसादृश्यादुपपत्तिरिति वाच्यम्। सुषुप्तौ विज्ञानवत्तत्प्रवाहस्याप्यभावात्। तत्र तत्प्रवाहस्य भावाभ्युपगमे विषयावभासप्रसक्तेः निरन्तरनिरालम्बनज्ञानासम्भवात्तस्माच्छून्यमेवात्मतत्त्वमिति माध्यमिकाः। तदेतत्सर्वं व्यवहारलोपप्रसङ्गादित्यादिविवादबाहुल्यस्य तन्त्रान्तरसिद्धत्वान्नात्र विस्तरापेक्षा, किं तु ग्रन्थकृदभिप्रायद्योतनार्थमनुवादत उद्दिष्ट इति। एतदभिप्रायेणाह—देहेन्द्रियमनोबुद्धिप्राणादिविलक्षण इति। तथा च प्रयोगाः-भूतचतुष्टयं नात्मा कार्यत्वाद् घटादिवद्। देहो नात्मा भौतिकत्वाद् घटवत्। इन्द्रियाण्यात्मा न भवन्ति करणत्वाद्वास्यादिवत्। मन आत्मा न

भवति करणत्वादिन्द्रियवत् । बुद्धिरात्मा न भवति अन्तःकरणत्वान्मनोवद्, जन्यत्वाद् देहादिवच्च । प्राण आत्मा न भवति वायुत्वाद् व्यजनजन्यवायुवदित्यादयः । आदिशब्दः पूर्वोक्तपक्षसंग्रहार्थः । पूर्वोक्तपक्षविलक्षण इति यावत् । किं च, देहेन्द्रियादिविलक्षणस्य ज्ञानेच्छाऽऽदिचतुर्दशगुणाश्रयस्य विभुपरिमाणकद्रव्यविशेषस्य तार्किकैरप्यात्मत्त्वेनाभ्युपगमात्तत्रातिव्याप्तिवारणायाह-ज्ञानस्वरूप इति । ज्ञानं चैतन्यं स्वरूपमस्येति तथा सः । ज्ञानस्वरूपनित्यशुद्धमुक्तसत्तामात्रैकाद्वितीयसजातीयादिभेदशून्यसर्वविशेषविनिर्मुक्तं ब्रह्मैव जीवात्मत्वेनाभ्युपगच्छतां प्रच्छन्नबाह्यानां मायावादिनां पक्षेऽतिप्रसक्तिं वारयति—ज्ञानेति । ज्ञानाश्रय इत्यर्थः । ज्ञानत्वे सति ज्ञानाश्रयत्वमिति जीवेश्वरसाधारणलक्षणं बोध्यम् । एतेनैव निरञ्जनः परमं साम्यमुपैति, मम साधर्म्यमागताः, पूता मद्भावमागता, इत्यादिवाक्यानि व्याख्यातानि भवन्ति, उभयत्रोक्तलक्षणसमन्वयात् ।

ननु ज्ञानस्वरूपस्य स्वप्रकाशस्यात्मनो ज्ञानाश्रयत्वं कथं ज्ञानत्वाविशेषाद्, न हि जले जलं भिन्नमवतिष्ठते, ज्योतिषि ज्योतिर्वाऽतो बुद्धिवृत्तिप्रतिबिम्बितस्य चेतनस्वरूपस्य ज्ञानत्वोपचार इति चेन्न । न हि धर्मिधर्मयोरत्यन्तसाजात्यमभेदे नियामकं, किं तु भेदाग्रहमात्रमेव, तयोर्ज्ञानत्वाविशेषेऽपि धर्मित्वधर्मत्वावच्छेदेन विजातीयत्वाद् दृष्टान्तासिद्धिः, द्युमणितत्प्रभावयोस्तेजस्त्वसाम्येऽपि द्युमणित्वप्रभावत्वावच्छिन्नतया धर्मिधर्म्मभावस्य दृष्टचरत्वान्नानुपपत्तिः । वस्तुतस्तु जले ज्योतिषि चात्यन्तसाजात्येन भेदाग्रहेऽपि भेदस्य सत्त्वमेव, सावयवद्रव्यत्वेनानुमानाद् । अन्यथा घटादौ पार्थिवावयवानामप्यभेदः कथं न वक्तुं शक्यते त्वया । तथाऽत्र प्रयोगः—जले निक्षिप्तं जलं भिन्नमेव सावयवद्रव्यत्वात् पार्थिवरजःसमुदाये नि-

क्षिप्तपार्थिवरजोवत्, तिलराशौ निक्षिप्ततिलान्तरवच्च। किं च, न हि बुद्धिवृत्तिप्रतिबिम्बिते चेतने ज्ञानत्वोपचाराभ्युपगमे ज्ञानजन्यत्वव्यवहारः सम्भवति, तथात्वे च सूर्यप्रतिबिम्बेनापि सूर्यप्रकाश्यभूतदेशीयतमःशीतयोर्निवृत्तिः स्यान्न च दृष्टचरा युक्ता वा, किं चास्तां बुद्धिवृत्तिप्रतिबिम्बितचेतनस्य ज्ञानत्वव्यवहारः,प्रतिबिम्बस्यैवासिद्धत्वादुभयोश्चेतनवृत्त्योर्बिम्बोपाध्योर्निरवयवत्वान्नीरूपत्वाच्च, निरवयवस्य नीरूपस्य तथाभूतस्यापि प्रतिबिम्बभावाभ्युगमे रूपरसादीनामपि शब्दादौ कालादौ च, कालादीनामपि रसादौ प्रतिबिम्बत्वापत्तेः। एतेनैव ब्रह्मप्रतिबिम्ब एव जीव इति पक्षोऽप्यपास्तः, तुल्यदोषवत्त्वात् ब्रह्मभूतबिम्बस्याविद्यारूपोपाधेश्च निरवयवत्वादिसाम्यात्।

ननु नीरूपनिरवयवस्यापि रूपस्य गगनादेश्च प्रतिबिम्बदर्शनान्नोक्त विरोध इति चेन्न। सावयवद्रव्याश्रितस्यैव रूपस्य सूर्यनक्षत्रादिप्रभायुक्तस्यैव चाकाशस्य तथात्वदर्शनात् पूर्वोक्तदोषस्य तादवस्थ्यमेव। किं च बिम्बरूपस्य गगनादेः कथं चिन्नीरूपत्वनिरवयत्वयोः सतोरपि जलादिरूपस्योपाधेः सावयवत्वादेः सत्त्वान्नोक्तानुपपत्तेरुद्धारः।

वस्तुतस्तु गगनं रूप्येव पञ्चीकृतद्रव्यत्वात् पृथिव्यादिवत्। अत एव सावयवत्वपरिच्छिन्नत्वयोरपि तत्र सत्त्वान्न प्रतिबिम्बरूपत्वानुपपत्तिः। एतेनैवाकाशे नीलत्वादिप्रत्ययो भ्रम इत्यपि निरस्तः। रूपादेस्तत्र सत्त्वेन भ्रमत्वकल्पनायास्तुच्छत्वात्। न च

एक एव हि भूतात्मा भूते भूते व्यवस्थितः।
एकधा बहुधा चैव दृश्यते जलचन्द्रवदि—

त्यादिप्रतिबिम्बप्रतिपादकश्रुतिबाध इति शङ्कनीयम्। तस्या

अन्तर्यामिनिर्लेपत्वस्वतन्त्रत्वप्रतिपादनेन नैराकाङ्क्षात् । व्याख्याता चैषा श्रुतिः सिद्धान्तरत्नमञ्जूषायां श्रीपुरुषोत्तमाचार्यचरणैः । वक्ष्यते चोपमा सूर्याकाशादिवदित्यस्मिन्नधिकरणे ।

ननु स्यादेतदविद्याब्रह्मणोरुपाधिबिम्बयोर्निरवयवत्वादिना प्रतिबिम्बानुपपत्तिः।किं त्वविद्याऽवच्छिन्नमन्तःकरणावच्छिन्नं वा ब्रह्म जीवात्मशब्दाभिधेयं, यथा घटावच्छिन्नाकाशस्य मठाकाशेनाभेदस्तस्य चानवच्छिन्नेन महाकाशेनाभेदस्तथाऽन्तःकरणावच्छिन्नस्य व्यष्टिरूपजीवस्याविद्याऽवच्छिन्नेन समष्टिरूपेणाभेदस्तस्य हि शुद्धेन नित्यमुक्तेनानवच्छिन्नेन ब्रह्मणाऽभेदोऽविद्याकल्पितोपाधिकृद्भेदश्चेति चेन्न ।

विकल्पासहिष्णुतया तुच्छतरत्वात् । तथा हि । अविद्यारूपोऽन्तःकरणाख्यो वोपाधिः शुद्धबुद्धनित्यमुक्तनिर्विशेषस्वरूपं चेतनं ब्रह्म कुठारः काष्ठानीव च्छित्वाऽवच्छिनत्ति, यथाऽवस्थितस्य सर्वगतस्यैवैकदेशे स्थित्वा तद्देशमात्रं वेति विवेचनीयम् । नाद्यः, सर्वगतस्य निरवयवनिर्विशेषवस्तुनश्छेदनक्रियाफलाश्रयत्वापत्त्यनर्हत्वात् । निष्कलं निष्क्रियं शान्तमिति श्रुतेः। प्रत्यगात्मनोऽजत्वानादित्वादिभङ्गात्तद्विषयकशास्त्रबाधाच्च । द्वितीयेऽप्युपाधेः सर्वगतत्वमभीष्टं परिच्छिन्नत्वं वेति वक्तव्यम् । प्रथमे उत्क्रान्तिगत्याद्यनुपपत्तेस्तद्विषयकश्रुतिव्याकोपाच्च । किं च ब्रह्मवदुपाधेरपि विभुत्वेन सर्वस्यापि चेतनस्यावृतत्वेन शुद्धस्य मुक्तप्राप्यस्याभावप्रसङ्गात् प्रकाशकाभावाज्जगदान्ध्यापत्तेः मुक्तिप्रतिपादकशास्त्रव्याकोपाच्च । चरमे, उत्क्रान्त्यादिव्यवस्थासिद्धावपि उपाधौ गच्छति सति ब्रह्मणो विभोर्गमनानर्हत्वेन पूर्वदेशावच्छिन्नचेतनस्य क्षेत्रज्ञाख्यस्याकस्मान्निर्हेतुको मोक्षः, तथैव शुद्धस्य नित्यमुक्तस्य चेतनप्रदेशविशेषस्याकस्माद्बन्धश्चेति पदे पदे बन्धमोक्षौ स्यातां कृतना-

शाक्तताभ्यागमप्रसङ्गाच्चेति पूर्वमेवोक्तम् औपाधिकभेदाभेदखण्डनप्रकरणे। स चाहमर्थाभिन्न इत्याह-अहमर्थरूप इति। अहमर्थ एव रूपं स्वरूपं यस्य स, अहं जानामीच्छामिकरोमीत्यादिप्रत्ययेभ्यः।

ननु स्यादेतदस्मदर्थस्यात्मत्वं यदि सर्वावस्थाऽनुगतत्वमिति, तदेव तु न तस्य सुषुप्त्यादौ व्यभिचारदर्शनाद् अतः प्रकृतिकार्यरूप एवायमहं जानामीत्यादिप्रतीतिविषयोऽहमर्थः, "अहंकार इतीयं मे भिन्ना प्रकृतिरष्टधेति भगवदुक्तेरि"ति चेन्न।

उक्तहेतोः स्वरूपासिद्धत्वेन हेत्वभावरूपत्वात्। तथा हि। सुषुप्त्यादावहमर्थस्यावगमो मानसिद्धः, एतावन्तं कालं सुखमहमस्वाप्सं न किंचिदवेदिषम्, एतावन्तं कालं मूर्छित एवासमित्यादिप्रत्यभिज्ञाया एव मानत्वात्। तस्मात्सुषुप्त्यादावपि सुखाज्ञानविषयकज्ञानाश्रयाभिन्नोऽहमर्थोऽनुगत एव विशेषविषयाभावेन विशेषविषयकप्रत्यक्षस्यानुत्थानात्।

नन्वेतावन्तं कालं मामप्यहं नावेदिषमिति प्रत्यभिज्ञानस्यास्मदर्थाभावविषयकस्यापन्होतुमशक्यत्वाद् व्यभिचारस्य तादवस्थ्याद्धेत्वसिद्धिरिति चेन्न।

भवदुक्तप्रत्यभिज्ञानेऽपि तस्यानुगतत्वेन सत्त्वात् तत्र मामिति कर्मभूतद्वितीयाऽन्तस्यास्मदर्थस्य जाग्रदाद्यवस्थाऽनुभूतानादिकर्मसंस्कारनिरूपितात्मत्वाभिमतदेहादियुक्तो विषयः, अहमित्यस्य प्रथमाऽन्तस्य कर्तुरस्मदर्थस्य देहेन्द्रियभिन्नशुद्धभगवदात्मकप्रत्ययकपदार्थो ज्ञाता विषयः, तथा च मामितिजाग्रदवस्थाऽनुभूतस्य देहादियुक्तस्यात्मत्वेनाभिमतस्य तत्राभावान्निषेधविषयत्वं सूपपन्नं, तथैव चाहमितिदेहादिविलक्षणस्य शुद्धास्मदर्थस्य तत्र सत्त्वेन विशिष्टाभावविषयकानुभवाश्रयस्य तत्रापि सत्त्वात्तस्य ज्ञातृतया भानमपि सूपपन्नतरम्। एवमहमर्थस्य सर्वावस्थाऽनुगत-

त्वाद् अनुभवस्मृत्योरेकाधिकरणनियमाच्च उक्तहेतोरसिद्धितादवस्थ्यमेव,अन्यथा एतावन्तं कालं नाहमासम् इदानीं जातोऽहम्। एतावन्तं कालं नाहमभवं किं तु किंचिन्मद्विलक्षणानुभूतिमात्रमासीदिदानीं तदन्योऽहमस्मीत्यादिप्रत्यभिज्ञानं स्यात्,तस्य तु कुत्राप्यदृष्टश्रुतत्वाद् अनुपपन्नत्वाच्च । तस्मादुक्तप्रत्ययप्रमाणसिद्धज्ञात्रभिन्नाहमर्थ एवात्मतत्त्वमिति सिद्धम्। किं च सर्वश्रुतिमूलभूतस्य सर्वमन्त्रशिरोमणिरूपस्याप्यस्मच्छब्दप्रयोगदर्शनाद् गायत्र्याख्यस्य मन्त्रस्याप्ययमेवार्थः । ज्ञात्रभिन्नास्मदर्थ एवात्मेति यावत् ।

ननु आत्मबुद्ध्योरन्योन्याध्यासाभिप्रायकोऽयमस्मत्प्रयोगो नात्मस्वरूप इति चेन्न ।

धीशब्दस्य पृथक्प्रयुक्तत्वाद् यो देवो नो धियः प्रचोदयादित्यत्र यो देवपदार्थः सार्वज्ञ्याद्यनन्ताचिन्त्ययावदात्मवृत्तिस्वाभाविकगुणशक्तिवैभवाश्रयः परमेश्वरो विश्वात्मा स नोऽस्मदर्थभूतानां जीवात्मनां सम्बन्धिधीर्बुद्धिर्विषयप्रवणा तस्या धिय इति कर्मणि षष्ठी,धियमित्यर्थः। यद्वा द्वितीयाऽन्तबहुवचनमिदं बोध्यम्। तथा च या विषयप्रवणाः ताः प्रचोदयात् स्वविषयिका ब्रह्मस्वरूपविषयिकाः कुर्यादिति ब्रह्मणो नियन्तृत्वेन स्वतन्त्रसत्त्वयोगोऽस्मदर्थभूतानां च प्रत्यगात्मनां धीशब्दोपलक्षितः चेतनवर्गस्य च नियम्यत्वेन परतन्त्रसत्तायोगश्च स्पष्टं मन्त्रित इति यावत्। किं च गायत्र्याख्यमन्त्रदेवता सर्वज्ञा न वेति विचनीयम्। सर्वज्ञत्वे तयाऽस्मच्छब्दोऽयस्यात्मपरत्वेन प्रयोक्तुं न घट्यते अध्यस्तविषयकत्वात्तस्य।अन्यथा मातापित्रादेरपि वत्सलतरस्यास्तस्या एवमध्यस्तात्मोपदेशे सर्ववञ्चकतयाऽनाप्तत्वापत्तेः। द्वितीयेऽज्ञत्वादेवाप्रमाणकत्वापत्तेः। तथात्वे च तन्मूलकस्य सर्वस्यापि वेदस्याप्रामाण्यतरत्वापत्तेश्च तथा च बाह्यमताविशेषापत्तेश्च । किं चास्तां तावदहमर्थस्य सुषु-

प्यादौ व्यभिचारशङ्का मोक्षावस्थायामपि तस्यानुगतत्वेनात्म-स्वरूपत्वनिश्चयात्। तथा हि। विश्वलयात्मके महाप्रलयेऽवशिष्ट-स्यैकाद्वितीयस्य ब्रह्मणो नित्यमुक्तत्वं तावन्निर्विवादं, तथा च त-स्यापि ज्ञातृभिन्नाहमर्थस्वरूपत्वं प्रतिपादयन्त्यस्तत्साम्यापन्नानां मुक्तानां जीवात्मनामपि तथात्वं निश्चिन्वन्ति श्रुतयः, ब्रह्मवेदमग्र आसी,त्त चात्मानं वेदा,हं ब्रह्मास्मीति,बहु स्यां प्रजायेय, नामरूपं व्याकरवाणि, त्रिवृतं करवाणी,त्यादयः। न केवलमुपमानश्रुतिरत्र प्रमाणं, किं तु मुक्तानां वामदेवादीनामनुभवश्रवणमपि तद्दर्शनात् पश्य ऋषिर्वामदेवः प्रतिपेदे अहं मनुरभवं सूर्यश्चेति। किं च "वेदाहं समतीतानि वर्त्तमानानि चार्ज्जुन" इत्यस्मदर्थस्यैव सर्वज्ञत्व-योगः। "अहं सर्वस्य जगतः प्रभवः प्रलयस्तथा" "मत्तः सर्वं प्रवर्तते" इति तस्यैव जगज्जन्मादिकारणब्रह्मलक्षणलक्षितत्वम्। "इति मत्वा भजन्ते मां बुधा भावसमन्विता" इति सर्वज्ञानवद्भजनीयत्वं तद्भ-जतां ज्ञानित्वं च। "तेषामहं समुद्धर्त्ते"ति संसारनिवारकत्वम्।

तेषामेवानुकम्पाऽर्थमहमज्ञानजं तमः।
नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वतेति—
अनुकम्पाऽऽदिगुणाश्रयत्वमज्ञाननाशकत्वं ज्ञानदातृत्वादि।
भोक्तारं यज्ञतपसां सर्वभूतमहेश्वरम्।
सुहृदं सर्वभूतानां ज्ञात्वा मां शान्तिमृच्छती—
ति सर्वमहेश्वरत्वं तद्विषयकज्ञानस्य मोक्षान्तरङ्गहेतुत्वम्।
मामुपेत्य तु कौन्तेय! पुनर्जन्म न विद्यते।
मामुपेत्य पुनर्जन्मदुःखालयमशाश्वतम्।
नाप्नुवन्ति महात्मानः संसिद्धिं परमां गताः॥

मम साधर्म्यमागता इति मुक्तोपसृप्यत्वम्। मामप्राप्यैव कौन्तेय! ततो यान्त्यधमां गतिमिति तदप्राप्तेः संसारकारणत्वम्। अतोऽस्य

लोक वेदे च प्रथितः पुरुषोत्तम इति, मत्तः परतरं नान्यत्किंचिदस्तीत्यन्वयव्यतिरेकाभ्यां सर्वोत्कृष्टत्वम्। अहमात्मा गुडाकेश!, क्षेत्रज्ञं चापि मां विद्धी,ति विश्वान्तरात्मत्वम्। विष्टभ्याहमिदं कृत्स्नमिति सर्वाधारत्वम्। न तदस्ति विना यत्स्यान्मया भूतं चराचरमिति सर्वव्यापकत्वम्। वेदैश्च सर्वैरहमेव वेद्य इति शास्त्रयोनित्वम्। प्रकृतिं विद्धि मे परामिति चेतनाचेतनप्रकृत्यधिष्ठातृत्वम्। अवजानन्ति मां मूढा इति तदवज्ञाया मूढत्वराक्षसत्वासुरत्वप्राप्तिहेतुत्वम्। मामेकं शरणं व्रजेति सर्वशरण्यत्वम्। अहं त्वां सर्वपापेभ्यो मोक्षयिष्यामि मा शुच इति सर्वपापनाशकत्वं, तच्छरणागतस्य शोकाभाव,श्चेत्यादीनां स्वयमेव श्रीमुखेन गीतत्वात् सर्वशास्त्रमयरूपाया गीताया अस्मदर्थाभिन्नसर्वज्ञानन्तविचित्रशक्त्याश्रयः श्रीभगवान् पुरुषोत्तमो रमानिवासः श्रीकृष्ण एव विषय इति निश्चीयते उदाहृतहेतुगर्भितवाक्येभ्यः। तस्मादस्मदर्थाभिन्न एव परब्रह्मभूतो विश्वात्म भगवान्वासुदेवः। तथैवास्मदर्थाभिन्ना उक्तवक्ष्यमाणलक्षणलक्षणा जीवात्मान इति सिद्धम्। एतेन कर्तृत्वमपि निरूपितं, तथा हि विज्ञानं यज्ञं तनुते इति, कर्ता शास्त्रार्थत्वादिति शास्त्रात्।

ननु मन एव कर्त्रिति तस्यात्माध्यासेनात्मनि कर्तृत्वभानात् तद्विषयकमिदमुदाहृतशास्त्र,मन्यथाऽकर्त्रात्मप्रतिपादकशास्त्रव्याकोपादिति चेन्न। तुच्छमेव तत्। मनसः कर्तृत्वाभ्युपगमे घटादावपि कर्तृत्वापत्तेरचेतनत्वसाम्यात्। किं च तन्मनोऽकुरुतेत्यादौ मनसः कर्मत्वं शृण्वन्तः श्रोत्रेण विद्वांसो मनसेति तस्यैव करणत्वं मन उत्क्रामन्मीलित इवाश्नन् पिबन्नास्ते इत्यादौ मनस उत्क्रमणेऽपि, आत्मनः कर्तृत्वं परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते जक्षत् क्रीडन् रममाणः सह ब्रह्मणा विपश्चितेति मोक्षदशायां भगवद्भावापत्त्यनन्तरमपि क्रियाऽऽश्रयत्वं श्रूयते उक्तवा

क्येभ्यः । नैतेषु क्वापि मनसः कर्तृत्वं दृष्टचरमनुपपन्नं च । न हि कर्मणः करणस्य वा कर्तृत्वं सम्भवति कुठारादेः काष्ठादेश्चापि कर्तृत्वापत्तेः । न च सुषुप्त्यादौ तदभावादुक्तसिद्धान्तासम्भव इति वाच्यम् । ज्ञातृत्ववत्तस्याप्यनुगतत्वात् ज्ञातृत्वकर्तृत्वयोः सामानाधिकरण्यनियमात् । किं च बद्धावस्थायां ज्ञानादिसंकोचात् करणनिमित्तकत्वाद्विशेषकर्तृत्वस्य सुषुप्त्यादौ करणानां लयात् कर्तृत्वभानाभावोऽविरुद्धः । न चैवं जाग्रदवस्थायां कदा चिदपि तदुपरमो न स्यात् करणवर्गस्य तत्र सत्त्वादिति वाच्यम् । विशेषविषयककर्तृत्वे क्रियाया अपि तत्सहकारित्वात् । तस्या अभावे तदनाविर्भावोऽविरुद्धः ।

ननु करणक्रियाऽऽदिनिमित्तकात्मकर्तृत्वकल्पने महद्गौरवं, तस्मादुपाधेरेव कर्तृत्वाभ्युपगमो वरीयान् लाघवादिति चेन्न । उपाधेर्जडस्य कर्तृत्वेऽतिप्रसङ्गस्योक्तत्वात् । न च नोपाधिमात्रस्य कर्तृत्वाभ्युपगमो,ऽपि तु तत्सम्बन्धादकर्तुरपि कर्तृत्वं सम्भाव्यत इति वाच्यम् । तर्हि नपुंसकस्यापि स्त्रीसंपर्कात्मजोत्पत्तिः स्याद् । न चैवं क्वापि दृष्टं श्रुतमुपपन्नं चेति । तस्मात्स्वाभाविककर्तृत्वाश्रयस्यैवात्मनः स्वाभाविकदहनशक्त्याश्रयाग्नेः काष्ठादिसम्बन्धेन तदाविर्भाववत् करणादिसम्बन्धनिमित्तकस्तदाविर्भाव उपपन्नतरः । न चैवं कर्तृत्वनिषेधविषयकशास्त्रबाध इति वाच्यम् । तस्य स्वतन्त्रकर्तृत्वनिषेधेन नैराकाङ्क्ष्याद् । अन्यथा कर्तृत्वप्रतिपादकशास्त्रबाधशङ्कोत्थानस्यापि सावकाशत्वात् । तस्माज्ज्ञातृत्ववत्कर्तृत्वस्यापि प्रत्यगात्मनां स्वाभाविकधर्मविशेषत्वं स्वरूपनिरूपितमेवेति सिद्धम् । एवं भोक्तृत्वादयोऽप्यूहनीयाः । तथा हि । सुषुप्त्यादौ सुखादिभोक्तृत्वे प्रत्यभिज्ञाया मोक्षापत्तौ भगवत्स्वरूपगुणादिविषयकानुभवानन्दभोक्तृत्वे च जक्षत्क्रीडन्रममाणादिश्रुतेश्च मानत्वात् कर्तृत्वभोक्तृत्वयोरेकाधिकरणत्वनियमाच्च ।

ननु स्यादेतदुक्तलक्षणस्य परब्रह्मणि पुरुषोत्तमाख्येऽपि समन्वयात्तत्रातिव्याप्तेः। न च तस्यापि लक्ष्यत्वादिष्टापत्तिरिति वाच्यम्। सिद्धान्तभङ्गादिति चेत्तद्व्यावर्त्तयन्नाह-**परमेश्वरायत्त-स्वरूपस्थितिप्रवृत्तिक** इति। अस्मदर्थाभिन्नसर्वनियामकविश्वात्मनो वासुदेवस्यायत्तं तन्त्रं स्वरूपस्थितिप्रवृत्ति यस्य सः। स्वरूपं च स्थितिश्च प्रवृत्तिश्चेति समाहारः स्वरूपसम्बन्धिन्यौ स्थितिप्रवृत्ती इति वा सर्वदेशकालीनवस्तुविषयकज्ञानादौ क्रियाप्रवृत्त्यादौ च स्वातन्त्र्यशून्य इत्यर्थः। तथा च देहादिविलक्षणज्ञानात्मत्वेऽस्मदर्थाभिन्नज्ञानाश्रयत्वे च सति परमेश्वराधीनस्वरूपस्थितिप्रवृत्तिकत्वमिति त्रिविधानामपि प्रत्यगात्मनां साधारणलक्षणमिति, तथात्वे च पूर्वदलयोः परमेश्वरसाधारणत्वेऽपि उत्तरदलस्यासाधारणत्वान्नोक्तदोषयोगः।

नन्वेवं परमेश्वरे वैषम्यनैर्घृण्यप्रसक्तिस्तस्यैव प्रयोजककर्तृत्वाभ्युपगमात् पुण्यापुण्ययोगस्यापि तत्रैव प्रसङ्गापत्तेश्चेति चेन्न। वैषम्यादीनां कर्मसापेक्षत्वाद् न तत्र योग इति भगवान्सूत्रकारो वक्ष्यते "वैषम्यनैर्घृण्ये न सापेक्षत्वादि"ति।

न च तर्हि कर्मण एव प्रयोजकत्वात् किमीश्वरेण गौरवमात्रत्वात्तद्ग्रहस्येति वाच्यम्। कर्माणि जडत्वेन चेतननियन्तृत्वाद्यसम्भवात्प्रयोजकत्वासम्भव इत्यर्थः। अन्यथा घटादावपि तत्प्रसङ्गस्य व्याप्तिसम्भवात्, जडत्वसाम्यात्। कर्मणश्चेतन्ययोगाभ्युपगमे संज्ञाभेदोऽवशिष्यते न वस्तुभेदस्तस्यैवेश्वरत्वसंभवात्।

न च प्रलये कर्मणोऽप्यभावात्कथमिव तत्सापेक्षत्वं परमात्मनः सम्भवतीति वाच्यम्। कर्मणामनादित्वात्। इतरथा सृष्ट्यभावप्रसङ्गात्, कृतनाशाकृताभ्यागमप्रसङ्गाच्च। तथा च वक्ष्यते

"न कर्माविभागादिति चेन्नानादित्वादि"ति, तस्मात्कर्मसापेक्षत्वात्पुण्यापुण्यकर्तृत्वादिप्रयोजकस्य नोक्तदोपसम्बन्धावकाशः ।

न च मुक्तौ कर्माभावादीश्वरतन्त्रत्वस्याभाव इति वाच्यम् । नियन्तृत्वनियम्यत्वयोः तत्त्वंपदार्थनिष्ठासाधारणस्वाभाविकयावदात्मवृत्तिस्वरूपधर्मत्वात्, तयोर्नाशे स्वरूपनाशस्यापि सम्भवितुं शक्यत्वात् स्वरूपनाश एव मोक्षः स्यात् ।

अयं भावः । न वयं परमेश्वरनियन्तृत्वस्य कर्मसापेक्षत्वं वदामः, किन्तु अनादिकर्मसापेक्षपुण्यापुण्यादिकर्मप्रवाहकारयितृत्वे तत्फलदातृत्वे च, मुक्तौ तयोरभावेऽपि स्वरूपस्थितिप्रवृत्त्यादौ नियन्तृत्वस्य सत्त्वान्नोक्तदोपः ।

ननु स्यादेतत्तथाऽपि शास्त्राचार्य्योपदेशस्य तदुक्तसाधनानुष्ठानस्य वैयर्थ्यापत्तिः, जीवानां स्वतन्त्रकर्तृत्वानभ्युपगमादिति चेन्न । भगवदायत्तस्वरूपस्थित्यादिविपयकाज्ञानवन्मुमुक्ष्वधिकारिकत्वाद्, उपदेशशास्त्रादेः भगवदायत्तस्वरूपादिका वयमिति ज्ञानाभाववद्विपयकत्वेनोपदेशस्य नैराकाङ्क्ष्यादित्यर्थः ।

ननु नैवमुक्तलक्षणेऽतिव्याप्तिदोपनिवृत्तिः, परमेश्वरस्यापि स्वातन्त्र्यस्य परमेश्वरायत्तस्वरूपस्थितिप्रवृत्तिकत्वसम्भवात् सर्वपक्षेपु ब्रह्मणः स्वातन्त्र्यासाधारण्यस्य निर्विवादत्वादुक्तातिव्याप्तेस्तादवस्थ्यमेवेत्याशङ्क्य तन्निवृत्तये विशेपं वदन् परिमाणविवादं निराकरोति-**अणुपरिमाणक** इति । अणुमात्रं परिमाणं यस्य सो,ऽअणुपरिमाणलक्षणगुणाश्रय इत्यर्थः ।

नन्वात्मनोऽणुपरिमाणत्वे सर्वशरीरावयवगतदुःखाद्यनुसन्धातृत्वं प्रकाशकत्वं सर्वशरीराधारत्वं न स्यात् तस्य मेरुगिरौ सर्पपस्येव देहातिसूक्ष्मतमाल्पतरैकदेशं स्थितत्वादिति चेन्न ।

धर्मिभूतस्यात्मनोऽणुत्वेपि तद्धर्मभूतज्ञानस्य विभुत्वेन सर्वसमञ्ज-सत्वाद् "गुणाद्वा लोकवदि"ति न्यायात्।

यथा प्रकाशयत्येकः कृत्स्नं लोकमिमं रविः।
क्षेत्रं क्षेत्री तथा कृत्स्नं प्रकाशयति भारतेति—

सदृष्टान्तोपपत्तिमद्भगवद्वचनाच्च। एतेनैव विभुपरिमाण-विषयकशास्त्रस्यापि नैराकाङ्क्ष्यं व्याख्यातं भवति।

ननूपाधिकृतमेवेदमणुपरिमाणकत्वमात्मनो न स्वरूपतः "बु-द्धेर्गुणेनात्मगुणेन चैव ह्याराग्रमात्रो ह्यवरोऽपि दृष्ट"इति श्रवणाद् विभुत्वमेव तस्येति चेन्न। अहो विवेककौशल्यं भवतो देवानां-हितकारिणः, स्वहस्तेनैव स्वभवनं दह्यते, उक्तवाक्यस्याणुत्वप-रत्वेनास्मत्पक्षपातित्वात्।

तथा हि—बुद्धेरुपाधेः परिमाणात्मकगुणेन तथाऽऽत्मनः स्वरूपवृत्तिपरिमाणभूतेन गुणेन चोभयथाऽपि अवरो जी-वात्मा आराग्रमात्रो दृष्टः शास्त्रेषु योगिभिरनुभूतो वेति "दृश्यते त्वग्र्या बुद्ध्या सूक्ष्मैः सूक्ष्मात्मदर्शिभिरितिश्रुत्यन्तराद्। आराग्रमात्रोऽतिसूक्ष्मोऽणुरित्यर्थः। अवरकथनादीश्वरस्य परत्व-सिद्ध्या तयोर्भेदस्यापि स्वाभाविकत्वमुक्तं भवति, परावरश-ब्दयोरन्योन्यसापेक्षत्वनियमात्। परिमाणवद् भेदस्यापि स्वरू-पनिबन्धनत्वं बुद्धिनिबन्धनत्वं चोभयथा संभवतीति, उभयोरपि भेदनिरूपकत्वाद्,अस्ति खल्वन्यो ऽपरो भूतात्मा योऽयं सितासितैः कर्मफलैरभिभूयमानः सदसद्योनिना, यस्य संमूढत्वादात्मस्थं प्रभुं भगवन्तं कारयितारं नापश्यद् गुणौघैरूह्यमाणः कलुषीकृतश्चेति मैत्रेयोपनिषच्छ्रुतेरलं प्रासङ्गिकेन। किं चात्मगुणेन चैवेत्यवधार-णमत्रान्ययोगव्यवच्छेदपरम्। स च मध्यमविभुपरिमाणव्याव-र्तकः। मध्यमपरिमाणको विभुपरिमाणको वा नायं, किं तु

आराग्रमात्रोपलक्षितोऽणुपरिमाणक एवेत्यर्थः । अणुर्ह्येष आत्मा चेतसा वेदितव्यः,

बालाग्रशतभागस्य शतधा कल्पितस्य च ।
भागो जीवः स विज्ञेयः स चानन्त्याय कल्पते—

इतिश्रुत्यन्तरात्। उत्क्रान्तिगत्यागतीनां नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारात्, तद्गुणसारत्वात्, तद्व्यपदेशः प्राज्ञवदि,ति वक्ष्यमाणन्यायाच्च । तत्र न तावन्मध्यमपरिमाणकः, सावयवत्वाद् देहवन्नश्वरत्वापत्तेः कृतनाशाकृताभ्यागमप्रसङ्गाच्चेति पूर्वमेव निराकृतम्। नापि विभुपरिमाणकः,असंभवात्।तत्रात्मनो बहुत्वमेकत्वं वेति विवेचनीयं, बहुत्वे मनसो विभुत्वेऽणुत्वे चोभयथाऽपि सर्वेषां विभूनां जीवात्मनां सर्वमूर्त्तसंयोगित्वाविशेषात् सर्वैर्मनोभिर्नित्यसंयुक्ततया सर्वान्नर्वर्त्तिसुखादिज्ञातृत्वापत्तेः, ब्रह्मण्यतिप्रसङ्गाच्च । अहंत्वमयमितिप्रत्ययानां नियामके विनिगमनाविरहेण विभागाभावापत्तेश्च । आत्मत्वेन मनःसंयोगवत्त्वेन च विशेषाभावात् । न चात्मत्वसाम्येऽपि तत्तत्कर्मजन्यसंस्कारविशिष्टवत्ता वैलक्षण्यादीनां परस्परभिन्नत्वेन नियामकत्वान्नोक्तदोषप्रसङ्ग इति वाच्यम् । तत्तत्कर्माद्यदृष्टादीनामपि नियामकत्वेन कल्पितानां सर्वेष्वात्मसु सम्बन्धसामान्यात् तत्राप्यन्यकल्पनेऽनवस्थाऽऽपत्तेश्च । द्वितीये तु एकस्यैव विभोरात्मनः सर्वान्तःकरणैरुपाधिभूतैरवच्छेदाभ्युपगमात् सर्वेषामुपहितानां सर्वज्ञातृत्वमप्रमाणम्। अन्यथा स्वस्यैवैकस्मिन्देशे वर्त्तमानानामन्तःकरणानां सम्बन्धेन तत्कृतदुःखाद्यननुभवत्वाभ्युपगमे देवदत्तस्य स्वशिरःपाण्याद्यवयवनिष्ठवेदनाऽनुसन्धानाभावापत्तेः,जडत्वापत्तेश्च । ज्ञातृत्वादेरुपाधिधर्मत्वाङ्गीकारे उपाधेश्चेतनत्वापत्तेश्च उपाधेश्चाणुत्वस्वीकारेण शिरःपाण्याद्यवयवैर्युगपदसम्बद्धतया

तद्गतसुखादीनां युगपदनुसन्धानाभावापत्तेश्च। उपाधेर्मध्यमपरिमाणाङ्गीकारे तदवच्छिन्नस्यापि तथात्वापत्त्या बौद्धपक्षस्वीकारापत्तेश्च, उपाध्यणुत्वनिरूपितजीवाणुत्वाङ्गीकृतसिद्धान्तभङ्गाच्च। उपाधेर्विभुत्वाङ्गीकारे च सर्वस्याप्युपहितत्वेन मुक्तप्राप्याभावो जगदान्ध्यापत्तिश्च स्यातां, तच्च पूर्वमेव निराकृतमुक्तहेतुभ्यो-महापापीयानयं पक्षः श्रेयोर्थिऽभिः सुदूराद्धेयः।

नन्वणुत्वे निरवयवत्वमप्यवश्यं भाव्यं, तथात्वे चेश्वरस्य तत्राव्यापनात्तदन्तर्यामित्वभङ्ग इति चेन्न। तुच्छत्वाच्छङ्कायाः, जीवस्याणुत्वनिरवयवत्वयोः सतोरपि परमेश्वरस्य व्यापनशीलत्वेन सर्वत्र व्यापकत्वात्। अथ कस्मादुच्यते महाविष्णुरिति यस्मात्सर्वांल्लोकान्सर्वान्देवान्सर्वात्मनः सर्वभूतानि व्याप्नोति स्नेहो यथा कलमपललपिण्डओतप्रोत्तमनुव्याप्तमिति प्रश्नोत-राभ्यां निर्णीतत्वात् श्रुतिभिः। न हि नियम्यनियन्तृत्वयोर्व्याप्य-व्यापकत्वयोश्च भावे सावयवत्वं निरवयवत्वं च प्रयोजकं, तथात्वे सति कालशब्दस्पर्शादीनां निरवयवाणां भगवन्नियम्यत्वाद्यभावप्रसङ्गात्। किं तु वस्तुवृत्तिव्याप्यत्वव्यापकत्वनिमित्तभूता शक्तिरेव तत्र प्रयोजिका। एवं च सर्वगतस्य परमात्मनः सर्वव्यापकताशक्तियोगश्रवणात्सर्वमनवद्यम्।

इत्थं परिमाणविवादं निराकृत्य संख्याविवादं निराकरोति—**प्रतिशरीरं भिन्न** इति। ब्रह्मादिस्थावरान्तेषु प्रत्येकमेकैको विलक्षणस्वरूप इत्यर्थः। एतेन परमात्मनो जीवानां महद्वैलक्षण्यमुक्तं सर्वगतस्य ब्रह्मणः सर्वत्रैकत्वात् तथा च "तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीती"तिश्रुत्या जीवपरयोर्विभागश्रवणाद्, अनेनैव जीवानामितरेतरस्वरूपभेदश्च स्पष्ट एव दर्शितः। अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्य इति श्रुतेः।

न त्वेवाहं जातु नासं न त्वं नेमे जनाधिपाः ।
न चैव न भविष्यामः सर्वे वयमतः परमिति—

भगवद्वचनाच्च। एतेनैकजीववादपक्षो निरस्तो भवति। अन्यथै-कस्मिन्नपि जीवात्मनि सुप्ते मूर्च्छिते मृते वा निखिलजीवनिका-यस्यामनीषापत्तेः। अनेनैवात्मनामितरेतरसुखादिगुणसाङ्कर्य-शङ्काऽपि दूरतो निरस्ता।

ननु स्यादेतत्क्षेत्रज्ञानां प्रतिशरीरं स्वरूपभेदस्तथाऽपि तत्रैकैकस्य साधनसंपत्त्या क्रमेण मोक्षापत्तौ सर्वां कदा चित्स-र्वेष्वपि मुक्तेषु सृष्ट्यत्यन्ताभावोऽपि सम्भाव्य इति शङ्कां परिह-र्तुकामो भगवान्ग्रन्थकारो विशिनष्टि—अनन्तव्यक्तिरिति। सङ्ख्यानिरूपितावसानशून्यः। तथा चाह भगवान्पराशरः।

स्थूलैः सूक्ष्मैस्तथा सूक्ष्मसूक्ष्मैः सूक्ष्मतरैस्तथा।
स्थूलैः स्थूलतरैश्चैव तत्सर्वं प्राणिभिर्वृतम्॥
अङ्गुलस्याष्टमो भागो न सोऽस्ति मुनिसत्तम!।
न सन्ति प्राणिनो यत्र निजकर्मनिबन्धनाः॥
सर्वे चैते वशं यान्ति यमस्य भगवन्किल।
आयुषोऽन्ते, ततो यान्ति यातनास्तत्प्रचोदिताः॥
यातनाभ्यः परिभ्रष्टा देवाद्यास्वथ योनिषु।
जन्तवः परिवर्त्तन्ते शास्त्राणामेष निर्णय—

इत्यादिना बद्धानामसङ्ख्यातत्वं निरूपितम्। शास्त्राणामे-षनिर्णय इति निर्णयपदप्रयोगाच्छङ्काऽवकाशो दूरतोऽपास्तो-भवति। बद्धो नामानादिकर्मवासनाकार्यदेवतिर्यगाद्यनेकविधश-रीरेषु तत्सम्बन्धिषु चात्मीयाभिमानकः। सोऽपि द्विविधो मुमुक्षव-मुमुक्षुभेदात्। आद्यः, आध्यात्मिकादिविविधविचित्रदुःखानुभव-जातनिर्वेदो निःशेषदुःखनिवृत्त्यात्मकमोक्षमिच्छुः। सोऽपि द्वि-

भो, भगवद्भावापत्तिकामो निजस्वरूपोपलब्धिकामश्चेति । तस्या-प्यसङ्ख्यातत्वमाह भगवान् यमः ।

परिहर मधुसूदनप्रपन्नान् प्रभुरहमन्यनृणां न वैष्णवाना-मिति ।

द्वितीयस्यानुसन्धेयं भगवद्वाक्यं—

क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसामिति ।

अमुमुक्षुश्च वैषयिकभोगकामः । सोऽपि द्विविधः । भा-विश्रेयस्को नित्यसंसारी च । तेषामनन्तत्वं पराशरवाक्याद्बो-ध्यम् । नित्यसंसारिणां विशेषश्च श्रीमुखेन गीतः ।

क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिष्वि—

आदिना । किं च मुक्तो द्विविधः । नित्यमुक्तो बद्धमुक्त-श्चेति । तत्र नित्यमुक्तो गर्भजन्मजरामरणादिप्रकृतिसम्बन्धतत्का-र्यदुःखविषयकानुभवशून्यत्वे सति नित्यनिरतिशयभगवदीयदर्श-नादिभजनानन्दैकरसो विश्वक्सेनगरुडादिगणः । तस्याप्यसङ्-ख्यातत्वं "तद्विष्णोः परमं पदं सदा पश्यन्ति सूरय" इत्यादिश्रु-तिनिर्णीतं बोध्यम् । बद्धमुक्तश्चानादिकर्मात्मकाविद्यानिरूपित-प्रकृतितत्कार्यसम्बन्धविनिर्मुक्तः ।

बहवो ज्ञानतपसा पूता मद्भावमागताः ।
इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः ॥
सर्गेपि नोपजायन्ते प्रलये न व्यथन्त चेति—

भगवदुक्तेः । भगवद्भावापन्नस्य च तदिच्छाऽनुरूपया निजेच्छयाऽनन्तविग्रहयोगश्च भगवदवतारवच्छ्रुतिनिर्णीत एव स एकधा भवति त्रिधा भवति पञ्चधा भवति सहस्रधा भवत्यप-रिमितो भवतीत्यादिश्रवणात् । तत्सिद्धं बद्धमुक्तभेदबहुलका-नामपि सर्वेषामनन्तव्यक्तिकत्वमित्यलं विस्तरेण ।

एवमेतावता विशेषसन्दर्भेण नित्यमुक्तादीनां जीवात्मनां स्वरूपगुणपरिमाणसंख्यादिभिः साधारणत्वं निरूपितमिदानीं बद्धानां विशेषं विवेक्तुं विशिनष्टि—बन्धमोक्षार्ह इति ।

अनादिकर्मात्मकाविद्याऽवच्छिन्नो देवातिर्यङ्मनुष्यादिदेहरूपसंसारचक्रमनुभवन् श्रीभगवन्निर्हेतुककृपाकटाक्षावलोकित आचार्यदेवो भूत्वा तन्मुखनिर्झरितसच्छास्त्रार्थसुधासंप्लावितो निरस्तसंशयादिरोगो भगवत्स्वरूपगुणवैभवादिविषयकध्यानसंततिपरिपाकजन्यसाक्षात्कारनिरस्तकर्मबन्धो भगवद्भावापत्तिरूपमोक्षयोग्य इत्यर्थः ।

यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा वृणुते तनुं स्वाम् ।
तमक्रतुं पश्यति वीतशोकः धातुः प्रसादान्महिमानमात्मनः ॥

भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे ॥

यदा पश्यः पश्यते रुक्मवर्णं
कर्त्तारमीशं पुरुषं ब्रह्मयोनिम् ।
तदा विद्वान्पुण्यपापे विधूय
निरञ्जनः परमं साम्यमुपैतीत्यादि—

श्रुतिभ्यः । परमेश्वरानुग्रहोऽयं विभुरपि श्रवणादिसाधनसम्पन्ने भगवदाचार्यभक्तिसंपृक्त एवाविर्भवति नान्यत्र, ततो न साधनविषयकशास्त्रबाधस्तदुक्तसाधनवैयर्थ्यं च ।

एतेन भगवदनुग्रहस्य सर्वगतत्वे सर्वमोक्षप्रसङ्गः, परिच्छिन्नत्वे च तुच्छत्वमित्यादिशङ्का दूरतो निरस्ता । यथा तार्किकमते व्यापकस्यापि गोत्वादेः सास्नाऽऽदिमत्येव सम्बन्धः । यथौपनिषदानां पक्षे ब्रह्मस्वरूपस्य सर्वगतत्वेऽपि क्वचिदेव तदधिकारिविशेष आसन्नमोक्षक एव साक्षात्कारो नान्यत्र,

तद्वत्। एतेनैव सर्वेषामपि भगवनीयगुणानां वात्सल्यसौशील्यकारुण्यतितिक्षाज्ञानशक्तिबलैश्वर्यतेजोवीर्यादीनां स्वरूपवद् व्यापकत्वं मोक्षादिदानहेतुत्वं स्वाभाविकत्वं यावदात्मवृत्तित्वं मुमुक्षूपास्यत्वं चोक्तं भवति।

ननु भगवतीयानुग्रहः साधनान्तरापेक्षः स्वतन्त्रो वा। नाद्यः, अन्योन्याश्रयदोषप्रसङ्गात्। नान्त्यः। सर्वत्र व्याप्तिप्रसङ्गात्, सुखदुःखाद्युच्छेदापत्तेश्चेति चेन्न।

तस्य निरपेक्षत्वेऽपि नैर्घृण्यादिदोषनिवृत्तय उपायान्तरस्य तत्प्रतिपादकशास्त्रस्य च बाधानिवृत्तये चान्येषां साधनानां व्याजमात्रत्वेनाभ्युपगमान्नोक्तविकल्पावकाशः। एतदुक्तं भवति। यद्यपि "न तत्समश्चाभ्यधिकश्च दृश्यत" इत्यादिश्रुतेर्निरतिशयसाम्यस्य विश्वात्मनः पुरुषोत्तमस्यानुग्रहादीनां स्वातन्त्र्यमेव, तथाऽपि साधनान्तरप्रतिपादकशास्त्रस्यापि स्वप्रतिज्ञारूपत्वात् स्वसत्यप्रतिज्ञत्वरूव्यापकत्वाच्च तस्मिन्बाधे स्वप्रतिज्ञाहानिप्रसङ्गात् साधनान्तरमपि व्याजीभावेनावश्यङ्गृह्यते। सर्वथा निर्व्याजत्वाभ्युपगमे नैर्घृण्यादिप्रसक्तेः। तस्मात्साधनान्तरं व्याजीकृत्य स्वतन्त्रमेव फलदातृत्वं भगवदनुग्रहस्य, न हि व्याजमात्रस्य वस्तुस्वातन्त्र्यहननशक्तिः। अतिप्रसङ्गात्। तथात्वे न कश्चिद्विरोधः। अन्यथा "यमेवैष वृणुते" इत्यादिसावधारणशास्त्रबाधात्। उक्तहेतुभ्य उक्तराद्धान्त एव श्रेयान्। उक्तं चैतद्भगवद्भिराद्याचार्य्यचरणैः "कृपाऽस्य दैन्यादियुजि प्रजायते" इति। तच्च विस्तरेण व्याख्यातं श्रीपुरुषोत्तमाचार्यचरणैरतोऽत्रालं बुद्धिराश्रितेति त्वंपदार्थनिर्णयसंक्षेपः।

उक्तार्थे सम्प्रदायनिरूपितप्रमाणमाह।

**तथा चोक्तमित्यादि**—तदेव प्रमाणवाक्यमाह। ज्ञान-

स्वरूपमित्यादि । ननूदाहृतश्चेद् व्याक्रियतामयं श्लोक इति शङ्कां निराकुर्वन्नाह । व्याख्यातश्चायमित्यादि । सम्प्रदायोक्तराद्धान्तश्रुतिं प्रमाणयति—तथा च श्रूयत इति । ता एव दर्शयति "तस्माद्वा"इत्यारभ्य; न स पुनरावर्त्तत इति क्रमशोऽत्र पठनीयाः । ताश्च तत्र व्याख्यास्यन्ते ।

एतद्यो वेत्ति तं प्राहुः क्षेत्रज्ञ इति तद्विदः ।
अङ्गुलस्याष्टमो भागो न सोऽस्ति मुनिसत्तम! ।
न सन्ति प्राणिनो यत्र निजकर्मनिबन्धनाः ॥
बुद्धिर्ज्ञानमसंमोहः क्षमा सत्यं दमः शमः ।
सुखं दुःखं भवो भावो भयं चाभयमेव च ॥
अहिंसा समता तुष्टिस्तपो दानं यशोऽयशः ।
भवन्ति भावा भूतानां मत्त एव पृथग्विधाः ॥
ईश्वरः सर्वभूतानां हृद्देशेऽर्ज्जुन ! तिष्ठति ।
भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया ॥
जगद्वशे वर्त्ततेऽदः कृष्णस्य सचराचरमित्या—
दिस्मृतयोऽप्यत्रानुसन्धेयाः ।

अथाचेतनं संगृह्णाति—अचेतनपदार्थस्त्रिविध इति ।

अचेतनपदार्थस्त्रिविधः । प्राकृताप्राकृतकालभेदात् । गुणत्रयाश्रयभूतं द्रव्यं प्राकृतं, तच्च नित्यं परिमाणादिविकारि च ।

गौरनाद्यन्तवती जनित्री भूतभाविनी ।
सिताऽसिता च रक्ता च सर्वकामदुघा विभोरिति
श्रुतेः ।

निर्गुणं तज्जगद्योनिरनादिप्रभवाप्ययम् ।
अचेतनपदार्थश्च नित्या सततविक्रिया ॥
त्रिगुणं कर्मणां क्षेत्रं प्रकृते रूपमुच्यते ।

इत्यादिस्मृतेश्च । गुणाश्च सत्त्वरजस्तमांसि ।
तदेव हि स्वगुणैः क्षेत्रज्ञानां देहेन्द्रियमनोबुद्ध्यादिरूपेण परिणतं सज्जीवबन्धनहेतुर्मोक्षप्रतिबन्धकतया चोच्यते महदादिब्रह्माण्डस्य जगतः कारणीभूतं च, तत्कार्यं चानित्यं बोध्यम् ।

त्रैविध्यं व्यनक्ति । प्राकृताप्राकृतकालभेदादिति । तत्र तेषु त्रिविधेषु मध्ये । प्राकृतं लक्षयति—गुणत्रयाश्रयभूतमिति । गुणत्रयाश्रयत्वे सति द्रव्यत्वं प्राकृतत्वमिति लक्षणं बोध्यम् । अजामेकां लोहितशुक्लकृष्णामिति श्रुतेः । तुच्छत्वपक्षं निराकुर्वन्नाह । तच्च नित्यमिति । आद्यन्तशून्यमित्यर्थः ।

ननु सदेव सोम्येदमग्र आसीत्, तदेवर्त्तं तदु सत्यमाहुस्तदेव ब्रह्म परमं कवीनामित्यादिश्रुतौ ब्रह्मणः सत्यताऽवधारणादन्ययोगव्यवच्छेदार्थकेनैवकारेण ब्रह्मव्यतिरिक्तस्यासत्यत्वावधारणाद् मिथ्यैवेदं ब्रह्मण्यज्ञानारोपितं भाति शुक्तिरजतवदिति चेन्न ।

असत आरोपासम्भवात् । एकत्र सत एवान्यत्रारोपनियमात् । न हि स्वरूपेणासतः शशशृङ्गादेः क्वचिदारोपो दृष्टः श्रुतो वा । अन्यथा तिलेभ्य इव सिकताभ्योऽपि तैलोत्पत्तेरभ्युपगमः स्यात् । न चारोपे तद्विषयकप्रतीतिमात्रम-

पेक्षितं न विषयसद्भावोऽपीति वाच्यम् । असतः प्रतीतेरेवासम्भवात् । असतः सम्भवः कुत इति वचनात् ।

ननु शुक्तौ रजतप्रतीतिवत्प्रपञ्चप्रतीतेरपि, दोषमात्रमेव कारणमपेक्षितं न विषयसद्भाव इति चेन्न ।

दोषात्मककारणस्यापि तुच्छत्वाविशेषेण भवन्मते प्रतीतिलक्षणकार्य्योत्पत्तेरसम्भवात् । कार्य्यस्य कारणसत्ताऽपेक्षित्वनियमात् । कुत्राप्यसतः कारणत्वादर्शनाच्च । न चासत्यस्याप्यारोपेऽपि सर्पस्य भयादिजनत्वदर्शनात्कार्यस्य कारणसत्ताऽपेक्षित्वनियमभङ्गो दृश्यत इति वाच्यम् । स्वरूपेणासतः कार्योत्पत्त्यनुकूलशक्तिमत्त्वलक्षणकारणत्वासंभवात् । सर्पभ्रमस्थलेऽपि सर्पविषयकज्ञानस्यैव भयादिहेतुत्वं, नारोपितसर्पस्य । अन्यथा बालस्य सर्पविषयकज्ञानासन्ताभाववतोऽपि भ्रमो भयकम्पादिश्च भवेद् न तु तदस्ति, प्रत्युत सत्यस्यापि सर्पस्य बालैः स्वहस्तसंस्पर्शादर्शनात् । किं च कारणमात्रस्याप्यसत्त्वाङ्गीकारे कार्योत्पत्तिकथनस्यैवानुपपन्नत्वात् । न चासतोऽपि रज्जुसर्पादेर्ज्ञानकारणत्वोपपत्तिवद्भयादिकारणत्वोपपत्तिरपि कथं न स्यादिति वाच्यम् । तत्रापि दोषस्यैवासद्विषयकज्ञानकारणत्वान्न, विषयस्य । अन्यथाऽसत्यपि तमोरूपे दोषे रज्जौ सर्पज्ञानं केन वार्यते तवाभिमतकारणरूपस्यासद्विषयस्य विद्यमानत्वादित्यर्थः ।

नन्वतीतानागतवृष्टिविषयकज्ञानोत्पत्तिस्थलेऽसत एव वृष्टिरूपविषयस्य स्वज्ञानजनकत्वदर्शनात्, तथाऽत्रापि संभवत्येवेति चेन्न ।

अतीतवृष्टिविषयकज्ञानोत्पत्तौ तत्कार्यस्येदानीन्तनस्य सत एवाबादे, रनागतवृष्टिविषयकज्ञानोत्पत्तौ च तज्ज्ञापकरूपका-

रणस्य सत एव ज्योतिःशास्त्रस्य सद्भावत्वात् । नासतो-विषयस्य क्वापि ज्ञानादिकारणत्व,मप्रामाणिकत्वात् । न च वाचाऽऽरम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यमितिश्रुतिसिद्धत्वाद् ब्रह्मणि विवर्त्तमेवेदं सर्वमिति वाच्यम् । विकारो नामधेयमित्यत्र विकारशब्दपाठादेव विवर्त्तपक्षस्योक्तश्रुत्यैव निरस्तत्वात् । विकारो नामधेयमित्यत्र, विकारत्वं च परिणमनशील एव द्रव्ये दृष्टचरम्, अन्यथा भ्रान्तिर्नामधेयमित्युक्तं स्यात् । किं च विवर्त्तदृष्टान्तानां भवदभिमतानां शुक्तिरजतरज्जुसर्प्पादीनां क्वाप्यश्रवणात् प्रतिज्ञाबाधाच्च । तथा हि च्छन्दोगा आमनन्ति "उत तमादेशमप्राक्षो येनाश्रुतं श्रुतं भवत्यमतं मतं भवत्यविज्ञातं विज्ञातमिति," कथं नु भगवः स आदेशो भवतीति, यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्याद्, यथैकेन लोहमणिना सर्वं लोहमयं विज्ञातं स्यादित्यादिना कारणविज्ञानेन कार्यविज्ञानं प्रतिज्ञातं, तत्र यथा मृत्पिण्डस्य घटाद्युपादानकारणस्य विज्ञानेन सर्वं मृद्विकारजातं घटादिरनुभूयते मृन्मयत्वेन, न तथा रज्जुज्ञानेन सर्पमात्रस्य रज्जुमयत्वेन विज्ञानं शुक्तिज्ञानेन रजतमात्रस्य शुक्तिमयत्वेन वा विज्ञानं दृष्टचरं श्रुतं च, सर्वानुभवविरोधात् । श्रौतप्रतिज्ञाहानिरित्यर्थः । तस्मात्सदेवेदं सर्वमिति राद्धान्तः श्रौतत्वात्साधीयान् । तथा च श्रुतिः सदेव सोम्येदमग्र आसीत् ।

गौरनाद्यन्तवती जनित्री भूतभाविनी, ऊर्ध्वमूलोऽवाक्शाख एषोऽश्वत्थः सनातनः तत्सदासीत् प्राणा वै सत्यं तेषामेष सत्यम्,

असत्यमाहुर्जगदेतदज्ञाः
शक्तिं हरेर्न विदुर्ये परां हि ।

य: सत्यरूपं जगदेतदीदृक्

स्रष्टा त्वभूत् सत्यकर्मा महात्मा ॥

अथैनमाहुः सत्यकर्मेति सत्यं ह्येवेदं विश्वमसौ सृजते अथैनमाहुर्नित्यकर्मेति नित्यं ह्येवासौ कुरुतेऽष्टरूपामजां ध्रुवामित्यादि, सत्त्वाच्चावरस्य, असद्व्यपदेशादिति चेन्न धर्मान्तरेण वाक्यशेषाद्, युक्तेः शब्दान्तराच्चेत्यादिन्यायः—

ऊर्ध्वमूलमधःशाखमश्वत्थं प्राहुरव्ययम्—

असत्यमप्रतिष्ठं च जगदाहुरनीश्वरमिति—

भगवद्वचनं च। नन्वसद्वा इदमग्र आसीदित्यादिनाऽसत्त्वस्यापि श्रवणात् कथं विरोधपरिहार इति चेत्तत्राह-परिणाम्यादि-विकारि चेति। विकारित्वरूपासत्त्वपरत्वादुक्तवाक्यस्य सूक्ष्मावस्थाऽऽपत्तिप्रतिपादनपरत्वाद्वा। तथा चाह भगवान्पराशरः—

तदेतदक्षयं नित्यं जगन्मुनिवराखिलम्।

आविर्भावतिरोभावजन्मनाशविकारवदिति—॥

विष्णुपुराणे। तस्माद्विकारित्वाकरोऽंकाशसत्त्वस्य जगतः कारणावस्थायामनभिव्यक्तनामरूपकत्वादसदादिशब्दवाच्यत्वाभिधानमप्यविरुद्धम्। कार्यावस्थायान्त्वभिव्यक्तनामरूपकत्वादाविर्भूतविस्तारकसदादिपदवाच्यतामभजत इति श्रुत्यविरोधः। अन्यथा कथमसतः सज्जायेतेति वाक्यशेषविरोधात्। तथा चोक्तं वैष्णवे श्रीध्रुवेण—

न्यग्रोधः सुमहानल्पे यथा बीजे व्यवस्थितः।

संयमे विश्वमखिलं बीजभूते तथा त्वयि॥

बीजादङ्कुरसंभूतो न्यग्रोधः सुसमुत्थितः।

विस्तारं च यथा याति त्वत्तः सृष्टौ तथा जगदिति॥

वक्ष्यते च भगवान् सूत्रकारः "पटवच्चे"ति सूत्रेण। यथा संकुचितः पटः पटत्वेनागृह्यमाणोऽपि पट एव, प्रसारणे तु पटत्वेन स्पष्टतया गृह्यत एव, तथा तिरोभावापन्नमव्यक्तमपि जगत्कार्यत्वेन नामरूपाभ्यामगृह्यमाणमपि सदेवा,विर्भूतं तु प्रत्यक्षागमाभ्यां सत्त्वेन स्पष्टं गृह्यत इति सूत्रार्थसंग्रहः।

नन्विदं मिथ्या दृश्यत्वात् शुक्तिरजतवदित्यनुमानं कार्यासत्त्वे प्रमाणमिति चेन्न। दृश्यत्वस्य हेतोः साध्याभाववति ब्रह्मण्यतिव्याप्तत्वात् साधारणानैकान्तिकत्वेन हेत्वाभासत्वात्। एवं दृश्यत्वाविशेषाद् ब्रह्मणोऽपि मिथ्यात्वं समानमेव। ब्रह्म मिथ्या दृश्यत्वात् प्रपञ्चवदितिप्रयोगोऽपि वक्तुं समञ्जसः। श्रूयते च तस्य दृश्यत्वम्-आत्मा वा रे द्रष्टव्यः, आत्मन्परे दृष्टे श्रुते, दृश्यते त्वग्रया बुद्धया, सदा पश्यन्ति सूरयः, यत्तत्पश्यसि तद्वद, तमसः पारं दर्शयति, तस्मिन् दृष्टे परावरे, इत्यादिश्रुतिभ्यः।

ननु न चक्षुषा गृह्यते नापि वाचा न संदृशा, तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चनैनमित्यादिश्रुतिभ्यः सर्वप्रमाणाविषयत्वाद् दृश्यत्वनिषेधाद् ब्रह्मणो नोदाहृतवाक्यविषयत्वं, किन्तु मायाशबलस्यैव बुद्धिवृत्तिविषयत्वाभ्युपगमाद्, न निर्गुणनिर्विशेषस्य, मायाशबलस्य तु दृश्यत्वमिथ्यात्वयोरिष्टापन्नत्वादस्माकमिति चेन्न।

दर्शनविषयस्यैव परत्वविधानान्नोक्तसिद्धान्तस्य साधीयस्त्वं-प्रमाणवत्त्वं च। स एतस्माज्जीवघनात्परात्परं पुरि शयम्पुरुषमीक्षते प्रधानपुरुषव्यक्तकालानां कारण हि यत् पश्यन्ति सूरयो नित्यं तद्विष्णोः परमं पदमित्यादिश्रुतिस्मृतिभ्यः परस्यैव ब्रह्मणो दर्शनयोग्यत्वविधानात्। निषेधश्रुतीनां दर्शनयोग्यचर्मदृष्टि-

कदर्शननिषेधपरत्वेन नैराकाङ्क्ष्याद् । निर्णीतं स्वयमेव
मुखेन—

न तु मां शक्यसे द्रष्टुमनेनैव स्वचक्षुषा ।
दिव्यं ददामि ते चक्षुः पश्य मे योगमैश्वरमि—॥

त्यादिना । तस्माद्धेत्वाभासकमिदमनुमानं न प्रमाणपदवीमा-
शक्नोतीति सिद्धमुक्तसिद्धान्तस्यैव गरीयस्त्वम् ॥

उक्तार्थे शास्त्रं प्रमाणयति—गौरनाद्यन्तवतीत्यादि ॥
ानुद्दिशति । गुणाश्चेति । तत्र ज्ञानादिकारणत्वे सति
त्वं सत्त्वगुणत्वम् । सत्त्वात्संजायते ज्ञानमिति वचनात् ।
सत्त्वं ज्ञानसुखाद्यभिमानेन बन्धकारणं रजस्तमोऽभिभवपू-
त्कटं च सन्मोक्षनिमित्तं च भवति शमदमादिसाधनरूपेणेति
कः । लोभादिकारणत्वे सति गुणत्वं रजस्त्वम् । रजसो
ा एव चेति वचनात् । एतदेव लोभादिना क्षेत्रज्ञानां तत्त्व-
ा प्रच्यवनहेतुः । प्रमादादिकारणत्वे सति गुणत्वं तमस्त्वम् ।

प्रमादमोहौ तमसो भवतो ज्ञानमेव चेति

वचनात् । इदमेव स्वपरस्वरूपावरणहेतुभूतम् ।

अथ प्राकृतस्य फलं दर्शयति-तदेवेति । एवकारोऽन्ययोग-
व्यवच्छेदार्थकः । स चाप्राकृतं वस्तु व्यावर्तयति, प्राकृतमेव व-
स्तुर्नाप्राकृतमित्यर्थः । स्वगुणैरुक्तलक्षणैः सत्त्वादिभिः। यद्यपि
त्त्वगुणस्य मोक्षहेतुत्वमपि निरूपितं, तथाऽपि ज्ञानसुखादिसङ्गे-
बन्धकत्वं तस्यापि गीतत्वात् तदभिप्रायेण बन्धहेतुत्वं प्रति-
पादित इत्यर्थः ।

सुखसङ्गेन बध्नाति ज्ञानसङ्गेन चानघेति—

गानात् । क्षेत्रज्ञानामिति । अनादिकर्मात्मकाविद्यासंकुचि-
तज्ञानानामित्यर्थः । देहो द्विविधः । सूक्ष्मस्थूलभेदात् । इन्द्रिया-

णि द्विविधानि। ज्ञानेन्द्रियाणि कर्मेन्द्रियाणि च। तत्र श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणभेदात् पञ्च ज्ञानेन्द्रियाणि। तेषां शब्दस्पर्शरूपरसगन्धविषयकज्ञानकारणत्वात्। वाक्पाणिपादपायूपस्थानां पञ्चानां च वचनादानगत्युत्सर्गानन्दानां कर्मणां हेतुत्वात् कर्मेन्द्रियत्वं ज्ञेयम्। बुद्ध्यादिरूपेणेत्यत्रादिपदेन चित्ताहङ्कारादिसंग्रहः। महदादिब्रह्माण्डान्तं कार्यं प्रकृतिकार्यत्वात् त्रिगुणात्मकद्रव्यत्वाच्च सर्वं प्राकृतमेवेति संक्षेपः।

इत्थं प्राकृतं निरूप्याप्राकृतं संग्रहीतुमुपक्रमत उद्देशलक्षणप्रमाणैः।

अथेत्यादिना।

अथाप्राकृतं नाम त्रिगुणप्रकृतिकालात्यन्तभिन्नमचेतनं च। आदित्यवर्णं तमसः परस्तादिति श्रुतेः। तच्च प्रकृतिमण्डलभिन्नदेशवृत्तिनित्यविभूतिविष्णुपदपरमव्योमपरमपदादिशब्दाभिधेयम्। योऽस्याध्यक्षः परमे व्योमन् तिष्ठति, तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः, एते वै निरयास्तात लोकस्य परमात्मन इत्यादिवचनेभ्यः। तच्च भगवतीयानादिसङ्कल्पात्तस्य तदीयानां नित्यमुक्तानां च भोग्यादिरूपेणानेकरूपं परिणामादिविक्रियाऽनर्हं च। कालातीतत्वात्।

कलामुहूर्तादिमयश्च कालो न यद्विभूतेः परिणामहेतुः।

**तवाष्टगुणमैश्वर्यं नाथ ! स्वाभाविकं परमि-त्यादिवचनात् ।**

अथानन्तरं प्राकृतवस्तुनिरूपणानन्तरं तत्राप्राकृतं नामे-त्युद्देशः । उद्दिष्टस्य लक्षणमाह—त्रिगुणप्रकृतिकालवर्जितत्वे सति प्रकाशात्मकानावरकस्वभावत्वे सत्यचेतनत्वं नेति । उक्तार्थे श्रुतिं प्रमाणयति—**आदित्यवर्णमिति** । आदित्यवर्णपदेन प्रकाशरूपत्वम् अनावरकत्वं चोक्तम् । तमसः परस्तादित्यनेन च तमःशब्दवाच्यप्रकृतिकालाभ्यां विलक्षणत्वमित्यर्थः । एवं मायान्यतो निरूप्य तस्य विशेषं संग्रहीष्यन् तत्पर्यायनिर्देशमाह । **तच्च प्रकृतिमण्डलाभिन्नदेशवृत्ति नित्यविभूतिनाक-पदपरमव्योमपरमपदादिशब्दाभिधेयमिति** । उक्तपर्यायेषु श्रुतिमुदाहरति—**योऽस्याध्यक्षः परमे** व्योमन्नित्यादिना । तस्य विशेषान्तरमाह—तच्चेत्यादिना । भगवतीयो य आनन्द-वदनादिविकल्पस्तत्सम्भावनात् । तस्य श्रीभगवतः । तदी-यानां पार्षदादीनाम् । तेषां द्वैविध्यमाह **नित्यमुक्तानां** नेति । नित्याश्च मुक्ताश्च तेषामिति द्वन्द्वसमासोऽत्रानुसन्धेयः । तत्र नित्यानां विग्रहस्यानादित्वमनादियोगश्च । मुक्तानां तु विग्र-हस्यानादित्वेऽपि तद्योगमात्रस्य मोक्षावस्थायां भगवत्सङ्कल्प-लभ्यत्वप्रकृतिसम्बन्धनिवृत्तिकालीनत्वमिति विवेकः । भोग्या-दिरूपेणेत्यत्रादिपदेन भोगोपकरणं भोगस्थानं च गृह्यते । तत्र नित्यमुक्तानां भोग्यं भगवद्विग्रहादि, भोगोपकरणं च स्वविग्र-हादि भूषणायुधयानासनकुसुमसुगन्धस्रक्चन्दनादिकं च, भो-गस्थानानि च गोपुरचत्वरप्राकारमणिमण्डपसरोवरोपवनादि-कानि । तत्र परिणामादिविकारशङ्कां वारयति—परिणामादि

विक्रियाऽनर्हं चेति। निर्विकारत्वं हेतुमुखेन प्रतिपादयति—कालातीतत्वादिति। उक्तमर्थं शास्त्रोक्तेन द्रढयति—कलामुहूर्त्तादीति। तत्र कालप्रभावाभावान्निर्विकारत्वमित्यर्थः। तन्मूलकानुमानं चाप्यत्र प्रमाणम्—अप्राकृतद्रव्यं निर्विकारं कालातीतत्वाद् यदेवं तदेवम्, आत्मवदिति, व्यतिरेके च यन्नैवं तन्नैवं पृथिव्यादिवदिति।

ननु लीलाविभूतेः कालाधीनत्वदर्शनादुक्तस्य हेतोरनैकान्तिकत्वादप्रामाण्यमिति चेन्न।

लीलाविभूतौ परमेश्वरस्य कालपारतन्त्र्यानुकरणमात्रत्वान्नोक्तदोषावकाशः। नित्यविभूतौ तु न तच्छङ्काऽवकाशगन्धोऽपीति वक्ष्यते कालनिर्णयसंदर्भे इत्यप्राकृताचेतनसंग्रहः।

प्रतिज्ञातेषु त्रिविधाचेतनविषयेष्ववशिष्टं कालं लक्षणप्रमाणाभ्यां निर्णेतुकामः प्रथमं तल्लक्षणमाह। अथ प्राकृताप्राकृतोभयभिन्नाचेतनद्रव्यविशेषः कालपदार्थ इति।

**अथ प्राकृताप्राकृतोभयभिन्नाचेतनद्रव्यविशेषः कालपदार्थो नित्यो विभुश्च। अथ नित्यानि ह वै पुरुषः प्रकृतिः काल इत्यादिश्रुतेः। सदेव सोम्येदमग्र आसीदिति श्रुतौ सृष्टेः प्रागग्रशब्दवाच्यस्य कालस्य सत्यत्वश्रवणाच्च।**

**अनादिर्भगवान् कालो नान्तोऽस्य द्विज! विद्यते,**

न सोऽस्ति प्रत्ययो लोके यत्र कालो न भासते,

इत्यादिस्मरणाच्च। स च भूतभविष्यद्वर्त्तमानयुगपत्चिरक्षिप्रादिव्यवहारासाधारणहेतुः सृष्ट्यादिसहकारिपरमाण्वादिपरार्द्धावसानव्यवहारासाधारणं च। तस्य च पुराणेषु प्रसिद्धत्वान्नात्र विस्तारः। सर्वमपि प्राकृतवस्तु कालतन्त्रम। कालस्य सर्वनियामकत्वेऽपि परमेश्वरनियम्यत्वमेव। ज्ञः कालकालो गुणी सर्वविद्य इतिश्रुतेः। लीलाविभूतौ तु परमेश्वरस्य कालपारतन्त्र्यानुकरणमात्रमेव। नित्यविभूतौ तु न तत्प्रभावशङ्कागन्धोऽपीति विवेकः।

अथ प्राकृताप्राकृतद्रव्यनिर्णयानन्तरमित्यर्थः। स नित्यो विभुश्चेति। अथोक्तार्थे श्रुतिम्प्रमाणयति—अथ नित्यानि ह वै पुरुषः प्रकृति काल इति।

ननु सदेव सोम्येदमग्र आसीदित्यत्र कालस्य भूतत्वनिर्देशाद् अनित्यत्वमेव, ध्वंसाभावप्रतियोगिन एव वस्तुनो भूतत्वनिर्देशदर्शनान्नोक्तसिद्धिरिति चेत्।

तत्र श्रुत्यन्तरमुदाहरन्नुपपत्तिं दर्शयति तन्मुखेनैव, सदेव सोम्येदमग्र आसीदिति श्रुतौ सृष्टेः प्रागग्रशब्दवाच्यस्य कालस्य सत्यत्वश्रवणाच्चेति। न हि ध्वंसाभावप्रतियोगिन एव भूतत्वनिर्देशार्हत्वमिति नियमः, तस्मिन्नेव

[illegible] नित्यशुद्धस्य ब्रह्मणो भूतत्वनिर्देशश्रवणात्। तस्यापि प्रागभावो भवद्भिरङ्गीकार्य एव तथा सति ब्रह्मणो मिथ्यात्व-मापद्येत। अयं भावः। कालस्य नित्यत्वादखण्डत्वेऽपि औपाधिकरूपेण। नित्यत्वस्यापरिच्छिन्नत्वात् सर्वं समञ्जसम्। उपाधिश्च-सूर्यादिपरिभ्रमणरूपा क्रियैव। तेनैवोपाधिना परमाण्वादिपरार्द्धा-न्तानन्तभेदनिर्देशो ह्यविरुद्धः। तस्य च पुराणेषु विस्तारित-[illegible]भागीत। तदेवार्थतः स्मृतिमुखेनोपोद्बलयति—अ-नादिर्भगवान्कालो नान्तोऽस्य द्विज! विद्यत इति। वैष्णवे तस्यानाद्यनन्तत्वविधानात्। तत्रैव वाक्यान्तरं प्रमाणयति—न-न्तोऽस्तीति। तस्य कार्यं संग्रहेण दर्शयति—स चेति। उक्तल-क्षणः कालः। भूतभविष्यदादिव्यवहारहेतुत्वात्। तद्व्यवहारस्तस्यौ-पाधिककार्यभूत इत्यर्थः। तस्य शक्तिं दर्शयति-सर्वमपि प्राकृ-तवस्तु कालतन्त्रमिति। यद्यप्यत्र प्राकृतशब्दप्रयोगेणैवेश्व-रादिव्यावृत्तिस्तथाऽपि मन्दमतीनां सन्देहनिवृत्तये स्पष्टत्वेनाह-कालस्येत्यादिना। परमेश्वरनियम्यत्वमेवेति। तस्य सर्व-नियन्तृत्वात्। नियम्यत्वं चात्रोपलक्षणं परमेश्वराधेयत्वं तद्व्याप्यत्वं तदात्मकत्वं चोपलक्षयति। एतेन सेश्वरजगत्कालाधेयमिति पक्षो निरस्तो बोध्यः। उक्तार्थस्य श्रौतत्वयोगं विधत्ते-ज्ञः काल-काल इत्यादि। तत्र ज्ञः सर्वज्ञः, सर्वदेशकालवस्तुविषयकसामा-न्यज्ञानाश्रयत्वात्। यः सर्वज्ञ इति श्रुत्यन्तरात्। कालस्यापि कालो नियन्ता सर्वान्तर्यामित्वादेव, एष सर्वभूतान्तरात्मेति श्रुतेः। गुणीति। स्वाभाविकनिरतिशयापरिमितयावदात्मवृत्तिज्ञानश-क्तिबलतेजोवीर्यकारुण्यदयाक्षमातितिक्षावात्सल्यसौशील्यार्जवा-द्यनन्तकल्याणगुणाब्धिः स्वाभाविकी ज्ञानबलक्रिया चेति श्रुतेः। सर्ववित्सर्वविशेषज्ञानाश्रयः। ज्ञ इत्यत्र सामान्यज्ञानस्य, सर्वविदि-

त्यत्र विशेषज्ञानस्य चोक्तत्वान्न पौनरुक्त्यदोषः शङ्कनीय इत्यर्थः ।

प्रासङ्गिकपदार्थकथनस्य प्रयोजनमाह—मुमुक्षूणामुपकारार्थमिति ।

**मुमुक्षूणामुपकारार्थं संक्षिप्तोऽयं सिद्धान्तः प्रासङ्गिकः, तस्य च श्रीनिवासाचार्यचरणैर्निगदभाषितत्वान्नात्र विस्तारः ।**

**शङ्खावतारः पुरुषोत्तमस्य**<br>
**यस्य ध्वनिः शास्त्रमचिन्त्यशक्तिः ।**<br>
**यत्स्पर्शमात्राद् ध्रुव आप्तकाम-**<br>
**स्तं श्रीनिवासं शरणं प्रपद्ये ॥**

इति ।

मुमुक्षवश्चात्र मन्दमतयः श्रीनिवासाचार्यप्रणीतशास्त्रविचारानर्हास्तदुक्तसिद्धान्तजिज्ञासवोऽलसाः शिथिलप्रयत्ना गृह्यन्ते । तेषामुपकारार्थम् । उपकारश्चाल्पप्रयासेन सर्वशास्त्रार्थविषयकज्ञानप्राप्तिस्तदर्थः ।

नन्वेवं तर्हि विदुषां सर्वविवेकसंपत्तिकुशलानामत्राधिकारो न स्यादित्याशङ्क्याह—तस्य च श्रीनिवासाचार्यचरणैरिति । तेषां सर्वशास्त्रविचारसामर्थ्यायोगादाकरसन्दर्भविचारेणापि पुरुषार्थसिद्धिरिति भावः ।

---

१ । तथाच श्रीमद्भागवते चतुर्थस्कन्धे नवमेऽध्याये ।<br>
स तं विवक्षन्तमतद्विदं हरिर्ज्ञात्वाऽस्य सर्वस्य च हृद्यवस्थितः ।<br>
कृताञ्जलिं ब्रह्ममयेन कम्बुना पस्पर्श बालं कृपया कपोले ॥<br>
स वै तदैव प्रतिपादितां गिरं दैवीं परिज्ञातपरात्मनिर्णयः ।<br>
तं भक्तिभावोऽभ्यगृणादसत्वरं परिश्रितोरुश्रवसं ध्रुवक्षितिरिति ॥

शास्त्रारम्भे मङ्गलमाचरति सम्प्रदायाचार्यनतिलक्षणं श्रीविश्वाचार्यप्रणीतेन श्लोकेन—शङ्खावतार इति । तं श्रीनिवासमिति । श्रीनिवासाचार्यं शरणं प्रपद्य इति । साधनत्वेन फलरूपत्वेन चाश्रयामीत्यर्थः । तत्स्वरूपमाह-पुरुषोत्तमस्येति । क्षराऽक्षरपदार्थाभ्यामुत्तमस्य श्रीकृष्णस्य शङ्खावतारः । यस्य ध्वनिरचिन्त्यशक्तिरिति । तथाभूतायां शक्तौ हेतुमाह—शास्त्रमिति । शास्त्ररूपत्वात्तद्ध्वनेरचिन्त्यशक्तित्वमित्यर्थः । यद्वाऽचिन्त्यशक्तीति शास्त्रविशेषणम् । तस्याचिन्त्यशक्तियोगस्य सुप्रसिद्धत्वात् । उक्तार्थे प्रमाणं वदन्नचिन्त्यशक्तित्वं व्यनक्ति यत्स्पर्शमात्रादिति । ध्रुव औत्तानपादिः । यथा पूर्वं स्पर्शमात्रेणैव ध्रुवाय शक्तिं समचारयत् तथैव ममापि तच्चरणाश्रयणादेव शास्त्रप्रवृत्तिशक्तियोगः स्यात् । तस्माच्छ्रेयस्कामैस्तच्चरणारविन्दमेव सकलपुरुषार्थसिद्धये नितरां वरणीयम् । तस्यैव मुमुक्षुगतित्वादिति भावः ।

यो ब्रह्माणं विदधाति पूर्वं
विद्यां तस्मै ह्युपदिष्टवांश्च कृत्स्नाम् ।
तं श्रीगुरुं सर्वबुद्धिप्रकाशं
देवाऽऽचार्यं सततं चिन्तयेऽहम् ॥

इति ब्रह्मजिज्ञासाऽधिकरणम् ।

अथ व्युत्पादितस्य पदार्थस्य लक्षणप्रमाणमापेक्षत्वादनुवादपूर्वकं लक्षणप्रमाणाभ्यां दार्ढ्यार्थं प्रथमं लक्षणसूत्रं व्याख्यातुं प्रतीजानीते—एव मित्यादिना ।

एवं निर्वचनमुखेन व्युत्पादितं जिज्ञास्यं लक्षणमुखेनापि निरूप्यते-जन्माद्यस्ययत इति ।

## जन्माद्यस्य यतः १।१।२

जन्माऽऽदिर्यस्य तदिदं जन्मादि, सृष्टिस्थितिलयम्। तद्गुणसंविज्ञानबहुव्रीहिः। लम्बकर्णमानयेतिवत्। अस्येतिशब्दः कार्यपरः। यत इति कारणात्मकब्रह्मवाचकः । यतो यस्मात् सर्वेश्वरात् सर्वज्ञात् सर्वशक्तेःपरमकारणात् सर्वनियन्तुः पुरुषोत्तमाच्छ्रीभगवतोऽस्य विश्वस्य नामरूपाभ्यां-व्याकृतस्य विविधविभक्तभोक्तृसंयुक्तस्य नियतदेशकालफलोपभोगाश्रयभूतस्य तर्कागोचररचनस्य जन्मस्थितिप्रलयाः प्रवर्त्तन्ते तद् ब्रह्म तदेव जिज्ञास्यमिति सूत्राक्षरयोजना। यत्तच्छब्दयोर्नित्यसम्बन्धात्। तथा च श्रुतिः—यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति तद् ब्रह्म तद्विजिज्ञासस्वेत्यादिः ।

**एवम्** उक्तप्रकारेण। **जिज्ञास्यं** जिज्ञासाविषयो ज्ञेयमिति यावत्। लक्षणसूत्रं च, जन्माद्यस्य यत इति। **लम्बकर्णमिति**। यथा लम्बकर्णमित्यस्य सावयवार्थोपस्थापकत्वं तथाऽत्रापीति ज्ञेयम्। पदार्थमुक्त्वा वाक्यार्थमाह—**यतो यस्मादित्यादि**। यस्मात् सर्वेश्वराद्भगवतोऽस्य जन्मादयः प्रवर्त्तन्ते तद् ब्रह्मेत्यन्वयः। पदसन्निवेशप्रयोजनं व्यनक्ति-**सर्वेश्वरेति**। ईश्वरशब्दस्य **ब्रह्मा** दिलोकपालेष्वपि तद्वाचकतया व्यभिचारात् तद्वारणाय **सर्वेति**। ईश्वरेश्वरादिति यावत्। तमीश्वराणां परमं महेश्वरमिति श्रुतेः। तत्र हेतुगर्भितविशेषणद्वयम्—**सर्वज्ञात् सर्वशक्तेरिति**। वक्ष्यमाणेषु कारणत्वेन प्रतीयमानेष्वन्याभिमतेष्वतिप्रसङ्गवारणाय विशेषणं **परमेति**। अभिन्ननिमित्तोपादानकारणादिति यावत्।

नन्वभिन्ननिमित्तोपादानस्य क्वाप्यदृष्टत्वात् कथमेवं व्याख्यायत इति चेन्न। कस्य चिन्मते घटेश्वरसंयोगादौ जीवगतज्ञानादौ च कार्ये ईशजीवयोस्तथाभूतकारणत्वदर्शनान्नात्यन्ताप्रसिद्धिः। तद्दृष्टान्तेनात्रापि तथात्वं सिद्ध्यत्येव। न केवलमेतावतैव तर्केण प्रामाण्यं, "प्रकृतिश्चे"ति शास्त्रस्यापि वक्ष्यमाणस्य प्रमाणत्वात् सुतरामसम्भवाभावः। तत्रापि हेतुमाह—**सर्वनियन्तुरिति**। भगवच्छब्दस्यान्यत्रापि जीवे गौणत्वेनातिव्याप्तेस्तच्छङ्कां निरस्यति—**पुरुषोत्तमादिति**। कार्यं विशिनष्टि—**नामरूपाभ्यामिति**। नाम देवदत्तादि, रूपमाकृतिर्देवतिर्यङ्मनुष्यादि, ताभ्यां, नामरूपे व्याकरवाणीति श्रुतेः। **व्याकृतस्य**। विकारभाजितस्य। **विविधविभक्तभोक्तृसंयुक्तस्येति**। विविधैरनेकैर्विभक्तैरनादिकर्मतन्त्रतया स्वस्वकर्मानुरूपविभागवैचित्र्यं भजद्भिर्भोक्तृभिस्सम्भिन्नस्येति। अनेन जीवानामनेकत्वे विचित्रकर्मणां चानादित्वे सिद्धे सति विश्वस्याप्यनादित्व-

सिद्धितरत्वेन सत्कार्यवादस्य सुतमां सिद्धिः सूचिता । तथा च श्रुतिः—ऊर्ध्वमूलोऽर्वाक्शाख एषोऽश्वत्थः सनातन इति । अथैनमाहुः सत्यकर्मेति । सत्यं ह्येवेदं विश्वमसौ सृजते । अथैनमाहुर्नित्यकर्मेति, नित्यं ह्येवार्मा कुरुत इत्यादि । ऊर्ध्वमूलमधःशाखमश्वत्थं प्राहुरव्ययमिति भगवदुक्तेश्च । कथं तर्ह्युत्पत्तिरुच्यते । शृणु । न तावत्कूटस्थत्वमस्य जगतोऽस्माकं विवक्षितं, किं तु जडाजडवेदात्मकस्य प्रपञ्चस्य मध्ये जडस्य परिणामित्वावत्त्वेन स्थूलसूक्ष्मावस्थाऽन्तरव्यक्ताव्यक्तनामरूपान्तरविभागेनावस्थितिरत्रोत्पत्तिप्रलयशब्दाभ्यां प्रतिपाद्यते । चेतनस्य तु स्वानादिकर्मणामनन्तानां प्रबलस्यैकतमस्य भोक्तृभोन्मुखत्वाय स्थूलशरीरसंयोगे सति तद्भोगार्हज्ञानशक्त्यादिप्रकाशनं जन्मशब्देन विवक्षितम् । तद्वसन्तासमरणे स्थूलदेहवियोगपूर्वकं भोगाद्यनर्हताऽऽपत्तिर्मृत्युनाशादिशब्देरभिधीयते । प्रमादं वै मृत्युमहं ब्रवीमीति स्मृतेः । इतरथा कृतनाशाकृताभ्यागमप्रसङ्गस्य दुर्वारत्वात् । वेदानां जन्मादयस्तु निर्विकारित्वेनैवाविर्भावितिरोभावमात्रं, नत्वानुपूर्व्यन्यथाभावः ।

ननु तस्माद्यज्ञात् सर्वहुत ऋचः सामानि जज्ञिरे इति जन्मश्रवणादिति चेन्न ।

अत्रापि वाक्ये जनिशब्देनाविर्भावमात्रमेव विवक्षितम् । अन्यत्र च, "अस्य महतो भूतस्य निःश्वसितमेवैतद्यदृग्वेदो यजुर्वेदः सामवेदः" इत्यादिना ब्रह्मनिःश्वासितन्यायेनाविर्भूतेरेव स्पष्टतया प्रतिपादनात् । तस्मात् सत्कार्यवादस्यैव श्रुतिसम्मतत्वेन श्रीभगवत्सूत्रकृतां सुतरां सम्मतत्वम् ।

ननु वेदस्य यदि जन्मादि नास्ति तर्हि तदभ्युपगमे पुनश्चौपचारिकत्वसाधने महाप्रयासे किं फलं स्यात् । उच्यते । तदुत्पत्ते-

श्रौपचारिकत्वस्य च श्रुतिप्रतिपादितत्वेन श्रुत्यर्थसिद्धेरेव फलत्वं भगवतो वेदकारणत्वसिद्धेरपि फलत्वमनपह्नवमिति। अयं भावः। वेदस्योत्पत्तिराविर्भूतिरूपा वेदेनैव प्रतिपाद्यते, तदनङ्गीकारे श्रुतेर्निर्विषयत्वं दुष्परिहार्यम्। तदर्थं वैदिकानां तदुक्तेरभ्युपगमः। किं च भगवतः सर्वकारणत्वं प्रतिज्ञातं, वेदस्याविर्भावाऽभावाङ्गीकारे तदव्याप्तं स्यात्, तस्माद्वेदस्याप्याविर्भावरूपोत्पत्तेरुभयसिद्धान्तयोगक्षेमायावश्यतयाऽङ्गीकार्य्यत्वमित्यलं विस्तरेण प्रासङ्गिकेन। प्रकृतमनुसरामः। अस्य सर्वज्ञानन्यकार्यत्वं द्रढयति विशेषणाभ्यां—नियतेत्यादि। नियतौ संस्कारानुरूपौ देशकालौ येषां तथाभूतानां फलानां तदुपभोगाणां चाश्रयभूतस्यात एव सर्वेषां तर्कागोचरं रचनं यस्येति। न चैवंभूतकार्यस्य सर्वज्ञादन्यस्य कारणत्वं भवितुमर्हति। मनसा तर्क्यमाण एव कार्ये स्वज्ञानपौरुषाद्यनुसारेण कर्तुः प्रयत्नस्य दर्शनादिति भावः। मायावादिमते जगत्कारणत्वोपलक्षितस्य ज्ञेयत्वप्रतिपादनात्तत्र व्यभिचारनिवृत्तये श्रौतेनैव तत्पदेन प्रतिज्ञापयति—तदेव जिज्ञास्यमिति। सूत्राक्षरेति। सूत्रगतानां पदानां योजनाऽन्वय इत्यर्थः। तद् ब्रह्मेत्यत्र तच्छब्दाध्याहारे किं मानमित्याशङ्क्य नित्यसम्बन्धस्यैव मानत्वमाह—यत्तदिति। सम्बन्धस्योभयनिष्ठत्वेनैककथनस्योभयग्राहकत्वमनवद्यमिति भावः। तत्र प्रमाणशङ्कावारणाय विषयवाक्यमवतारयति-तथा चेति। यतो वा इत्यादिश्रुत्यर्थस्तु सूत्रार्थेनैव व्याख्यातः। किं च जन्ममात्रस्यैव लक्षणत्वे पित्रादीनामपि पुत्रादिजन्मकारणत्वात्, तत्रातिप्रसङ्गवारणायाभिसंविशन्तीति। उभयस्यापि लक्षणत्वे मृदादौ व्यभिचारस्तेषामपि घटादेरुत्पत्तिलययोः कारणत्वस्य प्रसिद्धत्वात्तद्व्यावृत्तयेऽसाधारणं विशेषणद्वयमाह—येन जातानि

जीवन्ति यत्प्रयन्तीति। प्रपदसन्निवेशप्रयोजनं तत्र प्रयन्तीति प्रकर्षेण कर्मबन्धध्वंसेन यन्ति प्राप्नुवन्तीति मुक्तानां प्राप्यत्वं सूच्यते। वक्ष्यते च, मुक्तोपसृप्यव्यपदेशादिति सूत्रेण। अभिसंविशन्तीत्यनेन प्रलयकालिकप्रवेशो विवक्षितोऽतो न पौनरुक्त्यशङ्काऽवकाश इति। केचित्तु सृष्टिस्थितिसंहारनियमज्ञानाज्ञानबन्धमोक्षा अष्टौ जन्मादिपदेन व्याख्यायन्ते। तच्चिन्त्यम्। विषयवाक्येऽपठनात्। अन्यथा सुखं दुःखम्भवो भाव इत्यत्रोक्तानाम्, अन्यत्र चोक्तानां च सर्वेषामेव लक्षणत्वप्राप्तेरिति भावः।

एवं वाक्यार्थो व्याख्यातः। इदानीं स्वसिद्धान्तासहिष्णुतावतां कारणे विवदमानानां मतं स्वयं प्रेक्षको भूत्वा तेषां मुखेनैवैकैकं निरासयति। तत्र प्रथमजीवकारणवादी उत्तिष्ठते—नन्वित्यादि।

ननु सामान्यनिर्देशस्य विशेषपारतन्त्र्यादिति न्यायेन यत इति सामान्योक्त्या,

जीवाद् भवन्ति भूतानि
जीवे तिष्ठन्त्यचञ्चलाः।
जीवे प्रलयमिच्छन्ति
न जीवात् कारणं परमिति—

श्रुत्या विशेषत्वेन विधानाज्जीवस्यैव कारणत्वमिति चेन्न।

सदेव सोम्येदमग्र आसीद्,एकमेवाद्वितीयमित्यादिना कारणस्यैकत्वप्रतिपादनात्, चेतनश्चेत-

नानामित्यादिना, अंशो नानाव्यपदेशादित्यादिना च जीवानामनन्तत्वोक्तेर्जीवकारणवादे बहुत्वप्रसङ्गान्न जीवस्य कारणत्वं, किं तु, हिरण्यगर्भः समवर्त्तताग्रे, आदिकर्त्ता स भूतानां ब्रह्माऽग्रे समवर्त्तत, ब्रह्मा देवानां प्रथमः संबभूव विश्वस्य गोप्तेतिश्रुत्या सर्वप्रसिद्ध्या च एकत्वपूर्वकारणत्वप्रतिपादनाच्चतुर्मुख एव जगत्कारणमिति चेन्न ।

तस्य पुर्ववर्त्तित्वासिद्ध्या कारणत्वस्याप्यासिद्धत्वात् । तथा हि । न सन्न चासच्छिव एव केवल इत्यन्यनिषेधपुरस्कारेण पूर्ववर्त्तित्वं केवलत्वं चोच्यते । तथैव हिरण्यगर्भस्यावरत्वमपि, हिरण्यगर्भं पश्यति जायमानमिति । अतः शिवस्यैव जगत्कारणत्वं निश्चीयत इति चेन्न ।

तस्यापि कालादिपारतन्त्र्यात् । तथा च । ममापि कालो ग्रसते कुतः पुत्र ! रसायनमित्यादिना स्कन्दं पुत्रं प्रति स्वयमेव त्रिलोचनेनोक्तत्वात् ।

कालं तथाऽन्ये इति श्रुतेः । तथाच षष्ठेंऽशे बादरायणः ।

कालो भवाय भूतानामभवाय च पाण्डव ! ।

कालमूलमिदं ज्ञात्वा भव स्थैर्यधरोऽर्जुन !॥
स्रष्टाः कालेन, कालेन पुनर्यास्यन्ति संयमम् ।

कालात्मकमिदं सर्वं ज्ञात्वा शममवाप्नुहीति-स्मृतेश्च ।

काल एव जगद्धेतुर्भवत्विति चेन्न । श्रुत्या कालवादिनां भ्रान्तित्वप्रतिपादनात् । "कालं तथाऽन्ये परिमुह्यमाना" इति । तत्रैव स्वभाववादिनां विवेकित्वप्रतिपादनात् । स्वभावमेके कवयो वदन्तीति ।

स्वभाव एव जगत्कारणमिति चेन्न । अघटितत्वात् । तन्मते च न कारणसापेक्षं कार्यम्, अपि स्वत एव । तत्र पृच्छ्यते, स्वाभाविकं जगदिति प्रतिज्ञायां तत्साधको हेतुरस्ति, न वेति । भावपक्षे स्वभाववादहानिर्यत्तत्र साधनं हेत्वन्तरं तदेव तत्र मुख्यकारणं, तस्य चौपचारिकत्वापत्तेः । द्वितीये हेत्वन्तराभावप्रत्ते मूकताऽऽपत्त्या प्रतिज्ञाभङ्गः । तस्मान्न स्वभाववादसिद्धिः ।

स्यादेतत् । तेषामुक्तैर्हेतुभिः कारणासिद्धता । किञ्चासदेव सोम्येदमग्र आसीत्ततः सदजायत इति छान्दोग्यवाक्याद्, अक-

स्माद्धीदमाविरासीदकस्मात्तिष्ठति अकस्माल्लय-मभ्युपैतीत्यादेश्च, न कोऽपीत्येकः सर्वाभावस्तस्यैव नैयायिकानां मते घटादीनां कारणत्वं प्रागभा-वस्येव जगद्धेतुत्वं घटते। तस्मादभाव एव जग-त्कारणमिति चेन्न। स्वतोऽभावरूपस्य गगनकु-सुमायमानस्य भावात्मककार्योत्पादनेन कथमप्य-सामञ्जस्यात्। नहि शशविषाणादीनां कार्योत्पा-दनं कुत्रापि दृष्टिश्रुतिगोचरः। तस्मान्नाभावो जग-द्धेतुः। दृष्टान्तस्यापि तार्किकाणां स्वबुद्ध्योत्प्रेक्षित-त्वेनाऽप्रामाण्याद्, दार्ष्टान्तविरुद्धत्वाच्चेति दिक्।

**सामान्यनिर्देशस्य**। यत्तच्छब्दनिर्देशस्य। **विशेषपार-तन्त्र्यादिति**। तद्गुणजात्याद्येकतमासाधारणधर्मवाचकशब्दा-धीनत्वादित्यर्थः। **यत इति**। यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्त्यत्र विषयवाक्ये, सूत्रे च यच्छब्दपाठस्य सामान्यत्वापेक्षया, जीवादित्यस्य रूढितया निरपेक्षत्वेन विशेष-त्वात्, सामान्याद्विशेषस्य बलीयस्त्वाज्जीव एव कारणमिति शङ्काभागार्थः।

तन्मतं चतुर्मुखादिशब्दवाच्यजगत्कारणवादिमुखेन दूष-यति—नेति। बहुत्वप्रसङ्गादित्यत्र "कारणे"तिशब्दस्य प्रकरणात् समाकर्षः। कारणबहुत्वप्रसङ्गादित्यर्थः। सर्वेषां सर्वकारणत्वे सिद्धे सति स्वस्यापि जीवत्वाविशेषेण सर्वकारणान्तःपातित्वेन च स्वकारणत्वे सिद्धे सत्यन्योन्याश्रयात्माश्रयौ प्राप्नुत इति गूढो-

ऽभिप्रायः। न च सिद्धान्तेऽप्यतिप्रसङ्गः, कारणत्वाविशेषादिति वाच्यम्। औपनिषदानामस्माकं पक्षे तु कारणस्यैकत्वेन नान्योन्याश्रयत्वशङ्कागन्धस्पर्शोऽपि। परिशिष्टमात्माश्रयत्वं भूषणायैव, तस्य तु श्रुतिभिर्ब्रह्मलक्षणतया प्रतिपादनादिति प्रासङ्गिकः स्वसिद्धान्तः।

एकत्रस्य तु निर्दूषणत्वमाकलय्य हर्षभराक्रान्तो हैरण्यगर्भः स्वमतमुपक्षिपति—**किं त्वित्यादिना**।

**एकत्वपूर्ववर्तित्वेति**। अनेन कारणस्य सामान्यलक्षणं द्योतितम्। अन्यथासिद्धिशून्यत्वे सति कार्यनियतपूर्ववृत्तित्वं कारणत्वम्। तस्य च चतुर्मुखे व्याप्तिदर्शनात् तस्यैव कारणत्वमविवादमिति।

तन्मतं च पाशुपतमुत्थाप्य तद्द्वारेण निरासयति लक्षणाऽव्याप्तिरूपेणैव हेतुना—**नेति**। तत्र हेतुमाह—**तस्य पूर्ववर्तित्वासिद्ध्येति**। लक्षणसमन्वयाभावे लक्ष्यसिद्धेरभावादित्यर्थः। तदेव विवृणोति—**तथा हीति**। तत्र प्रमाणशङ्कायां श्रुतिं पठति—**न सदित्यादि**। हिरण्यगर्भावरत्वमपि श्रुतिपाठेन द्रढयति—**हिरण्यगर्भं पश्यति जायमानमित्यादि**। तदपि कालवादिमतेन दूषयितुं प्रतिजानीते—**नेति**। प्रतिज्ञातेऽर्थे हेतुमाह—**तस्यापीति**। **कालपारतन्त्र्यादित्युपलक्षणं**, कर्मपरतन्त्रत्वादपीति। तथा भारते राजधर्मे देवस्थानवाक्यम्—

> महादेवः सर्वयज्ञे महात्मा
> हुत्वाऽऽत्मानं देवदेवो बभूव।
> विश्वांल्लोकान् व्याप्य विष्टभ्य कीर्त्या
> विराजते द्युतिमान् कृत्तिवासा इति॥

**काल एव जगद्धेतुर्भवत्विति चेदिति** शङ्कां स्वभाववादिना निरासयति—**नेति**। कालवादस्य मोहमयत्वान्न कारणमिति भावः।

स्वभाववादी स्वस्य कवित्वमाकलय्याकाराविश्लेषं चाविचार्य प्रफुल्लमुख आह—स्वभाव एव जगत्कारणमिति। स्वभाववादः स्वयमेव निरस्यते निपुणैर्ग्रन्थकृद्भिः—नेति। तत्र प्रतिज्ञातमर्थं हेतुना द्रढयति—अघटितत्वादिति। अघटनां प्रपञ्चयितुं प्रतिजानीते—तथा हीति। तदेव प्रपञ्चयतीत्यर्थः। अथ तन्मतमनूद्य निरासितुं—तन्मते चेत्यादि। न कारणेति। न कार्यं कस्यापीत्यर्थः। अपि तु स्वत एव स्वाभाविको नानीदृश इति।

परमतानुवादस्य तन्निरासफलकत्वान्निरसितुमुपक्रमते—तत्र पृच्छ्यत इत्यादिना।

नन्वनुमानस्याप्यत्र प्रामाण्यान्नोक्तदोषः, । जगन्न कार्य्यं स्वाभाविकत्वात् परमत आत्मवदिति चेन्न। उक्तप्रयोगस्य सत्प्रतिपक्षात्मकेन हेत्वाभासेन ग्रस्तत्वान्न स्वभाववादसिद्धिः। तथा हि जगत् कार्यं परिणामादिमत्त्वात् स्थूलदेहादिवद्, व्यतिरेक आत्मवदिति। तस्मान्न कथंचित् स्वभावस्य कारणत्वम्।

आस्तिककल्पानां मतस्य परिहासविषयतां श्रुत्वा प्रसन्नवदनोऽभाववादी उत्थायेष्टापत्त्याऽभ्युपगच्छति—स्यादेतदिति। एतेषां कारणाभावत्वम् इष्टमेवेति भावः। स्वाभिप्रायं व्यनक्ति—किं त्वित्यादि। तस्येति। तस्य सर्वाभावस्यैव जगद्धेतुत्वमित्यन्वयः। तत्रोपमानं प्रमाणयति—नैयायिकानामिति। यथा नैयायिकानां मते प्रागभावस्य घटादिकारणत्वेनाभ्युपगमस्तथाऽस्माकमपीत्यर्थः। श्रुतीः स्वतात्पर्यानुसारेण व्याचष्टे—न कोऽपीत्येक इति। नसत्, असदिति ज्ञेयम्। सिद्धान्तमाह-सर्वाभाव इति। उपसंहरति-तस्माद्भाव एवेति। तद् दूषयति—नेति। तत्र हेतुः—स्वतोऽभावरूपस्येति।

गगनकुसुमायमानस्य गगनकुसुम इवासत्त्वः । आचरणार्थ-कप्रत्ययान्तामधानोः प्रयोगः साधीयान् । इत्यर्थमुद्भावयति—नहीत्यादि । तथात्र प्रयोगः । अभावकार्यत्वाभाववज्जगत् । भावत्वात् । व्यतिरेके शशशृङ्गताडनजन्यक्षतजोत्पत्तिवत् । उपमानस्यापि प्रमाणाभासत्वमाह—दृष्टान्तस्यापीति । दार्ष्टान्तविरुद्धत्वादित्यस्यायं भावः । यद्यपि नैयायिकैः प्रागभावस्य कारणत्वमभ्युपगतं, तथापि निमित्तकारणस्यान्तःपातित्वमात्रेणैव । न तूपादानापरपर्यायतयाऽभ्युपगम्यमानेन समवायित्वेन । अत्र तु मुख्यकारणत्वेन प्रतिपादनं पुनरपि विरुद्धमिति । प्रकृतं संक्षिप्यते—इति दिगिति । अन्येषामग्रे वक्ष्यमाणत्वादित्यर्थः ।

अभाववादी तूष्णींभावमापन्नप्रायं सिद्धान्तिनं ज्ञात्वा पुनश्चोदयति नन्विति ।

ननु यद्येतेषां मध्ये न कस्यापि कारणत्वं तर्हि फलतः शून्यवादस्यैव भवतामभ्युपगमः स्यादिति चेन्न । सदेव सोम्येदमग्र आसीद्, ब्रह्म वा इदमेकमेवाग्र आसीदात्मा वा इदमेक एवाग्र आसीदेको ह वै नारायण आसीद् विष्णुस्तदासीद्धरिरेव निष्कलः नैव किंचनाग्र आसीद्दिव्यो देव एको नारायण इत्यादिश्रुतिकदम्बप्रतिपाद्यस्यैव श्रीभगवत्सूत्रकारबुद्धिस्थत्वेन तस्यैव तेन भगवता यच्छब्दोच्चारणेन परामर्शात्तस्यैव जगत्कारणत्वमिति

अयं भावः । सर्वेषां पूर्वोक्तानां कयाचिद्विवक्षया कारणत्वेऽपि तेषामपि कारणत्वेन यस्य प्राधान्यं तस्यैकत्वं कारणत्वं च श्रुतिभिरेव निर्णीयते । तथा च श्वेताश्वतराणां सिद्धान्ते ब्रह्मवादिनो वदन्ति ।

किंकारणं ब्रह्म कुतः स्म जाता
जीवाम केन क्व च संप्रतिष्ठाः ।
अधिष्ठिताः केन सुखेतरेषु
वर्त्तामहे ब्रह्मविदो व्यवस्थाम् ॥
कालः स्वभावो नियतिर्यदृच्छा
भूतानि योनिः पुरुष इति चिन्त्यम् ।
संयोग एकं न त्वात्मभावाद्
आत्माप्यनीशः सुखदुःखहेतुः ॥
ते ध्यानयोगानुगता अपश्यन्
देवात्मशक्तिं स्वगुणैर्निगूढाम् ॥
यः कारणानि निखिलानि तानि
कालात्मयुक्तान्यधितिष्ठत्येकः—
इति प्रश्नोत्तरचिन्तया स्पष्टम् । अग्रेऽपि,
स कारणं कारणाधिपाधिपः
न तस्य कश्चिज्जनिता, न चाधिपः ।

इति कारणाकारणत्वं प्रतिपाद्य तस्यानन्य-
कारणत्वं स्पष्टितमिति ॥

प्रधानपुरुषव्यक्तकालानां कारणं हि यत् ।
पश्यन्ति सूरयो नित्यं तद्विष्णोः परमं पदम् ॥
इति स्मृतश्च ।

**न कस्यापीति** । एतेषां पूर्वोक्तानां मध्ये एकतमस्यापि न कस्य चित् । **फलत इति** । मायावादिनामभिप्रेतनिषेधावधिकत्वन्यायेनैव **शून्यवादस्यैवेति** अस्माकमभिप्रेतस्येति । एवकारेणान्ययोगव्यवच्छेदकत्वं सूचयति । तन्निरासपुरस्कारेण स्वसिद्धान्तमाह—**नेति** । श्रुतिकदम्बप्रतिपादितस्यैव सिद्धान्तस्य भगवत्सूत्रकृतां **बुद्धिस्थत्वेन** हेतुना । **तस्य** कारणस्य श्रुतिप्रसिद्धस्य **तेन** सूत्रकृता लक्षणसूत्रे यत इति यच्छब्देन परामर्शादिति । पुनः शङ्कापरिच्छेदार्थं निर्गलितार्थमाह—**अयं भाव इति** । **कयाचिद्विवक्षयेति** यथा घटादिकार्यापेक्षया पृथिव्याः कारणत्वं, पृथिव्यपेक्षयाऽपां, तदपेक्षया तेजसः कारणत्वं, तथा यत्किञ्चित्कार्यापेक्षया तेषामपीति । तत्रान्यप्रमाणापेक्षानिवृत्तये श्रुतीनां पाठेनैव निरपेक्षप्रमाणेन सिद्धान्तमाह—**तथा च श्वेताश्वतराणां सिद्धान्ते** इति । स एवास्माकं सिद्धान्त इति तात्पर्यार्थः । तामेवोपनिषदं पठति—**ब्रह्मवादिन** इत्यारभ्य, अधितिष्ठत्येक इत्यन्तेन कारणं निर्णीतम् । **प्रश्नोत्तरचिन्तया** सिद्धान्तरीत्या । **अग्रेऽपि** उपसंहारेऽपि उपक्रमोपसंहाराभ्यां सिद्धान्तमित्यर्थः । अन्येषां कारणानां तेजआदीनाम्, **अधिपानां** कालादीनां **चाधिप** इत्युपसंहारवाक्यार्थः । तेजआदीनां

कारणत्वेऽपि आकाशादीनां कारणकारणत्वेऽपि अन्यकार्यत्वं सुप्रसिद्धम् । तन्न्यायस्यात्राव्याप्तिदर्शनात्तथात्वशङ्कावारणाय श्रुत्यन्तरं पठति—**न तस्य कश्चिज्जनिता न चाधिप** इति । परमते परमाणुप्रधानादीनां जन्यत्वाभावेऽपि परनियम्यतास्वीकारात् तन्न्यायावतारनिवृत्तये—न चाधिप इतिदलसंनिवेश इति । एतदर्थं स्वयमेवाह ग्रन्थकारः "**कारणकारणत्वं प्रतिपाद्यानन्यकारणत्वं स्पष्टितमिति**" । नान्यः कारणं यस्य तस्य भावस्तत्त्वमन्यकारणराहित्यमिति यावत् । तथा चोद्योगपर्वणि संजयवाक्यम् ।

कालचक्रं जगच्चक्रं युगचक्रं च केशव ।
आत्मयोगेन भगवान् परिवर्त्तयतेऽनिशम् ॥
कालस्य च हि मृत्योश्च जङ्गमस्थावरस्य च ।
ईशते भगवानेकः सत्यमेतद्ब्रवीमि ते—इति ॥

प्रतिज्ञापूर्वकः सिद्धांतः । श्रुत्यर्थस्तु—ब्रह्मवादिनो मुनयः । **किंकारणं ब्रह्मेति** । किंप्रकारकं कारणं निमित्तं वोपादानं वोभयात्मकं वेति । **कुतो जाताः स्म** तत्राप्याकाशादिजडवर्गवत् स्वविकृतितया वा, स्थूलशरीरभजनकर्मभोगार्हज्ञानप्रकाशमात्रेण वेति । **केन वा जीवाम इति** । केनाऽदृष्टादिना वेश्वरेण वेति । **क्व च संप्रतिष्ठाः**, मोक्षावस्थाभाजिताः कस्मिन्नधिष्ठाने स्थास्याम इति । **केन** दैवैरिन्द्रियप्रवर्तकैरीश्वरेण वा **ऽधिष्ठिता** नियमिताः सन्तः, **सुखेतरेषु** सुखदुःखेषु पुण्यापुण्यकर्मफलभूतेषु **वर्त्तामहे** इति । हे ब्रह्मवादिनो **व्यवस्थां** 'ब्रूत' इति शेषः । न तावत्कालादीनां कारणत्वादिभावसंभवः पारतन्त्र्यादित्याहुः-**काल** इत्यादि । तत्र **नियतिर्मीमांसका**भिप्रेतपुण्यापुण्यनियमः, **यदृच्छा** कारणाभावः, **योनिः** सांख्यै-

रभिप्रेता प्रकृतिः, पुरुषो हिरण्यगर्भः, कालादीनां संयोगोऽपि न कारणं प्रत्येकं किमुत वक्तव्यम्। कुतः, आत्मनो भोक्तुभावात् भोग्यत्वेन तेषामकारणत्वम्। आत्मा प्रत्यगात्माऽपि न कारणं, यतोऽनीशः सुखदुःखाधीनः। ते च मुनयो ध्यानयोगानुगताः सन्तो ध्याननिष्ठिता भूत्वा देवात्मशक्तिं देवस्यात्माख्यां जीवभूतां परां शक्तिं स्वगुणैर्निगूढां सत्त्वादिभिर्निगूढाम् अपरां जडात्मिकां च शक्तिमपश्यन्। यश्चैको निखिलानि कारणान्यधितिष्ठति तं चापश्यन्निति योजना। कथं भूतानि तानि पूर्वं विकल्पितानि कालात्मयुक्तानीति। तथा च, क्षरात्मानावीशते देव एकः, भोक्ता भोग्यं प्रेरितारं च मत्वा, प्रधानक्षेत्रज्ञपतिर्गुणेश इत्यादिभिरग्रे स्पष्टोक्तिः कण्ठरवोच्चारितेनैवेति।

इदानीमुक्तश्रुतीनां तात्पर्यानभिज्ञोऽज्ञानवत्त्वेनैव विरोधमारोप्य चोदयति—तर्हीत्यादिना।

तर्हि पूर्वोदाहृतवाक्यानां किंविषयत्वमिति। तेषामपि श्रुतित्वाविशेषेण बाधानर्हत्वात्।

अत्र ब्रूमः। न तावज्जीवाद् भवन्तीत्यादिवाक्यविरोधः। तस्यापि, जीवयति प्राणयतीति जीव इति व्युत्पत्त्या तत्परत्वात्। अन्यथा, य आत्मानमन्तरो यमयतीत्यादिश्रुतीनां जीवस्य नियम्यत्वप्रतिपादिकानां व्याकोपप्रसङ्गः।

नापि हिरण्यगर्भश्रुतिविरोधावकाशः। हि-

रणमयान्यण्डानि गर्भे यस्य इति समासेन तस्यैव प्रतिपादनात्। "अण्डानां तु सहस्राणां सहस्राण्ययुतानि च। ईदृशानां तथा तत्र कोटिकोटिशतानि च" इति पराशरवचनात्।

नच, शिव एव केवल इत्यस्य निर्विषयत्वम्। शिवशब्दस्यानन्दवाचकतया तस्यैव नामधेयत्वात्। विज्ञानमानन्दं ब्रह्मेति स्पष्टमेव। इतरथा, एको ह वै नारायण आसीन्न ब्रह्मा नेशान इत्यादीनां, नारायणाद् ब्रह्मा जायते, नारायणाद्रुद्रो जायत इत्यादीनां चान्वयव्यतिरेकश्रुतीनां, "यस्माद् ब्रह्मा तथाऽग्निश्च रुद्रेन्द्रमरुदश्विनः। वसवश्च सहादित्यैरिति" कालीयस्तुतिवाक्यस्य महद्विरोधात्।

नापि कालश्रुतिविरोधः। तस्य भगवच्छक्तित्वेन शक्तिमदभेदाविवक्षया घटनात्। कालः कलयतामहमिति भगवदुक्तेः। एवमेव, कालकाल इत्यादिनैकार्थत्वाच्च।

नापि स्वाभाववाक्यविरोधः। स्वे स्वीया असाधारणाः स्वाभाविका भावा गुणादयो यस्ये-

ति समासेन तस्यापि तद्वाचकत्वात् । स्वाभाविकी ज्ञानबलक्रिया चेति श्रुतेः । अन्यकल्पनायामुक्तदोषाणां दुर्वारत्वात् । अघटनोक्तैव ।

नचाऽसदेव सौम्येदमिति वाक्यस्य विषयशून्यत्वं शङ्कनीयम् । अ ब्रह्मेति श्रुतेः । अक्षराणामकारोऽस्मीति स्मृतेश्च, अकारश्चासौ सच्चेति कर्मधारयसमासः । सद्रूपम् अकारवाच्यं ब्रह्मेत्यर्थः । उक्तार्थानभ्युपगमे तत्रैव, कथमसतः सज्जायेतेति निषेधादसामञ्जस्यमेव ।

अकस्मात्पदस्यैवं गतिः । तथाहि । क इतिशब्दस्यानन्दवाचकत्वाद् अश्चासौ कश्चेत्यानन्दरूपो वासुदेव इति न कस्यापि वाक्यस्य विषयहीनत्वमिति ।

केचित्तु, नामानि सर्वाणि यमाविशन्तीत्यादिवाक्यमाश्रित्य जीवादिशब्दानां रूढ्यैव वृत्त्या भगवत्परत्वं व्याख्यायन्ते । तच्चिन्त्यम् । शेषाणामग्रे वक्ष्यमाणत्वादित्यलं विस्तरेण ।

पूर्वोदाहृतानां जीवाद्भवन्तीत्यादीनाम् । किंविषयत्वमिति । किंविषयकाणि वाक्यानीत्युक्तया निर्विषयकाणीत्या-

क्षेपार्थः । तत्र हेतुमाह—तेषामपीत्यादिना । बाधानर्हत्वा-न्निर्विषयत्वायोगान्निर्विषयत्वे च बाधमसङ्गादित्यर्थः ।

समाधातुं विरोधपरिहारेण व्याख्यानमुपक्रमते—अत्रेत्या-दिना । तत्रादौ जीवाद्भवन्तीत्यादि वाक्यं व्याख्यायते—न तावदिति । तत्परत्वात् परमकारणप्रतिपादनपरत्वात् । अन्यथा उक्तार्थानङ्गीकारे । यद्यपि जीवस्यापि पूर्वोक्तन्या-येन स्वस्यानादिकर्मणा स्वदेहादिकार्यनिरूपितकारणत्वसम्भ-वात्, तथाऽपि, न जीवात् कारणं परमिति वाक्यशेषविरोधस्य दुष्परिहरत्वादुक्तार्थस्यैव वरीयस्त्वं भाव्यम् ।

हिरण्यगर्भ इति वाक्यस्य विरोधं परिहरति—नापि हि-रण्यगर्भ इति । तस्यैव विवक्षितकारणस्यैवेति । अन्ययोग-व्यवच्छेदार्थक एवकारः ।

त्रिलोचनवाचिकायाः श्रुतेरपि यथार्थव्याख्यया विरोधं निराकरोति-न च शिव एवेत्यादिना । इतरथा रूढिवृत्त्यभ्यु-पगमे इति । अनेन निरन्तरोक्तपक्षस्यापि परिहारस्य दार्ढ्यं ज्ञेयम् । एको ह वै नारायण इत्यादौ वाक्ये उभयोर्ग्रहणात् । नापि का-लेत्यादिः स्पष्टार्थः । नापि स्वभावेति । स्वेनैव भवतीति स्व-भाव इत्यप्यूह्यम् । न चाभावशब्दविरोध इत्याह—न चेति । उक्ता-र्थानभ्युपगमे । सद्रूपब्रह्मपरत्वानभ्युपगमे । तत्रैवेति छान्दोग्ये सदेव सौम्येदमग्र आसीदेकमेवाद्वितीयं, तद्धैक आहुरसदेव सौ-म्येदमग्र आसीदेकमेवाद्वितीयं तस्मादसतः सज्जायेत कुतस्तु खलु सोम्यैवं स्यादिति होवाच कथमसतः सज्जायेतेत्यादिवाक्यसमुदा-यात्मके प्रकरणे । सैव गतिः कर्मधारयसमासाश्रयणरूपैवेति । तदेव प्रपञ्चयति—तथा हीत्यादिना । उपसंहरति—न कस्या-

पीति। अन्यमतमुपक्षिपति-के चित्त्विति। तच्चिन्त्यमित्यनेना-ऽस्वारस्यं द्योतितम्। घटपटादिशब्दोच्चारणाद्ब्रह्मार्थोपस्थितेर्दुर्वारत्वात्। न च तथात्वमिष्टापन्नमिति वाच्यम्। सर्वानुभवविरोधात्। भगवन्नामसंकीर्त्तनविधेर्वैयर्थ्यात्। भगवन्नामवदस्यापि घटपटादिशब्दमात्रस्य कीर्तनविधिविधेयताऽऽपत्तेश्च। शेषाणां प्रकृतिपरमाणुसंघातादीनाम्। अलं विस्तरेण, उपरम्यते इत्यर्थः।

इत्थं विवादकारणीभूतवाक्यानां तात्पर्यं श्रुत्वा तमेव स्वीकारपूर्वकमनूद्य विशेषविवादार्थमुद्युनक्ति—स्यादेतदिति।

स्यादेतत्। सर्वज्ञस्य सर्वशक्तेर्ब्रह्मण उक्तरीत्या जगत्कारणमिति। किञ्च। कथं कार्योत्पत्तिरभिप्रेता, संघातेन, वाऽऽरम्भेण, परिणामेन वा?। नाद्यौ पक्षौ संभावनीयौ। कुतर्कविषयत्वेनावैदिकत्वात्। नापि परिणामः। असम्भवात्। न ह्याकाशकल्पस्य ब्रह्मणो विभोः परिणामोऽनुभूत्या सोढुं शक्यो, दर्शनागोचरत्वादि चेत्।

अत्रोच्यते। नासम्भवः। परिणतिस्वाभाव्यात्। क्षीरवत्। सर्वज्ञत्वात् सर्वशक्तिमत्त्वाच्च स्वेच्छया परिणामः शक्यते प्रतिपादयितुम्।

ननु विपरीतो दृष्टान्तः। सावयवत्वात् क्षीरस्य परिणामो निर्विवादः। ब्रह्मणस्तु निरवयवत्वेन तद्विपर्ययत्वान्न तत्ता युक्तेति चेच्छृणु। न

तावत् सावयवत्वं क्षीरपरिणतिहेतुः । तथात्वे सति चाप्स्वतिव्याप्तेस्तासामपि दधिभावेन परिणामो दुर्वारः । अतोऽप्रयोजकं सावयवत्वम् । किन्तु तादृशशक्तिमत्त्वेनैव पयसः परिणाम इति ।

तत्रेत्थं विचारणीयम् । परिणामेऽवयविनः शक्तिरवयवानां वेति । नाद्यो विकल्पः । द्रवद्रव्ये व्यतिरिक्तस्यावयविनस्त्वयानभ्युपगमात् पारिशेष्यादवयवानां शक्तिः । ते च निरवयवा एव । सावयवत्वे चावयवानामप्यवयवान्तरकल्पने तेषां चापि तद्भावेऽनवस्थानात् क्षीराब्धेः कुण्डपरिमाणत्वापत्तेः । अवयवानामानन्त्यात् । एवमपि तेषां परिणामाभावाङ्गीकारे दधनि पयो दृश्येतेति भिया अकामेनापि त्वया सर्वेषामप्यवयवानां परिणामवत्त्वमेष्टव्यम् । तस्मान्निरवयवस्यैव परिणामो दृश्यते । तथा ब्रह्मणोऽपि परिणामोपपत्तेरिति । श्रूयते च—परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया चेति । स्मर्यतेऽपि भगवता पराशरेण—

शक्तयः सर्वभावानामचिन्त्यज्ञानगोचराः ।

**शतशो ब्रह्मणस्तास्तु सर्गाद्या भावशक्तयः ।**
**भवन्ति तपतां श्रेष्ठ ! पावकस्य यथोष्णतेत्यादि ॥**

विवादं प्रपञ्चयति—**किं चेति**। कथं कार्योत्पत्तिरिति किं-प्रकारिकेतिभावः। प्रकारविकल्पांश्च वादिबाहुल्येनाह, तत्र प्रथमं बौद्धविकल्पमाह—**संघातेनेति**। संघातश्च यदृच्छया भूतसंहनन-पूर्वककार्योत्पादकत्वं ताम्बूलचूर्णादिसमूहस्येव शोणिमकार्योत्पादनत्वमिति। एतेषां च द्वितीयाऽध्याये सविस्तरं वक्ष्यमाणत्वान्नात्र प्रपञ्चायोद्यम्यते। आरम्भवादश्च तार्किकाणां विकल्पः। **परिणामो** द्विविधः। प्रकृतिस्वरूपपरिणामः, शक्तिविक्षेपलक्षणो ब्रह्मपरिणामश्चेति। **आद्यः** सांख्यपक्षः। द्वितीयो ह्यौपनिषदानां सिद्धान्तश्चेति ज्ञातव्यः। तत्रासंभावनां द्योतयति—**नाद्याविति**। तत्र हेतुः—**कुतर्केत्यादि**। तदभ्युपगमे श्रौतसिद्धान्तस्य तिलाञ्जलिसम्प्रदानत्वापत्तेरित्यभिप्रायः। **नापि परिणाम** इति। सामान्योक्त्योभयपक्षविषयिका चोदनेति ज्ञेयम्। तदेव हेतुमुखेन द्रढयति—**असंभवादिति**। ब्रह्मपरिणामस्य संभावनाविषयत्वाभावात्। असंभावितत्वं व्यनक्ति—**नहीत्यादि**। आकाशोपमस्य निरवयवस्य। **विभोरिति**। विभुपरिमाणकस्येति। परिशेषादगत्या विवर्तवाद एव समाश्रयणीय इति मायावादिचोदनाभिप्राय इति शङ्काऽर्थः। तत्र संघातादि-विकल्पानामग्रे वक्ष्यमाणतयेहोपेक्षयैव परिहारौ ज्ञापयित्वा स्वपक्षे समाधातुमुपक्रम्यते-**अत्रोच्यत** इति। तदेव स्पष्टयति-**नासंभव** इति। नासम्भावनासंस्पृष्टवायुस्पर्शनयोग्य इति यावत्। **परिणतिस्वाभाव्यादिति**। यथा क्षीरं परिणत्यर्हस्वाभाविकशक्तिमत्त्वादेव दध्यात्मना परिणमति तद्वद्ब्रह्मापि सर्वाघटनघटनार्हश-

क्तिमत्त्वादेव जगद्रूपेण परिणमतीति कथयितुं शक्यत इति, न हि प्रतिपादनानर्हताशङ्कावकाश इति सिद्धान्तः। अनेन प्रयोगः सूचितः। जगदाकारावस्थाभजनशीलं ब्रह्म भवितुमर्हति, तादृश्यचिन्त्यशक्तिमत्त्वात्। दधिभावे क्षीरवत्। उक्तहेतौ सत्प्रतिपक्षताऽऽत्मकहेत्वाभासत्वं, दृष्टान्ते विकलतां चारोप्य भूय उत्तिष्ठते—**नन्वित्यादि, निर्विवाद** इत्यन्तेन। दृष्टान्तविकलत्वमुक्त्वा सत्प्रतिपक्षतां द्योतयितुं साध्याभावसाधकं हेत्वन्तरं पठति—**निरवयवत्वेनेति**। तथाऽत्र प्रयोगः—परिणामाभावशीलं ब्रह्म निरवयवत्वाद् आकाशवदिति। **तद्विपर्ययत्वादिति** दृष्टान्तविपर्ययत्वाद्दार्ष्टान्तस्य साध्याभावसाधकहेत्वन्तरस्य विद्यमानतया सद्धेतुविपर्ययाद्वा उक्तस्य हेतोरिति भावः। **तस्मान्न तत्ता युक्तेति**। ब्रह्मणः परिणमनानर्हता युक्तेति शङ्कार्थः। पूर्वपक्षोक्तस्य हेतोरप्रयोजकत्वं दर्शयित्वा स्वसिद्धान्तोक्तहेतावारोपितदूषणं निरस्य दृष्टान्तगतदोषं चोद्धरति—**शृण्विति**। **न तावत् सावयवत्वमिति**। सावयवत्वस्य तवाभिप्रेतस्य हेतोः परिणामे कारणत्वं नास्ति। तदेव व्यञ्जयति—**तथात्वे च** सावयवत्वस्य परिणामकारणत्वेऽभ्युपगम्यमाने। **परिणामो दुर्वार** इति। तास्वपि तवाभिप्रेतस्य हेतोः सावयवत्वस्य विद्यमानत्वात्। न तु तदस्ति। तस्मादप्रयोजकहेतोर्न सिद्धान्तबाधनसामर्थ्यम्। आरोपितप्रमाणं बाधयित्वा पूर्वोक्तहेतुना सिद्धान्तयति-**किन्तु, तादृशशक्तिमत्त्वेनैव** परिणमनशक्तिमत्त्वेनैव हेतुनेत्यर्थः।

उक्तेऽर्थे पुनर्विकल्पयितुमुद्युक्तं दृष्ट्वा तच्छान्तये स्वयमेव शङ्कासमाधानाभ्यां निर्णेतुमारभते-**तत्रेत्थमिति**। उक्तसिद्धान्ते, **इत्थं** वक्ष्यमाणप्रकारेण। तमेव विचारं दर्शयति—**परिणामे**

इति । अत्र, क्षीरस्येत्यध्याहार्यः । धर्मस्य धर्म्यांधेयतया तत्सापेक्षत्वात् । क्षीरस्य परिणामे इति । **अवयविनः शक्तिरवयवानां वेति** स्पष्टो विकल्पः । तत्र शक्तिपदेन तादृशभावायतनशक्तिर्विवक्षितेति ज्ञेयम् । तत्र पूर्वविकल्पं वादिमुखेनैव परिहरति—**नाद्य** इति । **त्वया** मायावादिनेति । **पारिशेष्यात्** परिशिष्टपक्षाङ्गीकारात् । **अतस्ते च निरवयवा एवेति** । ते नाम प्रसिद्धाः परिणमनशक्तिमन्त इति निरवयवत्वाभावाभावसंपन्ना एवेति । अयोगव्यवच्छेदार्थकोऽवधारणशब्दः । तमेवार्थं व्यञ्जयन्नाह—**सावयवत्वे** निरवयवत्वाभावलक्षणे । **तेषाम्** अवयवावयवान्तराणाम् । **तद्भावे** अवयवान्तरकल्पनेऽ**नवस्थानादिति** । तत्रैव हेत्वन्तरमाह—**क्षीराब्धेरिति** । क्षीराब्धिः कुण्डपरिमाणकः कुण्डमात्रपरिमाणावच्छिन्न उपलभ्येत । तत्रापि हेतुः—**अवयवानामिति** । तस्मात् सिद्धमवयवानां निरवयवत्वमिति । **एवमपीति** । तेषां निरवयवत्वे निर्विवादे जाते सति ते परिणमन्ति, न वेति बुद्धौ कृत्वा द्वितीये दूषणमाह—**तेषामित्यादि** । **इति भियेति** । प्रत्यक्षानुभूतिविरोधलक्षणयेति । अनेनावश्यकत्वमुक्तम् । **एष्टव्यमिति** । कटुकमप्यौषधं पीयत एवेति न्यायेनावश्याङ्गीकर्तव्यमिति भावः । उपसंहरति—**तस्मादिति** । दार्ष्टान्ते उक्तन्यायमवतारयति—**तथा ब्रह्मणोऽपीति** । **उपपत्तेरिति** । न किमप्यनुपपत्तौ प्रमाणं, शास्त्रसिद्धान्तत्वादिति । तत्र प्रमाणं पठ्यते—**श्रूयते चेति** । **अस्य ब्रह्मणः शक्तिः परा** स्वरूपविलक्षणा **विविधा** अनन्ताऽचिन्त्यप्रकारिका **श्रूयते** चेत्यन्यप्रमाणनिरपेक्षेत्यर्थः । अनिर्वचनीयत्वमिथ्यात्वौपाधिकत्वादिशब्दप्रयोक्तॄणां मुखं धूलीकरोति—**स्वाभाविकीति** । अनाद्यनन्तेति स्वरूपवन्नित्येत्यर्थः । **न** केवलं

शक्तेरेव तत्त्वं, ज्ञानक्रियागुणानामपीत्याह—**ज्ञानबलक्रिया चेति**। ज्ञानबलाभ्यां सहिता क्रिया ज्ञानबलक्रिया चेति। चकारः सर्वेषामपि भगवतो गुणकर्मादीनामाकर्षणार्थः।

अक्षयं नाऽन्यदाधारमज्ञेयमजरं ध्रुवम्।
शब्दस्पर्शविहीनं तद्रूपादिभिरसंहतम्॥
त्रिगुणं तज्जगद्योनिरनादिप्रभवाऽप्ययम्।
वेदवादाविदो विद्वन्नियता ब्रह्मवादिनः॥
पठन्ति वै तमेवार्थं प्रधानप्रतिपादकम्—

इति। नित्यत्वादि स्पष्टं स्मारयति, श्रुत्यर्थरूपां स्मृतिं च पठति—**स्मर्यतेऽपीति**। **पराशरेणेति** सूत्रकारपितृत्वेनात्यन्तप्रामाण्यं द्योतयति। **शक्तय** इति, **सर्वभावानामिति**। स्वसंकल्पविषयवस्तूनां सूक्ष्मतया सद्रूपाणाम्। **सर्गाद्याः** सर्गादिकारणमिति। **भावशक्तय** इति स्वाभाविकीतिश्रुतिगतपदस्यार्थः। **शतश** इति विविधाः पदार्थाः। **ब्रह्मण** इत्यस्य पदस्यार्थः। **अचिन्त्यज्ञानगोचरा** इति। अचिन्त्यस्य असंकुचितस्य। मुक्तानां ज्ञानस्य विषया इति **परा**शब्दार्थः। **तपतां श्रेष्ठेति** श्रोतुः कुतर्कनिष्ठतां निवारयति। स्वाभाविकत्वानाद्यनन्तत्वनित्यसहचारित्वादिषु दृष्टान्तः—**पावकस्य यथोष्णतेति**। श्रुतौ जात्यभिप्रायेणैकवचनम्। स्मृतेर्व्याख्यारूपत्वादेकत्वभ्रान्तिवारणार्थं बहुवचनमिति।

प्रथमांशे—

दशोत्तराण्यशेषाणि मैत्रेयैतानि सप्त वै।
महान्तं च समावृत्य प्रधानं समवस्थितम्॥
अनन्तस्य न तस्यान्तः संस्थानं चापि विद्यते।
तदनन्तमसंख्यातं प्रमाणं चापि वै यतः॥

हेतुभूतमशेषस्य प्रकृतिः सा परा मुने ।
अण्डानां तु सहस्राणां सहस्राण्ययुतानि च ॥
ईदृशानां तथा तत्र कोटिकोटिशतानि च—
इत्यादिरपि वाक्यकदम्बोऽनुसंधेयः ॥

एवं श्रुतिस्मृतिप्रतिपादितेऽप्यर्थे कुतर्कतामारोप्यासद्वादैर्विवदमानः स्वचित्तस्थासहिष्णुत्वं प्रकाशयितुमुत्तिष्ठते भूयः—नन्विति ।

ननु नैतच्छोभनं तर्कबलेन क्षीरस्येव ब्रह्मणः परिणामाङ्गीकरणमिति[१] । तथात्वे च, कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वेति वक्ष्यमाणान्न्यायात् कृत्स्नस्यापि ब्रह्मणः परिणामप्रसङ्गाद्[२] अनित्यतापत्तेश्च[३] । तत्त्वे, नित्यं विभुं निष्कलं निष्क्रियं शान्तमित्यादिवाक्यविरोधाच्च[४] । किञ्च, विकारभावापन्नस्य ब्रह्मणो[५] जगदाकारतया सर्वप्रत्यक्ष[६]विषयत्वेन सर्वस्यापि प्राप्तत्वात्[७] सर्वमोक्षप्रसक्त्या[८] उपदेशशास्त्रानर्थक्याच्चेति[९] चेन्मैवम् ।

न तावत् तर्कबलेनास्माकं ब्रह्मपरिणामाभ्युपगमः । अपि तु, स्वयमात्मानमकुरुत, आत्मकृतेः परिणामादित्यादिश्रुतिन्यायाभ्यामिति[१] । नापि कृत्स्नप्रसक्तिः । ऊर्णनाभ्यादौ व्यभिचारात्[२] । नापि निरवयवश्रुतिव्याकोपः ।

तथाभूतपरिणामस्योक्तरीत्या साधितत्वात्[३]। वस्तुतस्तु शक्तिविक्षेपस्यैव परिणामशब्देन विवक्षिततया ब्रह्मस्वरूपपरिणामानभ्युपगमान्न नित्यश्रुतिविरोधगन्धोऽपि[४]। एवञ्च विकारापत्त्यभावे[५] प्रत्यक्षगोचरत्वाभाव[६]स्तदभावे च सुतरां सर्वप्राप्त्यभाव[७]स्तत्त्वे तु सुतमां सर्वमोक्षप्रसङ्गाभावः[८]। एवञ्च को भूय उपदेशशास्त्रानर्थक्यप्रसङ्ग[९] इति।

नापि पुनराकाशकल्पस्येति दृष्टान्तसौरस्यम्। अप्रच्युतरूपस्यैव निरवयवस्य विभुपरिमाणकस्य चाकाशस्य वायुभावापत्तिलक्षणपरिणामदर्शनात्। आकाशाद् वायुरिति श्रवणाच्च। प्रत्युत तस्याप्यस्मत्सिद्धान्तसाधकोपमानत्वमेवेति। सावयवत्वाकाशकल्पयोर्हेतुदृष्टान्तयोरप्रयोजकत्वाज्जगतो ब्रह्मपरिणामभावो निरवद्यः। तथैव श्रूयते—

यथोर्णनाभिः सृजते गृह्णते च
यथा सतः पुरुषात् केशलोमानि।
यथा पृथिव्या औषधयः संभवन्ति

तथाऽक्षरात् संभवतीह विश्वम्—इति ।

तथैव परिणामेन विश्वस्य भगवान् हरि-रिति स्मरणाच्च ।

परिणामः शक्तिविक्षेप एव । सोऽपि तत्रैव क्षोभशब्देन तात्पर्यात्मकेनोक्तः—

प्रधानं पुरुषं चापि प्रविश्यात्मेच्छया हरिः ।
क्षोभयामास संप्राप्ते सर्गकाले व्ययाऽव्ययावि-ति ।

किञ्चास्तां पर्यायतापि । भीष्मः कण्ठरवे-णैव पठति—

प्रसार्य च यथाङ्गानि कूर्मः संहरते पुनः ।
तद्वद् भूतानि भूतात्मा सृष्टानि ग्रसते पुनरिति ॥

तत् सिद्धं जगदभिन्ननिमित्तोपादानत्वं ब्रह्म-णो लक्षणम् ॥

सामान्यवाचकैतच्छब्दार्थौ विशिष्यते–तर्कबलेनेत्यादि । अशोभनत्वं प्रकाशयिष्यन् दूषणान्युद्भावयति–तथात्वे चे-त्यादि । ब्रह्मणो विभोः परिणामित्वे, कृत्स्नप्रसक्तिरितिसूत्रार्थो द्वितीयेऽध्याये वक्ष्यते। कृत्स्नस्येति ब्रह्मविकारभूतजगद्व्यतिरि-क्तब्रह्मणोऽभावप्रसङ्गादित्यर्थः । विकारस्यानित्यत्वेनानित्यताप-त्तेरप्यर्थसिद्धत्वादिति, नित्यं विभुमित्यादीनां , नित्यत्ववाच-

कानां, निष्कलमित्यादिनिरवयववाचकानां च वाक्यानां, विरोधापातादवैदिकत्वप्रसक्तेरित्यर्थः । विकारभावापन्नस्येति पितृपुत्रपतिकलत्रादिशब्दस्पर्शादिविषयचक्षुरादिकरणरूपापन्नस्य जगदाकारतया तन्मात्रतया देवतिर्यङ्मनुष्याद्यविशेषेण सर्वप्रत्यक्षानुभूत्या सर्वस्यापि देवाद्यविशेषेण प्राणिजातस्य प्राप्तत्वात् सर्वेषां मोक्षे प्रतिबन्धकस्य ब्रह्मानुभवाभावस्याभावात् तत्प्रसक्त्या संसारनिवर्तकमोक्षप्रतिपादकशास्त्रस्योपदेशसंततेश्च विषयाभावाद् बाध इति दूषणकदम्बो दुर्वार इति शङ्कातात्पर्यार्थः

पूर्वोक्तक्रमेण दूषणनिरासपूर्वकं समाधातुमाह—**मैवमिति** ॥ तूष्णींभूत्वा श्रूयतामित्यर्थः ।

तत्र यदुक्तं, **तर्कबलेनेत्यादि**, तत्राह—**न तावदिति** । यदि श्रुत्यादिप्रमाणविरहेण केवलं युक्तिं समाश्रयेम, तर्हि त्वद्वचनावकाशः स्यात् । न त्वेतदस्ति । श्रुत्यादिप्रमाणस्य विद्यमानत्वादिति निश्चित्य प्रमाणं पठति—**स्वयमात्मानमित्यादि श्रुतिन्यायाभ्यामित्यस्याऽभ्युपगम** इत्युक्तेन पदेन सहान्वयः । अनेन प्रमाणपाठेन विवर्तवादस्य निर्मूलतया कुतर्कवादत्वात् परिहासविषयत्वमिति द्योतितम् १। द्वितीयदूषणं निरस्यते—**नापि कृत्स्नप्रसक्तिरिति** । तत्र हेतुः—**ऊर्णनाभ्यादाविति** ऊर्णनाभेस्तन्तुभावापत्तौ सत्यामंशतोऽपि स्वरूपप्रच्युतिदर्शनाभावात् कृत्स्नप्रसङ्गस्य तु का कथेति भावः २। तृतीयं परिहरति **नापि निरवयवेति** । **तथाभूतपरिणामस्य** निरवयवद्रव्यपरिणामस्य, **उक्तरीत्या** निरवयवानां क्षीरावयवानां परिणामप्रतिपादनरीत्या **साधितत्वात्** साधुनिर्णीतत्वात् । इदं च सामान्यपरिणामप्रस्तावेनोक्तम् ३। इदानीं स्वसिद्धान्तेन शेषपरिहारानाह—**वस्तुतस्त्विति** सूत्रकारमतेन तु । **शक्तिविक्षेपस्यैवेति** शक्ति-

प्रसारणस्यैवेत्यन्ययोगव्यवच्छेदार्थ एवकारः । नान्यस्येत्यर्थः । यदि ब्रह्मस्वरूपपरिणामोऽस्माभिरभ्युपगतः स्यात् तदा त्वित्रादाय छिद्रमवलोकनीयम् । तस्य त्वनभ्युपगमादित्येवकारस्यार्थमप्यत्रे हेतुः – ब्रह्मस्वरूपपरिणामानभ्युपगमादिति । विरोधगन्धोऽपीति । अपिशब्देन कैमुत्यन्यायावतारः । यदि तद्गन्ध एव नास्ति, विरोधस्य कः प्रसङ्ग इति भावः ४। एव ञ्चेति । सिद्धान्तस्य श्रौतत्वेनोक्तदोषाभाववत्त्वेन च ब्रह्मणो निर्विकारत्वे सिद्धे सति ५। प्रत्यक्षप्रमाणगोचरत्वासिद्धिः ६। तद् भावे प्रत्यक्षविषयत्वाभावे साधुतरं सर्वप्राप्त्यभावः ७। तत्त्वे तु सर्वप्राप्त्यभावे तु साधीयान् सर्वमोक्षाभावः ८। एवम् उक्तप्रकारेण, को भूय इत्युक्त्या न कोऽपि । दूरतमादपास्तः शास्त्रानर्थक्यप्रसङ्ग ९ इत्यर्थः ।

किञ्च । पूर्वोक्तयोर्हेतुदृष्टान्तयोर्मध्ये हेतुरप्रयोजकत्वेन दूषितः । तदवशिष्टं दृष्टान्तमपि सिंहावलोकनन्यायेन स्मृत्वा तत्राप्रयोजकतां विधत्ते—नापि पुनराकाशकल्पस्येति । सौरस्यं सुरसत्वं सौष्ठवमिति यावत् । अप्रच्युतस्वरूपस्येति । आकाशकल्पत्वे सति परिणामवत्त्वस्य दार्ष्टान्तिके विद्यमानत्वाद्धेतुवद् दृष्टान्तस्यापि तथात्वं सिद्धमिति प्रथमस्य हेतोस्तात्पर्यार्थः । श्रुतिगर्भितहेत्वन्तरं च—आकाशादिति । अपिच तथाभूतदृष्टान्तो युक्तौ दीयतां योऽन्यस्य पक्षस्य बाधकः स्यादिति अस्मत्तः शिक्षणीयं त्वया । अमुष्य दृष्टान्तस्य तु नद्विपरीतत्वादिति परिहमन्निवाह—प्रत्युत तस्येति । तस्योक्तदृष्टान्तस्येत्यर्थः । उपसंहरति–ब्रह्मपरिणामभावो निरवद्य इति । तत्र प्रमाणं पठ्यते–तथैवेति । श्रुतिस्मृत्योः । अयं भावः । पदार्थभावानां शक्तयो न केनापि प्राकृतबुद्धिना ऽपच्छेत्तुं शक्याः।

तर्काणामप्रतिष्ठितत्वेनास्माकमौपनिषदानां श्रौतस्यैव सिद्धान्त-स्याश्रयणीयत्वादिति भावः ख्यापनाय दृष्टान्तगर्भितवाक्यमाह—यथोर्णनाभिरिति । यथोर्णनाभेरूर्णाप्रसारणाकुञ्चनोभयार्ह ताल्लक्षणशक्तिमत ऊर्णाविर्भावतिरोभावौ तदप्रच्युतस्वरूपतयैव भवतः । यथा च पुरुषादन्नमयात् तन्मात्रशक्तिमतः केशलो-मानामुत्पत्तिमात्रकार्यसिद्धिः । यथा च भूमेस्तथाभूतशक्तिमत्या औषधीनां जन्ममात्रम् । तथा सर्वकार्योत्पादनलक्षणाचिन्त्यान-न्तसर्वशक्तेरक्षरपदार्थाद् ब्रह्मणो विश्वं सम्भवतीति । यदा स्वस्वस्वाभाविकाल्पाधिकसातिशयशक्तिमद्भ्योऽचेतनेभ्यस्तच्छ-क्त्यनुसारेण स्वस्वकार्यभावापत्तावप्यप्रच्युतस्वरूपत्वाभावाभावः प्रत्यक्षगोचरत्वेनापह्नोतुमशक्यस्तर्ह्यचिन्त्यसर्वाचिन्त्यविश्वाख्यका-र्योत्पादनार्हशक्तिमतो भगवतो जगद्भावापत्तावप्यप्रच्युतस्वरू-पत्वं किमशक्यमिति श्रुतेर्ध्वनितार्थः । श्रुतिसहकारिणी स्मृ-तिश्च—तथैव परिणामेनेत्यादि । परिणामोऽत्र शक्ति-विक्षेप इत्युक्तमेव । तत्र प्रमाणकथनाय प्रतिजानीते—सो-ऽपि तत्रैवोक्त इति । न हि तत्र विक्षेपशब्दस्य कण्ठरवेण पाठ इत्यत आह—क्षोभशब्देनेति । कथं तेनोक्तार्थोपस्थि-तिरिति चेत् तत्राह—तात्पर्यात्मकेनेति । देवदत्तस्य चेतसि क्षोभो यज्ञदत्तस्य मनसि विक्षेप इति पर्यायत्वप्रसिद्धेरिति सुव्यक्तम् । तमेव श्लोकं पठति—प्रधानं पुरुषं चापीत्यादिना । पर्यायमुखेनोदाहृत्य तत्कल्पनानिरासाय साक्षात्प्रतिपादकवाक्य-माह—किञ्चेत्यादिना । प्रकृतमुपसंहरति—तत् सिद्धमिति । तच्छब्दस्य व्याख्यानमाह—जगदभिन्नेत्यादि । जगज्जन्माद्य-भिन्नेत्यर्थः ॥

ननु किमुपादानं किं वा निमित्तत्वं, कथं चोभयाभिन्नत्व-

भिलाकाङ्क्षोपशमाय क्रमेणोपानिषद्विवक्षितार्थं लक्षयितुमादावु-पादानं निर्दिशति—तत्रेति ।

तत्रोपादानत्वं नाम परापरक्षेत्रक्षेत्रज्ञादि-पदार्थभूतस्वस्वाभाविकीनां सूक्ष्मावस्थापन्नानां शक्तीनां तत्तद्गतसद्रूपकार्याणां स्थूलतया प्रकाश-कत्वमिति ।

निमित्तत्वं च स्वस्वानादिकर्मसंस्कारवशीभू-तात्यन्तसंकुचितभोगस्मरणानर्हज्ञानधर्माणां चेत-नानां कर्मफलभोगार्हज्ञानप्रकाशेन तत्तत्कर्मफ-लतत्तद्भोगसाधनैः सह योजयितृत्वमिति ।

एतदुभयाभिन्नत्वं तत्त्वमितीत्थमुक्तस्वरूप-कारणत्वस्य ब्रह्मस्वरूपगतत्वेन स्वरूपप्रतिपादन-परत्वमेव । न हि परमताभिप्रेततटस्थत्वोपल-क्षणादिकल्पनावकाश इति ।

नच लक्षणवाक्यस्य तद्भिन्नपदार्थवैलक्षण्य-ज्ञापनभूते फलमात्रे पर्यवसानात् तस्य चैतावता जन्मादिवाक्योक्तलक्षणेनैव सिद्धेः, सत्यं ज्ञान-मनन्तं ब्रह्मेत्युत्तरवाक्योक्तलक्षणस्य वैयर्थ्यं, विशेषाभावादिति वाच्यम् । जन्मादिवाक्यस्य ब्रह्मलक्षणस्य लक्ष्यस्वरूपनिरूपणपरत्वेऽपि कार्य-

निरूपितत्वेन तत्सापेक्षत्वात्, सत्यादिवाक्यस्य तु तदभाववत्त्वेन निरपेक्षत्वात् तथाभूतविशेषस्य विद्यमानतया सार्थक्यमेव । तत्र च सत्यत्वमात्रकथनेऽचिद्वर्गेऽतिप्रसङ्गात् तद्वारणफलको ज्ञानपदसंनिवेशः । तत्त्वे च चेतनेऽतिव्याप्तेरनन्तपदगुम्फनमिति। सत्यत्वज्ञानत्वानन्तत्वैश्चोभयवैलक्षण्यज्ञापकं ब्रह्मलक्षणमिति ।

नच सत्यादीनामेव गुणत्वान्न सत्यत्वादिपर्यन्तधावनं युक्तं, गौरवादिति वाच्यम् । सत्यादीनां स्वरूपवाचकत्वाऽभावेन गुणपरत्वविधानेऽसत्यजडपरिच्छिन्नमेव लक्ष्यं ब्रह्मस्वरूपं भवन्मतेऽभ्युपगतं स्यात् ।

तस्मादुक्त एव सिद्धान्तो वरीयान् । अभिन्ननिमित्तोपादानत्वे सति सत्यत्वादिमत्त्वं जिज्ञास्यस्य ब्रह्मणो लक्षणमिति कृतं विस्तरेण १।१।२॥

निर्दिष्टं लक्षयति—परेति । पराऽपरादिशब्दवाच्यानां स्वस्य ब्रह्मणोऽसाधारणानां स्वाभाविकीनां प्रलये सूक्ष्मावस्थापन्नानां कार्यविस्तरणव्यापारानर्हाणां शक्तीनां तत्तद्गतसद्रूपकार्याणां च स्वावान्तरकारणभूतशक्तिस्थभावरूपसूक्ष्मतापन्नकार्याणामित्यर्थः। तत्राऽऽदिपदेन चेतनाचेतनप्रकृतिपुरुषादीनां संग्रहः । कार्यसद्रूपत्वं चारम्भणाधिकरणस्थसूत्रैर्वक्ष्यति । तानि तु—भावे चो-

पलब्धेः । १ । सत्त्वाच्चावरस्य । २ । असद्व्यपदेशादिति चेन्न धर्मान्तरेण वाक्यशेषात् । ३ । युक्तेः शब्दान्तराच्च । ४ । पटवच्चेति । ५ ।

निमित्तस्वरूपं निर्देशलक्षणाभ्यामाह—**निमित्तत्वं चेति** निर्देशः । **स्वेत्यादिलक्षणम्** । स्वस्य स्वस्य नियतविभक्तानादिविचित्रकर्मसंस्कारस्य परतन्त्राणामत्यन्तसङ्कुचितोऽत एव भोगस्मरणानर्हो ज्ञानलक्षणो धर्मो येषां तेषां क्षेत्रज्ञानां कर्मोन्मुख्यभवनतत्फलभोगार्हधर्मभूतज्ञानप्रकाशेन तत्तत्कर्मफलैस्तेषां तेषां फलानां भोगयोग्यशरीरेन्द्रियादिकरणैः सह संबन्धकारयितृत्वमिति। **एतदुभयाभिन्नत्वं तत्त्वमिति** । अनयोरुपादाननिमित्तयोरेकस्मिन्नाश्रितत्वं तदभिन्नत्वम् । लक्षणमुक्त्वा तत्समन्वयमाह—**इत्थमिति** । पूर्वप्रतिपादनप्रकारेण, उक्तं **स्वरूपं** यस्य तथाभूतकारणत्वस्य कारणलक्षणस्य **ब्रह्मस्वरूपगतत्वेन** जिज्ञासासूत्रोक्तनिरतिशयबृहत्समानाधिकरणत्वेन स्वरूपनिरूपणपरत्वमेवेति । अयोगव्यवच्छेदार्थपर एवकारः । स्वरूपनिरूपणपरत्वाभावाभावस्य तल्लक्षणस्यात्र विद्यमानत्वात् । तदेव द्रढयति—**न हीत्यादिना** ।

एवं स्वाभिमतविरोधमसहिष्णुं पुनरुत्तिष्ठमानं स्वयमेवोपशामयति—**नचेत्यादिना** । लक्षणस्य लक्ष्यभिन्नवस्तुमात्रव्यावर्तकत्वमेव कार्यमिति प्रसिद्धम् । **तस्य च** वैलक्षण्यद्योतनस्य प्रोक्तलक्षणेनैव सिद्धत्वाल्लक्षणान्तराकाङ्क्षोपशमत्वेन सत्यादिवाक्योक्तोत्तरलक्षणस्य **वैयर्थ्यं विशेषाभावादिति** । फलाकाङ्क्षाऽभावे साधनाकाङ्क्षाया अभावादिति **न वाच्यं न** शङ्कनीयम् । विशेषस्य सत्त्वादित्याह—**जन्मादिवाक्यस्येति** । उक्तफलवत्त्वेऽपि **तत्साधेच्छत्वात्** स्वनिरूपककार्यतद्द्रस्या-

कालसापेक्षज्ञानवत्त्वात् । सत्यादिवाक्यस्य तु, तुशब्दो भिन्नोपक्रमार्थो महद्वैलक्षण्यं द्योतयति । तदभाववत्त्वेन कार्य-निरूपितत्वापेक्षाभाववत्त्वेनेति । तथाभूतविशेषस्य निरपे-क्षत्वभूतविशेषस्येति । सार्थक्यमेवेति न वैयर्थ्यमित्यर्थः । इदानीं पदसंनिवेशफलं व्यनक्ति—तत्र च सत्यत्वेति । तस्यापि सत्यत्वादिति भावः । तथाच श्रुतिः—ऊर्ध्वमूलोऽर्वाक्शाख एषोऽश्वत्थः सनातन इति । स्मृतिश्च—अश्वत्थं प्राहुरव्यय-मिति । ननु सनातनाव्ययपदयोः श्रुतिस्मृतिभ्यां पठितयोर-नादित्वप्रतिपादनपरत्वादविद्यादेरनादित्वमभीष्टमेव चास्माकं "षडस्माकमनादय" इत्यादिनाऽनादिसान्तत्वं तल्लक्षणमस्माभिः संपाद्यमेवेति चेदेवमविद्यादेरनादित्वाऽभ्युपगमे सति भावत्व-मपि अकामेनापि त्वया स्वीकार्यमेव । तथात्वे तन्नाशे न कापि निगमना । ननु प्रागभावदृष्टान्तेनानुमानस्यैवात्र निगमनात्व-मिति चेन्न । प्रागभावस्याभावरूपत्वेन भावसाधने दृष्टान्तविक-लत्वात् । अभावस्य भवन्मते भिन्नपदार्थत्वानभ्युपगमाच्च । न केवलं युक्तिमात्रं श्रुतेरपि प्रमाणत्वात् । "अथैनमाहुः सत्यकर्मेति सत्यं ह्येवेदं विश्वमसौ सृजते । अथैनमाहुर्नित्यकर्मेति नित्यं ह्येवा-सौ कुरुते" इति । तन्नामाऽचिति अतिप्रसङ्गवारणं फलं यस्येति तथा । तत्त्वे च सत्यत्वज्ञानत्वोभयसमुदायस्य लक्षणत्वे सति । चेतने इति । चेतनस्यापि सत्यज्ञानरूपत्वात् । अनन्तपदेनात्र स्वरूपगुणशक्तिभिरनन्तत्वं विवक्षितम् । अन्यथा जीवज्ञानेऽति-प्रसङ्ग इत्यर्थः ।

इत्थमुक्तार्थमसहिष्णोः पुनराशङ्कोद्भावनमाकलय्य तदुत्था-नात् प्राक् स्वयमेव समाधत्ते—न चेति । अयमत्र चिन्तनीयः । भवन्मते सत्यादिपदानां स्वरूपत्वं गुणत्वं वेति । नाद्यः । त्रैवि

ध्यापत्त्याऽद्वैतभङ्गः। नच त्रयाणामपि तदैक्यार्थकत्वम्। पर्या-
यत्वापत्तेः। ननु बहूनामपि पदानामन्यसापेक्षत्वेनैकपरत्वं घट-
तेऽतो न पर्यायत्वापत्तिरूपो दोषः। एकस्यापि पुंसः पितृत्व-
भ्रातृत्वपुत्रत्वादेः शब्दस्य तत्तदुपयोगिभूतपुत्रभ्रातृपित्रादिसा-
पेक्षतया प्रतिपादनं दृश्यते। तथैवात्राप्यसत्त्ववदज्ञानवदन्तवद्व-
स्तुसापेक्षतया सत्यादिवत्त्वेन न सत्यादीनां पर्यायत्वमिति चेन्न।
एवमपि निर्विशेषत्वहानिर्दुर्वारा। तथाहि। लोके पुरुषत्वादि-
निरपेक्षविशेषवत एव सापेक्षपदवाच्यत्वं, न स्वतोऽनिर्वचनीय-
स्येति। आस्तामेतत्। असत्यवत्त्वं भावोऽभावो वेति विवेचनी-
यम्। भावत्वे स्वरूपहानिः। सत्यत्वापत्तेः। द्वितीये चासतः
खपुष्पादेर्व्यावृत्तेरिव निरर्थकस्य वारणाय न श्रुतिप्रवृत्तिः।
पूर्वमेवासत्यत्वादित्युभयथापि पाशारज्जुरित्यर्थः। एष न्याय
उत्तरयोरपि पदयोर्योजनीयः। नापि शेषपक्ष इत्याह—**सत्या-
दीनामिति**। अयं भावः। सत्यादिपदानां स्वरूपवाचकत्वे
ब्रह्मणो वाक्यगोचरत्वापत्तेरतो न स्वरूपप्रतिपादनत्वं, किन्त्व-
गत्या गुणपरत्वमभिगन्तव्यम्। तथा सति, असत्यरूपं सद्गुणकं,
जडस्वरूपं चैतन्यगुणकं, परिच्छिन्नस्वरूपमपरिच्छिन्नगुणकं
त्वं स्यात्। किञ्च। वाक्यागोचरत्वाङ्गीकारेऽनिर्वचनीय-
वमप्यर्थतः सिद्धम्। तथात्वे च मिथ्यात्वं भवतां सिद्धान्तेमै-
ापतितं कथमप्यनिवारणीयम्। तथाच प्रयोगाः—ब्रह्म मिथ्या,
ानिर्वचनीयत्वाद् यदेवं तदेवम्। तव मते मायादिवत्। ब्रह्म
मथ्या, असत्यस्वरूपत्वात्। तव मते रज्जुसर्पवत्। ब्रह्म
मथ्या, जडत्वात्। तवाभिप्रेतघटादिवत्। ब्रह्म मिथ्या, परि-
च्छिन्नत्वात्। घटादिवदित्यादयः।

उपसंहरति—**तस्मादिति**। उक्त एवेति। सत्यात्वादिगुणैः

सत्यादिस्वरूप इति पूर्वोक्तसिद्धान्तो वरीयानिति। तर्का-गोचरत्वाच्छ्रौतत्वाच्च श्रेष्ठतम इत्यर्थः। उक्तोभये लक्षणे वैशिष्ट्येन स्मारयति—अभिन्ननिमित्तेत्यादि। प्रकृतमुपसंहरति—कृतमिति॥ १। १। २॥

इत्थं निर्वचनलक्षणाभ्यां प्रतिपाद्य तदनुवादपूर्वकं प्रमाणमवतारयितुमारभ्यते—एवमिति।

**एवं लक्षिते जिज्ञास्ये ब्रह्मणि प्रमाणमाह—**

# शास्त्रयोनित्वात्।१।१।३।

**शास्त्रं वेदलक्षणमेव योनिः कारणं ज्ञापकं प्रमाणं यस्मिंस्तच्छास्त्रयोनि। तस्य भावस्तत्त्वम्। तस्मादिति समासः। शास्त्रैकप्रमाणकत्वे सति तदन्यप्रमाणागोचरत्वादिति फलितोऽर्थः। तं त्वौपनिषदं पुरुषं पृच्छामि, सर्वे वेदा यत्पदमामनन्ति, नमो वेदान्तवेद्यायेत्यादिश्रुतेः। वेदैश्च सर्वैरहमेव वेद्यः, नताः स्म सर्ववचसां प्रतिष्ठा यत्र शाश्वतीत्यादिस्मृतेश्च॥**

नच निष्प्रयोजनकोऽनुवाद इति शङ्कनीयम्। पूर्वोक्तसंबन्धार्थमनुवादस्यावश्यापेक्षितत्वात्। तथाहि। संबन्धस्योभयनिष्ठत्वनियतत्वेन पूर्वानुवादं विनोत्तरग्रन्थेन संबद्धुमशक्यत्वात् पूर्वमनूद्योत्तरेण संबद्धुं युक्तमेवेत्यलं प्रासङ्गिकेन। प्रकृतं व्याख्यायते। एवं पूर्वोक्तप्रकारेणेति सामान्योक्तिः। तदेव

विशिनष्टि—लक्षित इति । लक्षणमुखेन प्रतिपादिते इति लक्षणसूत्रार्थानुवादः । जिज्ञास्ये इति । जिज्ञासाविषये इति प्रथमसूत्रार्थानुवादः । ब्रह्मणीति । विषये सप्तमी । प्रमाणमिति । ब्रह्मज्ञानासाधारणं कारणमिति यावत् । व्याख्यातुकामः सूत्रं पठति–शास्त्रयोनित्वादिति । वेदलक्षणमित्युपलक्षणम् । वेदतदविरुद्धार्थकपुराणादि । नचोपलक्षणे किं मानमिति वाच्यम् । पुराणादीनां वेदार्थत्वेन वेदेत्युक्तौ तदर्थस्य तद्गतत्वाविरोधात् । शब्दार्थयोर्नित्यसंबन्धत्वादिति भावः । तथाच छान्दोग्ये नारदवाक्यम्—

इतिहासपुराणं पञ्चममिति ।

तत्रैव सनत्कुमारः—

इतिहासपुराणः पञ्चम इति ।

ऋग्युजुः सामाऽथर्वा च भारतं पञ्चरात्रकम् ।
मूलरामायणं चैव शास्त्रमित्याभिधीयते ॥
यच्चानुकूलमेतस्य तच्च शास्त्रं परं मतम् ।
अतोऽन्यो ग्रन्थविस्तारो नैव शास्त्रं कुवर्त्म तत्—

इत्यादिस्मृतेश्च । एवकारश्चान्ययोगव्यवच्छेदवचनपरो, नान्यप्रमाणगोचरत्वं तस्येत्यर्थक इत्यर्थः । एतच्च निरन्तरमत्रैव वक्ष्यते । योनिः कारणमिति । ननु वेदस्य ब्रह्मकारणत्वाङ्गीकारे "सकारणं कारणाधिपाधिपः । न तस्य कश्चिज्जनिता नचाधिपः । न तस्य कार्यं करणं च विद्यते" इत्यादिश्रुतिकदम्बविरोधाद्, ब्रह्मणोऽप्यन्यकार्यत्वे पूर्वोक्तसिद्धान्तभङ्गाच्चेति चेदत आह—ज्ञापकमिति । तज्ज्ञानकारणत्वात् । तत्कारणत्वमित्यौपचारिकोक्तिर्न तु तत्स्वरूपादिजनकत्वमित्यतो न

विरोधः । कर्तरि व्युत्पत्तिशङ्कावारणायाह—प्रमाणमिति । **समास** इति । अनेनैकपदकत्वमुक्तम् । सूत्रस्य निर्गलितार्थमुद्घाटयति—**शास्त्रैके**त्यादि । निष्प्रमाणत्वेन खपुष्पसाम्यशङ्कावारणाय—**शास्त्रे**ति पूर्वदलम् । शास्त्रभिन्नतर्कादिविषयत्ववारणार्थं—**तदन्ये**त्याद्युत्तरदलम् । तत्र विषयवाक्यमवतारयति—**तं त्विति** । तं सर्वशास्त्रप्रसिद्धम्, औपनिषदम् उपनिषत्प्रतिपाद्यं, पुरुषं पूर्णं पुरुषोत्तममित्यर्थः । पृच्छामीत्यनेन वेदवेद्यस्यैव जिज्ञास्यत्वं सूचितम् । अन्यदपि वाक्यमुदाहरति—**सर्वे** इति । नच वेदा इति बहुवचनादेव सर्वशब्दार्थसिद्धत्वात् सर्वपदस्य वैयर्थ्यं शङ्कनीयम् । बहुवचनस्य त्रिसंख्यकेऽपि पदार्थे समाप्तिदर्शनात् तथात्वे सति वेदत्रयमुक्तकर्ममीमांसकसिद्धान्तेऽतिप्रसङ्गात् तद्व्यावृत्तये, सर्व इति पदसंनिवेशस्य सार्थक्यमेव । **सर्वेऽपि वेदाः** परम्परया साक्षाद्वा तत्तत्प्रकृतैः रूपैर्यत् **पदं** पद्यते गम्यत इति पदं प्राप्यम्, **आमनन्ति** आसमन्तात् स्वप्रमेयतया प्राप्यतया च निश्चिन्वन्ति, गमयन्तीति यावत् । ननु सर्वस्यापि ब्रह्मरुद्रेन्द्रादेर्यत्तच्छब्दवाच्यतया सामान्यवत्त्वात् सर्वत्रातिप्रसङ्ग इति शङ्कावारणाय निर्णयपरं विशेषवाक्यमाह—**नमो वेदान्ते**त्यादि । "सच्चिदानन्दरूपाय कृष्णायाऽक्लिष्टकारिणे । नमो वेदान्तवेद्याय गुरवे बुद्धिसाक्षिणे" इति संपूर्णं वाक्यमत्रानुसंधेयम् । अस्यार्थस्तापनीव्याख्याने प्रतिपादितो विस्तरभिया नात्र लिख्यते । यत्तच्छब्दैरपि पूर्ववाक्येषु श्रीभगवान् कृष्ण एव प्रतिपाद्य इत्येतद्वाक्यावतरणप्रयोजनार्थः । एतदेवोपोद्बलयति, श्रीभगवद्वाक्येन—**वेदैश्चे**त्यादि । सर्वपदसन्निवेशप्रयोजनं पूर्ववत् सर्वत्रानुसंधेयम् । **अह**मिति स्वाभिन्नोक्तिः । **एवे**ति सावधारणोक्तिः । आभ्यां,

मत्तोऽन्यो न कश्चिदपि वेदाविषयोऽस्तीति व्यञ्जितम् । तथाचान्यत्र स्पष्टोक्तिः—"मत्तः परतरं नान्यत् किञ्चिदस्ति धनञ्जय" इति । एतद्दार्ढ्यायान्यद्वाक्यमाह—**नताः स्मे**ति । **यत्रे**ति । **यत्र** यस्मिन् भगवति, **सर्ववचसां प्रतिष्ठा** प्रतिपाद्यता तं **नताः स्म** इत्यन्वयः । यः सर्ववेदवेद्यः स एव नतिविषयः । स च भगवान् श्रीकृष्ण एवेत्युक्तम् । ननु वचसां स्वस्वार्थेषु प्रतिष्ठा, प्रमाणसिद्धत्वात् । कथमेकत्र श्रीभगवति ब्रह्मण्येव सर्वप्रतिष्ठाऽभ्युपगम्यते ? इत्याशङ्क्य समाधत्ते—**शाश्वती**ति । अयमर्थः । पदानां स्वार्थे प्रमाणत्वेऽपि सर्वस्यापि पदार्थस्य तत्कार्यत्वात् तत्रैवाऽव्यभिचारिणी प्रतिष्ठा । अन्यत्र चार्थानां व्यभिचारवत्तया तद्वाचकतयाऽपि व्यभिचारग्रस्तत्वादिति भावः । तथाच श्रुतिः—"नामानि सर्वाणि यमाविशन्ति" इति । एतच्च देवताधिकरणे निपुणं वक्ष्यते ॥

उक्तसिद्धान्तेऽनुपपत्तिमारोप्य शङ्कामुत्थापयति—**नन्वि**त्यादि ।

**नन्ववधारणे किं मानम् । तद्वाचकपदस्य सूत्रे दर्शनाभावात् । नच विषयवाक्योपजीवित्वात् सूत्राणां तदेव प्रमाणमिति जिज्ञासासूत्रोक्तन्यायावतरणमत्रापीति वाच्यम् । श्रुतिवाक्येषु तद्विषयेष्वपि तददर्शनस्य समानत्वादिति चेन्न । अन्ययोगव्यवच्छेदार्थकस्य श्रौतवाक्यस्यैवात्र प्रमाणत्वात् । "नावेदविन्मनुते तं बृहन्तम्" इति । निरतिशयबृहत्त्ववद् ब्रह्म, वेदविद्भ्योऽन्योऽवेदविन्न**

वेद। वेदनप्रमाणभूतवेदाज्ञानात् सुतरां वेद्यज्ञानाभाव इत्यर्थः ।

किञ्च । विषयवाक्यपर्यायभूते, अहमेवेति भगवद्वाक्येऽवधारणस्य कण्ठरवेण पठितत्वाच्च नान्यथाकल्पनावकाश इति ।

तथाहि । न तावद् ब्रह्मणः प्रत्यक्षप्रमाणविषयत्वम् । अतीन्द्रियत्वात् । नचैतेन ब्रह्मणः परिच्छिन्नत्वं शङ्कनीयम् । तस्य विभुत्वादिन्द्रियेषु बहिरन्तःसत्त्वेऽपि तेषां तत्प्रकाश्यतया तत्प्रकाशनशक्तिमत्त्वाभावात् । रूपगन्धप्रकाशने रसनश्रवणवत् । सूर्यादिप्रकाशने खद्योतादिवच्च । अणोरणीयानिति श्रुतेः ॥

नापि तस्यानुमेयत्वम् । अनुमानस्य स्वतन्त्रप्रमाणत्वाभावात् ।

श्रुतिसाहाय्यरहितमनुमानं न कुत्रचित् ।
निश्चयात् साधयेदर्थं प्रमाणान्तरमेव च ॥
इत्यादिस्मृतेः ॥

अवधारणे इति । शास्त्रं वेदलक्षणमेव योनिरित्यत्रावधारणार्थवाचकैवकाराध्याहारे । यद्वा, शास्त्रैकप्रमाणकत्वे सतीत्यत्रावधारणार्थकैकपदसन्निवेशसहकृतव्याख्याने ।

किं मानमिति। सापेक्षवचनं न किमपीति निष्प्रमाणकत्वाद-नुपपन्नं व्याख्यानमित्यर्थः। किमत्रानुपपत्तिबीजमिति शङ्कां निरसितुं हेतुमाह—तद्वाचकपदस्येति। तद्वाचकस्यान्ययोग-व्यवच्छेदलक्षणावधारणार्थवाचकस्यैवकारादिपदस्येति तत्पुरुष-पूर्वककर्मधारयसमासः। सूत्रे दर्शनाभावादिति। सूत्रनि-ष्ठाऽक्षरानुपूर्व्यां पाठाभावात्। तददर्शनस्यानुपलब्धिसहकृतप्र-त्यक्षप्रमाणसिद्धत्वादित्यर्थः। उक्तशङ्कादार्ढ्याय सिद्धान्तिमुखेन स्वयमेवाशङ्क्य समाधत्ते—नचेति। सूत्राणां स्वविषयभूतोपनिष-द्वाक्योपजीवित्वाद् विषयवाक्यार्थानामेव भगवता श्रीबादरायणेन सूत्रकृताऽत्र सूत्रितत्वात्, तदेवेति तद्गतपदमेव विषयवाक्यानु-पूर्व्यां पठितमेवात्रापि मानम्। तदेवोपमिनोति—जिज्ञासासूत्रे-त्यादि। अथातो ब्रह्मजिज्ञासेत्यस्मिन् सूत्रे उक्तो यो न्यायस्तस्या-त्राप्यवतरणमुपमानीकरणम्। तथाहि यथा जिज्ञासासूत्रे, कर्त-व्येति विधिपदस्य पाठादर्शनेऽपि सोऽन्वेष्टव्यः, स विजिज्ञासि-तव्यः, श्रोतव्यो मन्तव्य इत्यादिविषयवाक्याद् विधिपदमध्या-हृत्य ब्रह्मजिज्ञासा कर्तव्येति व्याख्यातं, तथात्रापीति न च वाच्यं न शङ्कनीयम्। कुत इत्याकाङ्क्षोपशमाय हेतुमाह—श्रुतिवाक्ये-ष्वित्यादि। तद्विषयेषु सूत्रविषयेषु, सर्वे वेदा इत्यादिषु पूर्वो-दाहृतेषु, तददर्शनस्य अवधारणार्थकपददर्शनाभावस्य। समा-नत्वाद् अविशेषत्वात्। जिज्ञासासूत्रविषयवाक्यानुपूर्व्यां पठित-तस्य सूत्रानुपूर्व्यामपठितत्वेऽपि तदध्याहारस्य युक्तत्वात्। नचात्र तन्न्यायस्यावतरणार्हत्वं, विरुद्धत्वादिति शङ्काभागार्थः। अथ विषयवाक्यं द्विविधम्। अन्वयव्यतिरेकभेदात्। तत्रान्व-यवाक्येऽध्याहृतपदाभावेपि व्यतिरेकवाक्ये तदर्थस्य स्पष्टत्वा-न्नोक्तन्यायावतरणविरोधो, नतरां दृष्टान्तविरोधो, नतमामुपमि-

प्रसिद्धेरिति तात्पर्यं बुद्धौ निधायोक्तां शङ्कां निराकरोति—**नेत्यादि** । तत्र, नेति । न निष्प्रमाणकमस्मद्व्याख्यानमित्यर्थः । कुत इत्याकाङ्क्षायां हेतुमाह—**श्रौतवाक्यस्यैवेति** । अत्रैवकारोऽयोगव्यवच्छेदार्थकः । **अत्रेति** । अस्मिन्नवधारणे । **प्रमाणत्वात्** । उक्तार्थस्य श्रुतिप्रमाणवत्त्वादिति भावः । उक्तार्थप्रकाशनाय वाक्यं विशिनष्टि—**अन्ययोगेति** । अन्ययोगव्यवच्छेदो नान्यदित्याकारकोऽर्थो यस्य तथा । किं तदित्यपेक्षायां वाक्यं पठति-**नावेदविदिति** । एतस्य वाक्यस्यार्थमाह—**निरतिशयेत्यादि** । बृहत्पदस्य व्याख्यानमाह—**निरतिशयबृहत्त्ववदिति** । स्वरूपगुणशक्तिभिर्निरतिशयबृहत्त्वं विद्यतेऽस्येति तद् बृहत्पदवाच्यं ब्रह्म, तत्रासाधारणं प्रमाणं वेदं स्वरूपतोऽर्थतश्च संप्रदायमुखेन विदन्ति ये ते वेदविदस्तेभ्यो भिन्नोऽवेदविदुक्तलक्षणहीनस्तन्न वेद न जानातीत्यर्थः । कारणाभावे कार्याभावः, प्रमाणज्ञानाभावे प्रमेयज्ञानाभाव इति न्यायावतारेण द्रढयति–**वेदनेत्यादि** । वेदने प्रमेयवेदने ब्रह्मज्ञाने **प्रमाणभूतो यो वेदस्तस्याऽज्ञानाद् वेद्यज्ञानाभावः, सुतरामिति** । **वेद्यस्य ब्रह्मणो ज्ञानाभावो** निःसंशय इत्यर्थः ।

अथ न केवलं व्यतिरेकवाक्यस्यैवोक्तार्थे प्रामाण्यम्, अन्वयवाक्येऽप्यवधारणार्थस्य सत्त्वादित्याह–**किञ्चेति** । उक्तवाक्यादन्यदपि । प्रमाणस्याप्यत्र सत्त्वादित्यर्थः । तदेवाह–**विषयेत्यादि** । **विषयवाक्यस्य** सर्वे वेदा इत्यादेः **पर्यायभूते** विवरणभूते, वेदैश्च सर्वैरहमेव वेद्य इत्यस्मिन् **भगवद्वाक्ये अहमेवेत्यवधारणस्य एवकारस्य कण्ठरवेणेति** साक्षाद्विद्यमानत्वात् । नन्वहमेव वेद्य इत्यत्रावधारणस्यैवकारस्य सत्त्वेऽपि नोक्तार्थे प्रामाण्यमस्ति । अहंपदेन प्रमेयवाचकेन सहान्वयान्न प्रमाणवाच-

केन वेदैरित्यनेन सहान्वेतुं शक्यः। तथाऽहमेव वेद्यो, नान्यो मत्त इति सिद्धेऽप्यर्थे, नान्यप्रमाणगोचरोऽहमित्यर्थस्यासिद्धत्वादिति चेन्न। सर्वैर्वेदैरहमेव वेद्यो, न मत्तोऽन्य इत्यर्थस्य तव निर्विवादत्वेन अवधारणनिर्द्धारितवेद्यत्वे सिद्धे सति वेदितुं योग्यो वेद्य इति योग्यार्थकप्रत्ययादेवान्यप्रमाणगोचरत्वस्यानर्हत्वमवधार्यते। अतो नोक्तार्थऽसिद्धितारोपणावकाशः। नच कण्ठरवेणैत्याद्युक्तप्रतिज्ञाहानिरिति वाच्यम्। एवकारस्योभयत्रान्वयाद् वेदैरहमेव वेद्यो, न मत्तोऽन्यः कश्चिदिति, पुनश्च वेदैरेव वेद्यो, नान्यैः प्रमाणैरित्यन्वयेऽपि न कश्चिद्दोषः। नच गौरवात्मकदोषस्य सत्त्वादिति शङ्कनीयम्। फलवद्गौरवस्य तन्त्रपाठवदोषवत्त्वाभावादिति नोक्तशङ्कागन्धस्पर्शः। चकारोऽत्र वाक्यान्तरं समुच्चिनोति। तथाच हरिवंशे नारदवाक्यम्—

यं विदुर्वेदतत्त्वज्ञा ब्रह्माद्याः सनकादयः।
विचिन्वन्तः प्रदीपेन ज्ञानाख्येन च केशवम्॥
यं प्राप्य न निवर्तन्ते योगिनो यतचेतसः।
सोऽसि वेदपुराणस्थस्तुभ्यं देव नमो नमः॥
त्वामाहुः सकला वेदा ब्रह्मेति ज्ञाननिश्चयादिति॥

तत्रैव दुर्वासोवचनम्—

वेदान्ते प्रथितं तेजस्तव चेदं विचार्यते।
ये च विज्ञानतृप्तास्तु योगिनो वीतकल्मषाः॥
पश्यन्ति हृत्सरोजे हि तदेवेदं वपुः प्रभो॥
वेदैर्यद्गीयते तेजो ब्रह्मेति प्रतिपाद्यते।
तदेवेदं विजानेऽहं रूपमैश्वरमीश्वर॥
वैष्णवं परमं तेज इति वेदेषु पठ्यते।

अवगच्छाम्यहं विष्णो तदेवेदं वपुस्तवेति ॥

तत्रैव घण्टाकर्णवचनम्—

केचिद् बहुत्वेन वदन्ति देव-
मेकात्मना केचिदिमं पुरातनम् ।
वेदान्तसंस्थापितसत्त्वयुक्तं
द्रष्टुं तमीशं वयमुद्यताः स्म—इति ॥

मोक्षधर्मे ब्रह्मवाक्यम्—

एष वेदनिधिः श्रीमानेष वै तपसो निधिः ।
नारायणपरा वेदा यज्ञा नारायणात्मका, इत्यादि ॥

स्वर्गपर्वणि वैशम्पायनवाक्यम्—

वेदे रामायणे पुण्ये भारते भरतर्षभ ।
आदौ चान्त्ये च मध्ये च हरिः सर्वत्र गीयते—इति ॥

अथ स्वातन्त्र्येण प्रमाणान्तरगोचरतां मन्यमानानां मतस्य दूषणवत्तां दर्शयितुं प्रतिजानीते—**नान्यथेति** प्रमाणान्तरगोचरत्वकल्पनोद्भावनावकाशः ।

तदेव व्यनक्ति—**तथाहीति** सैवोक्ताऽन्यप्रमाणाविषयता प्रपञ्च्यत इत्यर्थः । तत्रादौ प्रत्यक्षप्रमाणकं ब्रह्मेति केषाञ्चित् पक्षो निराक्रियते—**न तावदित्यादि** । न प्रत्यक्षप्रमाणविषयताश्रयं ब्रह्मेति प्रतिज्ञा, तत्र हेतुमाह—**अतीन्द्रियत्वादिति** । एतदुक्तं भवति । इन्द्रियार्थसन्निकर्षजन्यज्ञानस्य प्रत्यक्षत्वमिति निर्विवादः । तथाचेन्द्रियार्थत्वाभावेन तत्सन्निकर्षानर्हस्य वस्तुनः सन्निकर्षाभावेन सुतरां तज्जन्यत्वाभाव इति । तथाच प्रयोगः । न प्रत्यक्षप्रमाणवेद्यं ब्रह्म, अतीन्द्रियत्वात् । परमाण्वादिवत् । व्यतिरेकेऽपि, न प्रत्यक्षविषयं ब्रह्म, जात्यादिलौकिकानेकविशेषणवत्त्वाभावात् । यन्नैवं तन्नैवम् । मनुष्यादिवत् । ननु यदि ब्रह्मणि

इन्द्रियसन्निकर्षानर्हत्वमभ्युपेयते, तर्हि तस्येन्द्रियेष्वव्यापकत्वमभ्युपेयं स्यात्। तथा सति परिच्छिन्नत्वं दुर्वारणीयम्। व्यापकत्वे चेन्द्रियेषु तस्य सत्त्वेन कथं सन्निकर्षाभाव इति शङ्कानिरासार्थमाह—नचेति। एतेन ब्रह्मण इन्द्रियसन्निकर्षानर्हत्वप्रतिपादनेन, ब्रह्मणः परिच्छिन्नत्वम् अव्यापकत्वमिन्द्रियदेशाव्याप्तिमत्त्वमिति यावत्। शङ्कनीयं शङ्काविषयीकर्तुं युक्तं, संशयास्पदत्वमुद्भाव्यमित्यर्थः। तस्य ब्रह्मणो विभुत्वाद् विभुपरिमाणकत्वादेव सर्वत्र व्यापकत्वाविशेषतयेन्द्रियेष्वपि बहिरन्तः सत्त्वेऽपि विद्यमानत्वेऽपि तेषामिन्द्रियाणां, तस्य भासा सर्वमिदं विभातीत्यादिप्रमाणात् तत्प्रकाश्यतया तेन ब्रह्मणा प्रकाश्यतया। तत्प्रकाशनेति स्वप्रकाशकब्रह्मप्रकाशने प्रकाश्यानां श्रवणादेः शब्दादिप्रकाशनसामर्थ्यवत्त्ववद् योग्यताभावात्।

इदमत्राकूतम्। न तावत् प्रमाणविषयीभावे प्रमेयसत्तामात्रमसाधारणं कारणम्। तथात्वे क्षीरादिगतस्वरूपस्य तत्र सत्त्वेन तत्पाने रसनेन्द्रियेणापि तद्ग्रहणापत्तेः। अपि तु प्रमाणगतस्वाभाविक्यास्तच्छक्तेरेव कारणत्वं वाच्यम्। तथाऽत्रापि ब्रह्मणः सर्वत्र व्यापकत्वेनेन्द्रियेषु सत्त्वेऽपि तद्ग्रहणे सामर्थ्याभावान्न तद्विषयो ब्रह्मेति। एतदर्थगर्भितदृष्टान्तावाह — रूपगन्धेत्यादि। यथा लड्डुकादौ रूपगन्धयोः सत्त्वेऽपि रसनश्रवणयोरिन्द्रियत्वेन प्रमाणाविशेषत्वेऽपि रूपादिग्रहणसामर्थ्याऽभावात् तद्ग्रहणं नास्ति, तद्वदिति शक्त्यभावमात्रे दृष्टान्तः। प्रकाश्यानां प्रकाशकाऽप्रकाशने द्वितीयदृष्टान्तमाह—सूर्यादीति। यथा सूर्यादीनां स्वस्य प्रकाशकानां प्रकाशने खद्योतादेस्तत्प्रकाश्यस्याशक्यता तद्वत्। खद्योतादीत्यत्रादिपदेन दीपादेः संग्रहः। उक्तहेतावतीन्द्रियत्वादित्यत्र श्रुतिं प्रमाणयति — अणोरणीयानिति

व्याख्याता चेयं मनुना "प्रशासितारं सर्वेषामणीयांसमणीयसाम्
इति। पञ्चमांशे, ब्रह्मणाऽपि। "नारायणमणीयांसमशेषाणामणी-
यसाम्"इति। अणीयसां क्षेत्रज्ञादीनामपि अणीयांसं निरतिशयसू-
क्ष्मम्। अणुपरिमाणकानां प्रत्यगात्मादीनां सूक्ष्मत्वेऽपि ब्रह्म-
णस्तु तेभ्योऽपि सूक्ष्मतमत्वम्। तेषामान्तरत्वाद् ब्रह्मण इति
श्रुतिस्मृतिफलितार्थः ॥ १ ॥

उक्तप्रयोगे दृष्टान्तीकृतानां परमाण्वादीनां प्रत्यक्षानर्हत्वे-
ऽप्यनुमानगम्यत्वात् तथा ब्रह्मणोऽप्यतीन्द्रियत्वाविशेषादनुमान-
गोचरत्वमस्त्विति शङ्कां वारयन्नाह—**नापीति**। अपीत्यवधा-
रणार्थकः। **तस्य** उक्तलक्षणस्य ब्रह्मणोऽनुमानगोचरता नास्त्ये-
वेत्यर्थः। यद्वा। उपमायाम् अपिशब्दः। यथा प्रत्यक्षप्रमाणा-
ऽगोचरं ब्रह्म, तथाऽनुमानागोचरमपीत्यर्थः। **तस्य** ब्रह्मणः, **अ-
नुमेयत्वम्** अनुमानगोचरत्वं न। कुत इत्यपेक्षायामाह— **अनु-
मानस्येति**। **स्वतन्त्रेति**। श्रुतिमूलकत्वाभावेनाप्रमाणत्वादि-
ति भावः। तत्र स्मृतिं प्रमाणयति— **श्रुतीति**। अस्या अयम-
र्थः। श्रुतिनिर्मूलकानुमानं कुत्रचिदपि पदार्थे निश्चयात्मिय-
मादर्थे स्वसाध्यं वस्तु न प्रतिपादयेत्। साध्यनिश्चयज्ञानस्य
तत्प्रतिबन्धकत्वादनुमितिज्ञानस्य संदिग्धविषयकत्वाच्च। उक्त-
न्यायमन्यत्राप्यतिदिशति— **प्रमाणान्तरमेव चेति**। श्रुति-
साहाय्यरहितमित्यत्रापि संबद्ध्यते। श्रुतिसहायविरहवतः प्र-
माणमात्रस्यापि संदिग्धविषयकत्वमेवेत्यर्थः। तथाच श्रुतिः—
"नेन्द्रियाणि, नानुमानम्" इति। उक्तप्रत्यक्षस्य प्रकृतस्यानुमा-
नस्य च निषेधपरमिदं श्रुतिवाक्यं बोध्यम् ॥

अथानुमानस्य स्वतन्त्रप्रमाणकत्वाभावं श्रुत्वा तदसहिष्णु-
स्तार्किक उत्तिष्ठते —**नन्वित्यादि**।

ननु क्षित्यादीनि महाभूतानि कर्तृजन्यानि, कार्यत्वात्। यदेवं तदेवम्। घटादिवत्। व्यतिरेकेऽपि, यन्नैवं तन्नैवम्। कालादिवत्। परपक्षे प्रधानादिवच्चेत्यन्वयव्यतिरेकमुखेन तत्साध्यभूतस्य जगत्कर्तुर्ब्रह्मणोऽनुमातुं शक्यत्वात् कथं तदविषयत्वमिति चेन्न। उक्ततर्केण कुलालादिवत् सामान्यकर्त्रनुमितौ जातायामपि तत्स्वरूपगुणशक्तीनामलौकिकतया प्रत्यक्षागोचरत्वात् क्षेत्रज्ञविशेषस्यैव प्रतीतिविषयतापत्तेर्नोक्तलक्षणस्य ब्रह्मण उपलब्धिः।

किञ्च। आस्तां तावद् ब्रह्मस्वरूपाद्युपलब्धिप्रसङ्गः। उक्तानुमानस्यैव दुष्टत्वेन, न प्रमाणत्वभावः। स्वरूपासिद्धतादोषग्रस्तत्वात्। तथाहि। युष्मन्मते आकाशस्य भूतत्वेऽपि कार्यत्वानभ्युपगत्योक्तस्य हेतोः स्वरूपाऽसिद्धत्वात्। अन्यथाऽस्मत्पक्षप्रवेशो दुर्वार इति सिद्धं ब्रह्मणोऽनुमानावेद्यत्वम्॥

अनुमानाकृतिं रचयति—क्षित्यादीनि महाभूतानीत्यादि। तत्रान्वयव्याप्तिं दर्शयति—यदेवं तदेवमिति। यत्र कार्यत्वावच्छिन्नं तत्र कर्तृजन्यताश्रयं, घटादिवदिति। व्यतिरे-

कर्त्र्यापि च—यन्नैवं तन्नैवमिति । यत् कार्यताभावाश्रयं तत् कर्तृजन्यताभावाश्रयम् । तत्र स्वमतानुसारिदृष्टान्तमाह—कालादीति। आदिना परमाण्वादिसंग्रहः। अन्यसाधारणदृष्टान्तान्तरमाह—परपक्षे इत्यादि। अन्वयव्यतिरेकाभ्यां यो जगत्कर्ता तदेव ब्रह्मेति निश्चेतुमर्हत्वान्नोक्तदोष इत्याह—अन्वयव्यतिरेकमुखेनेति । तत्साध्यभूतस्येति । उक्तानुमानसाध्यभूतस्य विचित्रजगल्लक्षणकार्यकर्तुरनुमातुमनुमानेन ग्रहीतुं विषयीकर्तुमिति यावत् । योग्यत्वात् । कथमिति। न कथमप्यनुमानाऽविषयत्वमितिचेदिति पूर्वपक्षव्याख्या। तत्रोत्तरमाह –नेति नानुमानविषयत्वं ब्रह्मण इत्यर्थः । तत्रादौ सामान्यदृष्टयोक्तानुमानमभ्युपेत्य समाधत्ते—उक्ततर्केणेति । यथा कुलालादयः कर्तृत्वावच्छिन्नास्तद्वत् । सामान्यस्य कर्तुरनुमितौ जातायां सत्यामपि तन्निरूपितविषयतावच्छिन्नस्य कस्यचित् कर्तुः सिद्धावपि क्षेत्रज्ञविशेषस्यैव तत्प्रतीतिविषयतापत्तेरित्यन्वयः। तत्र हेतुः—तत्स्वरूपादीनामलौकिकतयेति । प्रत्यक्षादिप्रमाणविषयतानर्हत्वेनेत्यर्थः। तदेवाह–प्रत्यक्षागोचरत्वादिति। लौकिकस्यैव तद्गोचरत्वनियमादित्यर्थः। उपसंहरन् सिद्धान्तमाह—नोक्तलक्षणस्येति । पूर्वानन्तरेणोक्तसूत्रेणोक्तं लक्षणं यस्य तस्य ब्रह्मण इत्यर्थः। नोपलब्धिः, न स्वरूपादिज्ञानमित्यर्थः। अयमभिप्रायः। व्याप्तिज्ञानजन्यं ज्ञानमनुमितिः। तल्लक्षणं च—हेत्वधिकरणनिरूपिताधेयताविशिष्टात्यन्ताभावाऽप्रतियोगिसाध्यसामानाधिकरण्यमित्यादि युष्मच्छास्त्रप्रसिद्धम्। तथाच कार्यत्वकर्तृजन्यत्वयोर्व्याप्त्या सामान्यक्षेत्रज्ञकल्पस्यानुमितिविषयत्वेऽपि तत्करणरूपाणां स्वाभाविकाचिन्त्यानन्तशक्तीनामघटनघटनापटीयसीनां तर्काविषयतया तदधीनस्य च कार्योत्पादनानर्हस्य

क्षत्रज्ञभ्योऽपि न्यूनत्वादसिद्धप्रायत्वमेवेति । अतो नानुमेयत्वं ब्रह्मण इति। नच वेदे तच्छक्तीनां प्रसिद्धत्वात् तत एव ज्ञात्वा तद्वतो जगत्कारणत्वमनुमेयमिति वाच्यम् । शास्त्रसहकृतानुमानस्येष्टत्वाच्चोक्तमेवास्माभिः । तथात्वे चानुमानस्वातन्त्र्यभङ्गस्य तादवस्थ्यान्न स्वातन्त्र्यं क्वचिदप्यनुमानस्येति सिद्धम् । इदं तूक्तप्रयोगाभ्युपगत्या समाहितम् ।

इदानीं तन्निरसितुमुपक्रमते—**किंश्चेति** । एषा तु सद्धेतुकानुमानमात्रस्य गतिरुक्ता । नैतन्न्याय उक्तप्रयोगेऽवतारणीयोऽसद्धेतुकत्वात्तस्येत्याह—**आस्तामिति** । **ब्रह्मस्वरूपस्येत्यादि** । ब्रह्मणः साध्यस्य स्वरूपाद्यनुमेयताप्रसङ्गो महद् दूरं तिष्ठतु । **उक्तानुमानस्यैव दुष्टत्वेन** दूषणमिलितत्वेन **न प्रमाणत्वभावः** स्थितिभावत्वमित्यर्थः । तत्र हेतुमाह—**स्वरूपासिद्धतादोषग्रस्तत्वात्** । अंशतः स्वरूपासिद्धतात्र विवक्षिता । क्षित्यादौ तदभावादिति विवेकः । कथमसिद्धतेत्यपेक्षायामाह—**तथाहीति** । तदेव प्रपञ्च्यत इत्यर्थः । एतद्विवृणोति—**युष्मन्मत इति**। युष्माकं तार्किकाणां मते प्रतिज्ञातेषु भूतेषु क्षित्यादीनां कार्यत्वेऽप्याकाशस्य तत्त्वानङ्गीकारात् । **उक्तस्य हेतोरिति** । कार्यत्वादित्याकारकस्य यत् स्वरूपं कार्यत्वं तस्याकाशांशेऽसिद्धेः । रूपं गुणः श्रावणत्वात्, चक्षुस्तैजसं गन्धवत्त्वाद्, अग्निरनुष्णो गुणत्वादित्यादिवदाकाशस्यापि कार्यत्वाभावादित्यर्थः। नच तस्याप्रतिज्ञातत्वं वाच्यम्। भूतत्वावच्छिन्नस्य प्रतिज्ञातत्वेन तस्याप्यविशेषात् । आकाशस्यापि कार्यत्वाभ्युपगतौ न्यायसिद्धान्तभङ्गप्रसङ्ग इत्याह—**अन्यथेति** । आकाशस्य कार्यत्वे । **अस्मत्पक्षप्रवेश इति** । वेदान्तपक्षप्रवेश इत्यर्थः । स्वसिद्धान्तस्य तिलाञ्जल्युद्देश्यता

कल्प्यतामिति भावः। उपसंहरति—तत्सिद्धमित्यादि । अनुमानावेद्यत्वं स्वतन्त्रानुमानागोचरत्वमिति कृतं पल्लवनेन ॥२॥

ननु मास्तां ब्रह्मज्ञापके प्रत्यक्षानुमाने । उक्तरीत्यानुपपन्नत्वात् । उपमानस्य तु दोषवत्त्वाभावात् तद्विषयत्वं भवेदिति संभावनायामाह—नचैवोपमेयत्वमिति ।

**नचैवोपमेयत्वम् । उपमानकारणीभूतसदृशज्ञानाभावेनोपमानस्यासिद्धत्वात् । नच पूर्वोक्तत्वमस्यादित्याख्यानविरोधः शङ्कनीयः। साधारणधर्मवत्त्वज्ञानस्य नोपमानसिद्धौ कारणत्वं, किन्त्वसाधारणधर्मज्ञानस्यैवेति । तथाभूतस्य च सर्वज्ञत्वसर्वशक्तिमत्त्वादिधर्मवतो ब्रह्मसदृशो द्वितीयपदार्थस्याभावन्नोक्तसिद्धान्तभङ्गशङ्का, नतरां सादृश्यज्ञानलक्षणोपमानसिद्धिर्नतमां तद्विषयतेत्यर्थः । तथाच श्रुतिः— न सदृशे तिष्ठति रूपमस्येति, न तस्य प्रतिमास्तीहेति च ॥**

एवकारोऽवधारणे । चकारो दृष्टान्ते । ब्रह्मण इत्यध्याहारः । यथा प्रत्यक्षानुमानगोचरत्वं नास्ति, तथैवोपमानगोचरत्वं ब्रह्मणो नास्त्येवेति वाक्यार्थः । एतदुक्तं भवति । सादृश्यज्ञानमुपमानम्। तच्च सदृशज्ञानतन्त्रम्। यथा गोसदृशो गवय इति वाक्यं श्रुतवतो नागरिकस्याऽरण्ये गोसदृशव्यक्त्यन्तरदर्शने पूर्वश्रुतवाक्यार्थस्मरणेन गोसादृश्यगवयपदार्थनिश्चय इति। तच्च नैवं ब्रह्म प्रमातुं शक्यम् । ब्रह्मसदृशवस्त्वन्तरासत्त्वेन तत्सा-

दृश्यज्ञानासिद्धिरिति तात्पर्यं बुद्धावनवस्थाप्योक्तार्थे हेतुमाह—उपमानेति । उपमाने सादृश्यज्ञाने कारणीभूतं यत् सदृशज्ञानं तस्याऽभावेन सदृशवस्तुनः सदृशज्ञानविषयस्याभावात् सदृशज्ञानाभावः । तदभावे च सादृश्यज्ञानं कथमित्यर्थः । एतदेवाह—उपमानस्येति ।

ननु परमं साम्यमुपैतीति श्रुतेः, मम साधर्म्यमागता इति भगवदुक्तेश्च, तत्त्वमस्यादिव्याख्याने प्रधानक्षेत्रज्ञयोः साम्यस्य स्वयमपि सिद्धान्तमुखेन निरूपितत्वाच्च कथं तत्सदृशाभाव उच्यते । अपि तु सदृशाभावाङ्गीकारे चोक्तश्रुतिस्मृत्योस्तदनुगतसिद्धान्तस्य च भङ्गप्रसङ्गादितिचेत् तत्राह—नचेति । पूर्वोक्तेन स्वसंप्रदायसिद्धान्तरीत्या प्रतिपादितेन तत्त्वमस्यादिवाक्यव्याख्यानेन विरोधो विपर्ययः शङ्कनीयः । तत्त्वमसीति वाक्यार्थे प्रत्यगात्मनां ब्रह्मणा सार्द्धं तज्ज्ञानादिसाधारणधर्मवत्त्वेन साम्यं प्रतिपादितम् । तथैव च सर्वं खल्विदं ब्रह्मेति वाक्यर्थे जडस्यापि तेन सह सत्यत्वाजडत्वादिसाधारणसाधर्म्यं च । तेन विरुद्धशङ्का मा भूदित्यर्थः । तदेव द्रढयन्नन्वयव्यतिरेकाभ्याम्-साधारणेति । अन्यथा सर्वत्वावच्छिन्नस्यापि सर्वत्वावच्छिन्नं प्रत्यन्योऽन्यमुपमानोपमेयतापत्तेः । सर्वस्यापि कैश्चित् साधारणधर्मैरैक्यस्य तत्रैव प्रतिपादितत्वात्, तत् कथं न शङ्क्यते भवतेति भावः । पदार्थश्च स्पष्ट एव । उक्तसिद्धान्तं कैमुत्यन्यायेन द्रढयन्नुपसंहरति—तथाभूतस्येति । एतत्पदार्थं स्वयमेव प्रपञ्चयति—सर्वज्ञत्वेति । ब्रह्मासाधारणधर्मवतो द्वितीयवस्तुन इत्यर्थः । यदुक्तं, सदृशाभावाङ्गीकारेत्यादि । तत् समाधत्ते—नोक्तेति । तत्त्वमस्यादिवाक्यव्याख्यानभङ्गशङ्केति कुतस्तरामुपमानसिद्धिः । कुतस्तमां तद्विषयतेति । अत्र श्रुतिं प्रमाणयति—न सदृशो

इत्यादि । अस्य ब्रह्मणो रूपं स्वसाम्ये पदार्थे न तिष्ठति । तत्सर्वज्ञत्वाद्यसाधारणगुणाश्रयस्य द्वितीयस्याभावात् । वस्तुमात्रस्य ततोऽवरत्वेन विसदृशत्वाच्च । "न तत्समश्चाऽभ्यधिकश्च दृश्यत" इति श्रुतेः । "न तत्समोऽस्त्यभ्यधिकः कुतोऽन्य" इत्यर्जुनोक्तस्मृतेश्च । एतद् द्रढयितुं वाक्यान्तरं पठति—न तस्य प्रतिमेत्यादि ॥

उक्तसिद्धान्तमनुवादपूर्वकं स्वीकृत्य प्रकारान्तरेणाशङ्कामुत्थापयति—नन्वित्यादि ।

ननु स्यादेतत् । ब्रह्मसदृशपदार्थान्तराभावेनोपमानासिद्धत्वादनुपमेयत्वमिति । तथापि गोविसदृशोऽश्वः, उष्ट्रविसदृशो हस्ती, विषविसदृशममृतमित्यादिवद् विसदृशज्ञानादपि वैसादृश्यज्ञानलक्षणकमुपमानं सुप्रसिद्धम् । तथाच विसदृशानां सत्त्वेन तज्ज्ञानस्यापि सत्त्वात् तद्भिन्नब्रह्मविषयकज्ञानस्यापि सुकरत्वान्न सर्वथोपमानाऽगोचरं ब्रह्मेति चेन्न । वैसादृश्यज्ञानज्ञापकस्य प्रसिद्धोपमेयज्ञानपूर्वकज्ञापयितृत्ववत्त्वात् । वेदेन विना तज्ज्ञापकाभावेन वैसादृश्यज्ञानस्याप्यसिद्धत्वात् तादवस्थ्यं, ब्रह्मणोऽनुपमेयत्वमिति ।

किञ्च । वैसादृश्यज्ञानसत्त्वाऽभ्युपगमेऽपि तेन जडाजडविसदृशं ब्रह्मेत्युपमितौ सत्यामपि

**सामान्यतः किञ्चित् क्षराक्षरचेतनाचेतनपदार्थभिन्नवस्तुसिद्धेऽपि सर्वज्ञत्वसर्वशक्तिमत्त्वेन जगत्कारणत्वसर्वनियन्तृत्वादिधर्माश्रयोक्तलक्षणब्रह्मज्ञानस्य न सर्वथोपमितत्वसिद्धिरित्यलं विस्तरेण ॥**

स्यादेतदिति । संभाव्यमेवैतत् । किं तद्दित्यपेक्षायामेतच्छब्दार्थ मपश्यन्ननुवदति—**ब्रह्मसदृशे**त्यादि । स्वीयतात्पर्यमाह—**तथापी**ति । **विसदृशज्ञानादपि उपमानं सुप्रसिद्धमित्यन्वयः** । तत्र लक्षणगर्भितविशेषणमाह—**वैसादृश्ये**ति । **वैसादृश्यं ज्ञानं** लक्षणं यस्य तत् । तत्रोदाहरणमाह—**गोविसदृशोऽश्व** इत्यादि । स्यादेतदिति चेत् तत्राह—**तथाचे**ति । विसदृशज्ञानादुपमाने सिद्धे सतीत्यर्थः । **विसदृशानां** क्षेत्रज्ञादीनां भावेन, **तज्ज्ञानस्ये**ति विसदृशज्ञानस्यापि । **तद्भिन्ने**ति । विसदृशक्षेत्रज्ञादिभिन्नं ब्रह्म विषयो यस्य तथोपमितिब्रह्मविषयकज्ञानस्य **सामञ्जस्यात्** । **न सर्वथे**ति । पूर्वोक्तसादृश्यज्ञानजन्योपमित्यविषयत्वेऽपि वैसादृश्यज्ञानजन्योपमितिविषयत्वमस्त्येवेत्यर्थः । **इति चेदिति** पूर्वपक्षतात्पर्यार्थः । तन्निराकुर्वन् समाधत्ते—**ने**ति । नोक्तप्रकारेणोपमेयत्वं ब्रह्मण इत्यर्थः । तत्र हेतुमाह—**वैसादृश्ये**ति । अयमर्थः । कीदृशोऽश्व ? इति तदविदुषा पृष्टे सति तज्ज्ञापकस्य प्रमेयभूताऽश्वादिज्ञानवत्त्वाभावे, गोविसदृशो द्विशफस्वल्पपुच्छविशिष्टव्यक्तिमद्भिन्नोऽश्वः । अतिदीर्घग्रीवविशिष्टव्यक्तिमद्भिन्नो हस्ती । विषविसदृशं हननक्रियासाधारणकारणीभूतौषध्यादिभिन्नममृतमित्यादिज्ञापनात्मकवचनप्रयोक्तृत्वानुप-

पत्तेः । हेतुं विवृणोति—वेदेन विनेति । प्रमेयभूतब्रह्म-ज्ञातुरभावात् । तज्ज्ञापकाभावेनेति । ब्रह्मज्ञापकाभावेन । ज्ञातृत्वपूर्वकत्वात् तज्ज्ञापकत्वस्येत्यर्थः । वैसादृश्यज्ञानस्योपमानलक्षणस्याप्यसिद्धत्वात् तदसिद्ध्या चानुपमेयत्वम् । तादवस्थ्यमिति । उपमानसिद्ध्यभावे च कः प्रसङ्ग उपमेयत्वस्येति भावः ।

तदभ्युपगमेऽपि न ब्रह्मज्ञानसिद्धिरित्याह—किञ्चेति । नैतदेव दूषणं, किन्त्वन्यदपि श्रूयतामित्यर्थः । तदेव प्रतिपाद्यते—वैसादृश्येति । अयमभिप्रायः । गोविसदृशोऽश्व इति ज्ञानाद् गोभिन्नपदार्थमात्रस्य सामान्यज्ञाने जातेऽप्यश्वत्वावच्छिन्नव्यक्तिज्ञानस्यासिद्धेरिव ब्रह्मविसदृशचेतनाचेतनवस्तुज्ञानात् तद्विसदृशं ब्रह्मेति ज्ञानोत्पत्तावपि सर्वज्ञत्वादिस्वासाधारणधर्मावच्छिन्नज्ञानाभावेन जगत्कारणत्वज्ञानासिद्धत्वान्नोपमेयं ब्रह्मेति । उपसंहरति—अलमिति ॥ ३ ॥

अर्थापत्तिवेद्यतां निराकरोति—नहीति ।

**न ह्यर्थापत्तिगोचरत्वं ब्रह्मणो वाच्यम् । तस्या अपि तर्कविशेषत्वेनानुमानकल्पयोगक्षेमत्वात् । नच पृथक्कथनवैयर्थ्यमिति वाच्यम् । पृथक्प्रमाणत्वात् ।**

**नचाऽप्यनुपलब्धिप्रमाणप्रमेयता तस्य कल्पनीया । अनुपलब्धेश्च प्रत्यक्षोपजीवित्वात् ।**

**ततश्च परिशिष्टशब्दैकवेद्यमेव ब्रह्मेति सिद्धम् ॥ १ । १ । ३ ॥**

हिशब्दः संशयवारणार्थकः । तत्र हेतुः—तस्या इति । अर्थापत्तेरपि तर्करूपतयाऽनुमानतुल्यत्वात् । तर्ह्यनुमानान्तर्गतत्वेन किमर्थः पृथगुपन्यास इति शङ्कायामाह—नचेति । तत्र हेतुः—पृथक्प्रमाणत्वात् । तदन्तर्भावे षट्प्रमाणाभ्युपगमभङ्गप्रसङ्गादित्यर्थः ॥ ४ ॥

अनुपलब्धिप्रमाणगोचरतासंभावना वार्यते—नचापीति। न कल्पनीया न कल्पयितुं योग्येत्यर्थः । कुत इत्यत आह—अनुपलब्धेरिति । प्रत्यक्षविषयस्यैवानुपलब्धिगोचरत्वनियमात् । यदि स्यादुपलभ्येतेति प्रतीतिविषयस्य, प्रतियोगिप्रत्यक्षज्ञानपूर्वकत्वादभावज्ञानस्येत्यर्थः ॥ ५ ॥

उपसंहरति—ततश्चेति । परिशिष्टेति । उक्तप्रकारैर्हेतुभिः । षट्सु मध्ये पञ्चानां शब्दमात्रनिरपेक्षतया ब्रह्मज्ञापनानर्हत्वेन परिशिष्टो यः शब्दस्तदेकवेद्यं ब्रह्मेति सिद्धम् । वस्तुतस्तु प्रत्यक्षानुमानशब्दभेदात् त्रीण्येव प्रमाणानि । अन्येषां च तत्रैवान्तर्भावस्य वक्तुं शक्यत्वादिति प्रज्ञातव्यमित्ति भावः ॥ १ । १ । ३ ॥

———:o:———

इत्थं तावज्जिज्ञासासूत्रे निर्वचनमुखेन जिज्ञास्यं ब्रह्म प्रतिपाद्य तदेव च लक्षणप्रमाणाभ्यां निर्णीय तस्य चान्यप्रमाणविषयत्वं प्रमाणैरेव निरस्य वेदैकगोचरत्वमुक्तम् ।

इदानीं ब्रह्मणोऽन्यप्रमाणाविषयत्ववद्वेदाविषयत्वशङ्का मा भूदिति निर्धारयितुं सूत्रान्तरमवतारयति—नन्वित्यादिना ।

**ननु "यतो वाचो निवर्तन्ते अप्राप्य मनसा सह । अशब्दमस्पर्शम् । यद्वाचानभ्युदितम् ।**

अवचनेनैव प्रोवाच । यच्छ्रोत्रेण न शृणोति" इत्यादिश्रुतिभिरेव ब्रह्मणो वेदाविषयताया अपि प्रतिपादितत्वात् कथं शब्दैकप्रमाणकं ब्रह्मेति चेत् तत्राह—

## तत्तु समन्वयात् ॥१।१।४॥

तुशब्दः पूर्वपक्षनिरासार्थकः। तद् उक्तलक्षणकं सर्वज्ञं सर्वाचिन्त्यानन्तशक्ति ब्रह्म वेदैकप्रमाणकमेव । कुतः ? । समन्वयात् । औपनिषदवाक्येषु तस्यैव समन्वयात्। सम्यग् वाच्यतयाऽन्वयः समन्वयस्तस्मात् । ब्रह्मप्रतिपादनपरत्वेन समन्वितानि वेदान्तवाक्यानि । "यतो वा इमानि भूतानि जायन्ते । आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते । एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च । सदेव सौम्येदमग्र आसीत् । एकमेवाद्वितीयं ब्रह्म । तदैक्षत बहु स्यां प्रजायेय । नारायणाज्जायते प्राणः । नारायणाद् ब्रह्मा जायते । नारायणाद् रुद्रो जायते । एको नारायण आसीन्न ब्रह्मा, नेशानः । ब्रह्म वा इदमेकमेवाग्र आसीत् । ब्रह्म वा इदमग्र आसीत् ।

तदात्मानमेवावेदहं ब्रह्मास्मीति । तस्मात् तत् सर्वमभवत् । आत्मा वा इदमेक एवाग्र आसी-त् । तस्माद्वा एतस्मादात्मन आकाशः संभूतः । सत्यं ज्ञानमनन्तं ब्रह्म । आनन्दं ब्रह्मणो विद्वान् । विज्ञानमानन्दं ब्रह्म । यः सर्वज्ञः सर्ववित्" इ-त्यादीनि ॥

कथं शब्दैकप्रमाणकं ब्रह्मेति । निषेधपरः कथंशब्दः । न शब्दैकवेद्यं ब्रह्मेत्यर्थः । तत्र हेतुमाह—श्रुतिभिरेव ब्रह्मणो वेदाविषयताया अपि प्रतिपादितत्वादिति । अपिशब्दो दृष्टान्ते । यथाऽन्यप्रमाणागोचरत्वमुक्तं तथैव शब्दागोचरत्वस्यापि प्रमाणसिद्धत्वात् स्वीकार्यमित्यर्थः ।

एतदुक्तं भवति । शब्दवृत्तिस्तावद् द्विधा । मुख्या, जघन्या चेति । तत्र मुख्या नाम शक्तिः । सा चाभिधानामकं पदार्था-न्तरं संकेतग्राह्यं सामान्यमात्रविषयकं चेति मीमांसकाः ।

अस्मात् पदादयमर्थो बोद्धव्य इतीश्वरेच्छासंकेतरूपा सामा-न्यविशिष्टव्यक्तिविषयिकेति तार्किकाः ।

अर्थैः सार्द्धं शब्दानामनादिसंबन्धो योग्यतालक्षण इति शाब्दिकाः ।

अग्नौ स्वाभाविकदहनसामर्थ्यवच्छब्दनिष्ठतदर्थबोधनार्हं-सामर्थ्यं पदार्थान्तरमित्यौपनिषदाः । नचातिरिक्तशक्तौ माना-भाव इति वाच्यम् । उक्तदृष्टान्ते दाहादिलक्षणकार्यानुपपत्तिवत् तत्तदर्थप्रकाशानुपपत्तेरेव प्रमाणत्वात् । किञ्च । शब्दब्रह्मणो-ऽपि ब्रह्मत्वाविशेषेण जगत्कारणस्य परब्रह्मण उक्तश्रुतिस्मृति-

प्रतिपादितशक्तेर्निर्विवादत्ववच्छब्दब्रह्मणोऽपि स्वाभाविकाचिन्त्यानन्तशक्तिमत्त्वे विवादायोग्यत्वात् । उक्तशास्त्रस्यैवात्रापि प्रमाणयितुं शक्यत्वाच्चेत्यलं विस्तरेण ।

सा च त्रिधा । रूढिर्योगो योगरूढिश्च । सर्वत्र जनपदेष्वपि प्रतिपन्नप्रयोगेण घटाद्याकृतिवाचकत्वेन वृत्ती रूढिः । सा च समुदायशक्तिरित्यप्याख्यायते । यथा—गौः, नीलं, शुक्लः, डित्थ इत्यादि । रूढाः शब्दाश्च द्विविधाः । अनेकार्थाः, पर्यायरूपाश्च । तत्रानेकार्था हरिगोसैन्धवादयः । पर्यायरूपाश्च, हस्तकरादयः । अवयवशक्तिर्योगः । यथा—माधवो लक्ष्मीकान्त इत्यादि । उभयविधशक्तिका योगरूढिः । यथा—पङ्कजमित्यादि । रूढ्या पद्मवाचकत्वेऽपि, पङ्काज्जातं पङ्कजमित्यन्यस्यापि वृक्षादेर्वाचकत्वं पद्मवाचकत्वं च । यथा च सोम इत्यादे रूढ्या चन्द्रवाचकत्वम् । उमया सह वर्तत इति सोम इति योगवृत्त्या त्रिनयनवाचकत्वमपीति ।

जघन्यापि द्विविधा । लक्षणा, गौणी चेति । शक्यसंबन्धो लक्षणा । यथा गङ्गायां घोष इत्यत्र गङ्गापदशक्यो गङ्गाप्रवाहस्तत्संबन्धस्तीरेऽस्त्येव । तथाच स्वशक्यप्रवाहसंयोगरूपसंबन्धेन गङ्गापदात् तीरोपस्थितिः । स्वशक्येन सह नियमरूपा व्याप्तिरेव लक्षणेति मीमांसकाः । तदसम्यक् । तथात्वे सति, मञ्चाः क्रोशन्तीत्यत्र मञ्चपदस्य मञ्चस्थपुरुषे लक्षणाभावापत्तेः । मञ्चपुरुषयोर्व्याप्त्यभावात् । एवं, यष्टीः प्रवेशयेत्यादिष्वप्यव्याप्तिर्द्रष्टव्या ।

गङ्गादिपदानां तीरादौ शक्तिरेव । सर्वेषामपि शब्दानां प्रायः सर्वत्रैव शक्तेः । लक्षणा च स्वतन्त्रवृत्तिर्नाभ्युपेयेति वैयाकरणाः । तच्चिन्त्यम् । सर्वेषां पदानां सर्वार्थे शक्त्यङ्गीकारे

सर्वेषु पदेष्वेकतमेनापि सर्वार्थोपस्थितौ तस्यैव सर्वार्थोपस्थापनाय पौनःपुन्येनानुपूर्व्यां रचनयाऽन्यपदयोजनानैरपेक्ष्यापत्तेः। घटपदार्थे पटपदप्रयोगस्यापि साधुताऽभावानापत्तेश्चेत्यन्यत्र प्रपञ्चो द्रष्टव्यः।

सा त्रिधा। जहत्स्वार्था, अजहत्स्वार्था, जहदजहत्स्वार्था चेति। तत्र वाच्यार्थस्य सर्वांशत्यागेनान्यत्र वृत्तिः प्रथमा। यथा—गङ्गायां घोषः, कुसुमितद्रुमा गङ्गेति। शक्यार्थापरित्यागेनैवान्यत्र वर्तमाना द्वितीया। सा च शक्तिसदृशी। यथा—काकेभ्यो दधि रक्ष्यतामित्यत्रोपघातकत्वेन काकपदस्य काकतदितरेषु वृत्तिः। यथा वा—सृष्टीरुपदधातीत्यत्र सृष्टिशब्दस्य मन्त्रोपाधेयेष्टकासु वृत्तिः सृष्टिमन्त्रबाहुल्येनेति। यथा च—शोणो धावतीत्यत्र शोणगुणगमनलक्षणस्य शक्यार्थस्य विरुद्धत्वात् तदपरित्यागेन तदाश्रयाश्वादिषु वृत्तिः।

एके तु, शोणो धावतीत्यत्र तादात्म्यसंबन्धेन मुख्यत्वोपपत्तेः। अत एव, "चतुष्टयी शब्दानां प्रवृत्तिरि"ति महाभाष्यकारोक्तिः। चतुष्टयञ्च जातिगुणक्रियाद्रव्यस्वरूपम्। तत्र, गौरित्यादौ जातिः। शुक्लो नील इत्यादौ गुणः। चलतीत्यादौ क्रिया। डित्थ इत्यादौ द्रव्यस्वरूपमेव। लक्षणाङ्गीकारे च तद्विरोधापत्तिरित्याहुः।

शक्यैकदेशत्यागेन तदेकदेशवृत्तिस्तृतीया। यथा—घटो नित्य इत्यत्र घटस्य नित्यत्वेनान्वयानुपपत्त्यास्तद्गतघटत्वसामान्येन तदेकदेशेनान्वयः। यथा च—सोऽयं देवदत्त इत्यत्रापि तद्देशकालवैशिष्ट्यैतद्देशकालवैशिष्ट्ययोर्युगपदन्वयासम्भवेन तत्पिण्डमात्रे शक्यैकदेशे वृत्तिरित्यन्ये। तदविचारितम्। पूर्वकालादिवैशिष्ट्यस्यान्वयासंभवेऽप्येतत्कालवैशिष्ट्यस्यान्वयेऽनु-

पपत्तेरभावात् तदन्वयस्य दुर्वारणीयतया सत्त्वादिसन्यैर्वैष्णवाचार्यैरेव निरस्तम् । इयमेव भागलक्षणेत्यभिधीयते ।

शक्यवृत्तिलक्ष्यमाणगुणसंबन्धो गौणी । यथा सिंहो माणवकः । अत्र सिंहवृत्तिशौर्यादिगुणलक्षणया तद्वति माणवके वृत्तिः । "लक्ष्यमाणगुणैर्योगाद् वृत्तेरिष्टा तु गौणता" इति वचनात् ।

व्यञ्जनाऽन्या वृत्तिरित्यालङ्कारिकाः । ते तु गौणीं लक्षणायामन्तरीकृत्य, मुख्या, लक्षणा, व्यञ्जनेति वृत्तेस्त्रैविध्यमाचक्षते । व्यञ्जनेनार्थज्ञापिका व्यञ्जना । यथा—गतोऽस्तमर्क इत्युदासीनवाक्यप्रयोगाद्, दूरं मागा इति, पण्यान्यपसार्यन्तामिति, सन्ध्योपास्यतामिति बहूनां बहुविधार्थप्रत्ययो भवति । तत्र न शक्तिर्न वा लक्षणा । किन्तु शब्दस्य चान्वयव्यतिरेकाभ्यामपरा व्यञ्जनाख्या वृत्तिराश्रयणीयेति वदन्ति ।

तत्रेदं बोध्यम् । तेषां तु प्रत्ययानां लक्षणया शक्त्या वा सम्भवाद् वृत्त्यन्तराभ्युपगमे गौरवादिति ।

यत्तु—

यौगिको योगरूढश्च शब्दः स्यादौपचारिकः ।
मुख्यो लाक्षणिको गौणः शब्दः षोढा निगद्यते ॥

इति वैयाकरणैः षड्विधत्वमुक्तम् । तन्मुख्यजघन्ययोरवान्तरभेदमादाय योजनीयम् । तथाहि । मुख्यो, यौगिको, योगरूढ इत्येकं त्रिकं मुख्यायाम् । लाक्षणिक, औपचारिको, गौण इत्यपरं त्रिकं जघन्यायाम् । तत् सिद्धं वृत्तेर्द्वैविध्यमिति शब्दवृत्तिनिर्णयः ।

नैतासां कतमस्या अपि वृत्तेर्ब्रह्मणि प्रवृत्तिसंभवः । तत्र न तावद्रूढिवृत्तेर्ब्रह्मणि प्रवृत्तिः संभवति । तस्या जातिगुणस्वरूपादिभिर्निर्देशयोग्ये पदार्थे प्रवृत्तिसत्त्वात्, तस्मिंश्च तत्प्रवृत्त्यौपयिकजात्यादेरभावात् । तथाहि । न तावद् गौरित्यादिवज्जात्या

ब्रह्म निर्देष्टुं शक्यम् । एकत्वात् । तस्य जातिबाधकत्वात् । 'एको देवः सर्वभूतेषु गूढः । एकमेवाद्वितीयं ब्रह्म' इत्यादिश्रुतेः । नापि, शुक्ल इत्यादिवद् गुणवत्तया । निर्गुणत्वात् । "केवलो निर्गुणश्च" इति श्रुतेः । नापि, डित्थ इत्यादिवद् द्रव्यस्वरूपेण । अव्यक्तत्वात् । नापि, चलतीत्यादिक्रियानिर्देशेन । विभुत्वेन निष्क्रियत्वात् । "निष्कलं निष्क्रियं शान्तम्" इत्यादिश्रुतेः । तस्मान्न रूढेर्ब्रह्मविषयकत्वमिति सिद्धम् । नापि योगस्य तत्र प्रवृत्तिसंभवः । तस्य तत्प्रवृत्तिनिमित्तप्रकृतिप्रत्ययार्थत्वायोगात् । अत एव, न योगरूढेः प्रवृत्तिरपि संगच्छते । न हि ब्रह्मणि लक्षणावृत्तिप्रवृत्तेरवकाशः । शक्येन समं संबन्धाग्रहात् । नच लक्षणयैव लक्ष्यस्वरूपोपस्थितिः । तस्याः स्मारकत्वात् । स्मरणस्य च पूर्वानुभवजन्यत्वनियमात् । नाप्यन्यमताभीष्टव्यञ्जनावृत्तेस्तत्र प्रवेशः संभावनीयः । निःसंबन्धे वस्तुनि तस्याः प्रसरणाभावात् । नापि गौणीप्रवृत्तिः । सर्वसादृश्यशून्यत्वात् । " न सदृशे तिष्ठति रूपमस्य " इति श्रुतेः । तस्मात् कतमस्या अपि वृत्तेस्तत्र प्रवेशाभावेनान्यप्रमाणागोचरताया इव शब्दगोचरत्वस्यापि साम्यान्न श्रुतिवेद्यं ब्रह्मेति । उक्तपक्षे शास्त्रं प्रमापयति—**यतो वाच इत्यादि** । **इति चेदिति** शङ्कासंदर्भार्थः । उक्तपक्ष उत्तरं पठति—**तत्राहेति** । तस्याम् उक्तायां शङ्कायां सिद्धान्तसूत्रेणाह—**तत्तु समन्वयादिति** । तत्र तावत् पदार्थं व्याचष्टे—**तुशब्द इति** । सूत्रानुपूर्व्यां पठितस्तुकार इत्यर्थः । **पूर्वपक्षनिरासार्थक इति** । पूर्वपक्षस्य, न शब्दैकवेद्यं ब्रह्मेत्यस्य निरासो व्यावृत्तिरर्थो यस्य सः । तथाच न वेदवेद्यताऽभाववद् ब्रह्मेत्यर्थः । द्वितीयपदार्थमाह— **तदिति** । उक्तलक्षणकं द्वितीयसूत्रेणोक्तं लक्षणं यस्य तत् । **सर्वज्ञमिति** । सर्वदेशकालवस्तुविषयक-

सामान्यविशेषज्ञानाश्रयम् । सर्वत्वावच्छिन्नदेशाद्यानन्तरतया, सर्वाधिष्ठानतया सर्वसाक्षितया च सर्वसामानाधिकरण्यार्हत्वाद्, यः सर्वज्ञः सर्वविदिति श्रुतेश्च । **सर्वाचिन्त्यानन्तशक्तीति** । सर्वकार्योत्पादनार्हा इयत्तावच्छेदेन चिन्तयितुमशक्याश्चासंख्याकाः शक्तयो यस्य तत् । **ब्रह्मेति** । स्वरूपगुणशक्त्यादिभिर्निरतिशयबृहद्वस्तु । **वेदैकप्रमाणकमेवेति** । **वेद एकं** केवलं निरपेक्षं **प्रमाणं** यस्मिंस्तत् । एकशब्दोऽन्ययोगव्यवच्छेदार्थः । एवकारोऽयोगव्यवच्छेदार्थकः । तथाचान्यप्रमाणाऽगोचरत्वे सति वेदैकवेद्यमित्यर्थः । **कुत** ? इत्याकाङ्क्षायां हेतुमाह; भगवान् बादरायणः—**समन्वयादिति** । सम्यक् पदार्थाभिन्नतयाऽन्वयः समन्वयस्तस्मात् । तदेवाह—**औपनिषद्वाक्येष्विति** । **तस्यैव** ब्रह्मण इत्यर्थः । **सम्यगिति** । सम्यक्त्वं च शब्दस्वार्थापरित्यागेन तदभिन्नतया तात्पर्यभूतम् । तच्च वाच्यमेवेत्याह—**वाच्यतयेति** । तदेवं ब्रह्मणो वाच्यतां निरूप्य वेदस्य तद्वाचकतामाह वाच्यवाचकसंबन्धज्ञापनाय—**ब्रह्मप्रतिपादनपरत्वेनेत्यादिना** । अनेन वेदप्रतिपाद्यं ब्रह्म, तत्प्रतिपादकश्च वेद इति नित्यसंबन्धो दर्शित इति बोध्यम् ।

तथाचाह, श्रीपराशरः प्रचेतसां वाक्येन—

नताः स्म सर्ववचसां प्रतिष्ठा यत्र शाश्वतीति ।

शाश्वती नित्येत्यर्थः । प्रतिष्ठा संबन्धः । तान्येव कानिचिद् वाक्यानि पठ्यन्ते—**यतो वा** इत्यादीनि । अनेकोपनिषत्कत्वाद् वाक्यानां , नार्थतः पुनरुक्तिर्दोषाय कल्पनीया ॥

इत्थं पदार्थं निरूप्य समन्वयप्रकारनिर्द्धारणाय शङ्कोत्थापनमुखेनारभ्यते । तत्र तावत् पूर्वपक्ष्युत्थापितश्रुतिविरोधनिरासाय शङ्क्यते—**नन्विति** ।

ननु पूर्वोक्तश्रुतीनां गत्यभावेन तद्विरोधस्य तादवस्थ्यान्नोक्तसिद्धान्तसिद्धिरिति चेन्न। पूर्वोक्तश्रुतीनां ब्रह्मणः स्वरूपगुणशक्त्यादीयत्तावच्छेदनिषेधात्मिकाया गतेर्विद्यमानत्वाद् विरोधाभावेन सर्वं समञ्जसम्। अन्यथा, "आत्मा वाऽरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः, मनसैवानुद्रष्टव्यः, हृदा हृदिस्थं, मनसा य एतमेवं विदुः, दृश्यते त्वग्र्यया बुद्ध्या, निचाय्य तं मृत्युमुखात् प्रमुच्यते, परात् परं पुरिशयं पुरुषमीक्षते, परिपश्यन्ति धीरा" इत्यादिश्रुतिकदम्बविरोधात्। सर्वप्रमाणागोचरत्वाभ्युपगमे शशशृङ्गादितुल्यताभाक्तया अवस्तुतापत्तेश्च।

नच ब्रह्मणः शब्दप्रतिपाद्यतास्वीकारे तत्प्रकाश्यतापत्त्या घटवन्नश्वरतापत्तेरिति वाच्यम्। वैदिकशब्दगतायाः शक्तेर्ब्रह्मशक्त्यभिन्नतया स्वशक्तिप्रकाश्यत्वान्न स्वप्रकाशताहानेर्नतरां परप्रकाश्यतापत्तेश्चावकाशः।

नचैवं सति प्रत्यक्षादिप्रमाणगतशक्तीनामपि तथात्वात् तद्गोचरतास्वीकारे उक्तनयेन

त्यभाव इति शङ्कनीयः। प्रत्यक्षादिगतशक्तीनां क्षेत्रज्ञबुद्ध्यादिव्यवहितत्वेन भ्रमवत्तासंभवेन उक्त न्यायावतरणस्य तत्रानवसरत्वात् ॥

पूर्वोक्तानां पूर्वपक्षे पठितानां, यतो वाचो निवर्तन्ते अप्राप्य मनसा सहेत्यादीनां गत्यभावेन विषयाभावेन, तद्विरोधस्य तासां श्रुतीनां विरोधस्य तादवस्थ्याद् अपरिहार्यत्वात्। नोक्तसिद्धान्तस्य वेदान्ते वाच्यतया ब्रह्मसमन्वयस्य सिद्धिरिति चेत् । उक्तवाक्यानां तद्वाचकत्वनिषेधवत्त्वेन न तेषु वाच्यतया ब्रह्मणः समन्वय इति शङ्काग्रन्थभावार्थः । तत्रोत्तरमाह—नेति । न ह्युक्तसिद्धान्ते विरोध उद्भावनीय इत्यर्थः । तत्र हेतुः—श्रुतीनां गतेर्विद्यमानत्वादित्यन्वयः । का सा गतिरित्यपेक्षायां तत्स्वरूपमाह—ब्रह्मण इति । इयत्तावच्छेदस्य निषेध आत्मा स्वरूपं यस्यास्तस्या इत्यर्थः। यथा क्षीराब्धेः पयस इयत्ताऽभावे ऽपि तत्पानादेरवर्जनीयत्वात् तत्तीरवासिनां तत्र प्रवृत्तेस्तेन तृप्तेश्च लोकशास्त्रसिद्धत्वात् । तथा ब्रह्मणः स्वरूपगुणादीनामियत्तामलभमानोऽपि तद्दत्तस्वशक्त्यनुसारेण तदन्तरङ्गो वेदः क्षेत्रज्ञानां संसृतिनिवृत्तये यतमानस्तच्छक्त्यैव तत्प्रतिपादने प्रवृत्तस्तज्ज्ञापयतीत्यर्थः। विरोधाभावेन सर्वं समञ्जसमिति । घटितमेव, न काप्यनुपपत्तिरित्यर्थः । व्यतिरेके चानुपपत्तेः सत्त्वादित्याह—अन्यथेति । उक्तसिद्धान्तानङ्गीकरण इत्यर्थः । अनेन श्रुतिकदम्बबाधलक्षणानुपपत्तेरप्यत्रमानत्वादिति सूचितम् । अन्यामप्यनुपपत्तिं दर्शयति—सर्वप्रमाणेति। शशशृङ्गादीत्यादिना खपुष्पादिसंग्रहः। यथा खपुष्पादेः सर्वप्रमाणाविषयत्वेनावस्तुत्वं सर्वेषां संमतं तथा ब्रह्मणोऽपि । तथा-

चात्र प्रयोगः—वेदाप्रमेयं ब्रह्म अवस्तु । सर्वप्रमाणागोचरत्वात् । खपुष्पादिवत् । एवं जिज्ञास्याभावे जिज्ञासायाः शास्त्रभूतायाः शारीरकमीमांसाया आरम्भस्यैव वैयर्थ्यापत्तिरिति भावः ।

ब्रह्मणो वेदप्रतिपाद्यतामसहमानस्य वादिनश्चोदनां निराकरोति—नचेति । ब्रह्मणः शब्दप्रतिपाद्यतास्वीकारे शब्दस्य तत्प्रकाशकताऽवर्जनीया । तथात्वे च तत्प्रकाश्यतापत्त्या ब्रह्मणः शब्दप्रकाश्यताव्याप्त्या स्वप्रकाशत्वहानेर्घटादिवन्नश्वरतापत्तेः । तथाच प्रयोगः—शब्दप्रतिपाद्यं ब्रह्म नश्वरम् । परप्रकाश्यत्वात् । घटादिवदिति शङ्काकोटिः । लौकिकशब्दे उक्तचोदनावकाशेऽपि वेदस्येश्वरात्मकत्वेन न तत्र शङ्का प्रवेष्टुं शक्येति बुद्धौ कृत्वा परिहरति—इति नच वाच्यमिति । इत्थं न शङ्कितव्यमित्यर्थः । तदेव द्रढयति—वैदिकेति । वैदिकशब्दगतशक्तेर्ब्रह्मशक्तित्वात् स्वशक्त्यैव स्वस्य प्रकाश्यता । तथाच परप्रकाश्यत्वाभावान्न स्वप्रकाश्यत्वहानिर्नितरां नश्वरताकल्पनागन्धस्य तत् स्प्रष्टुं क्षमत्वमिति भावः ।

उक्तन्यायस्यान्येषु प्रत्यक्षादिप्रमाणेष्वतिव्याप्तिप्रसक्तिमाशङ्क्य परिहरति—नचैवमिति । इति नच शङ्कनीय इत्यन्वयः । इतिशब्दोक्तं व्याचष्टे—एवं सतीति । शब्दगतशक्तेर्ब्रह्मशक्तित्वाभ्युपगतौ सत्याम् । प्रत्यक्षादीति, तथात्वात् ब्रह्मशक्तेर्विभुत्वेन तदभेदात् । तद्गोचरतेति । ब्रह्मणः प्रत्यक्षादिगोचरतापि । उक्तनयेनेति । परप्रकाश्यताभावेन स्वप्रकाश्यत्वाऽहानिलक्षणेन न्यायेन, नश्वरतापरिच्छिन्नताऽभाव इति । कुत इत्यपेक्षायां हेतुमाह—प्रत्यक्षादिगतशक्तीनामिति । आदिशब्दात् प्रत्यक्षादिवल्लौकिकशब्दस्यापि संग्रहः । ब्रह्मशक्तेर्विभुत्वे प्रत्यक्षादिगतशक्तिषु व्याप्त्यङ्गीका-

रेऽपि तासां क्षेत्रज्ञबुद्ध्यादिभिर्व्यवहिततत्वेन तच्छक्त्या च साक्षात् तदभेदस्याघटितत्वात् । **भ्रमवत्तासम्भवेन** तेषां प्रत्यक्षादिप्रमाणानामिति शेषः । तेषां क्षेत्रज्ञबुद्ध्यादीनामिति वा । **भ्रमवत्ते**ति करणापाटवविप्रलिप्सादीनामुपलक्षणम् । तथाच क्षेत्रज्ञादीनां बुद्धिमान्द्यदुराग्रहविप्रलिप्सेन्द्रियापाटवत्वादीनामवर्जनीयत्वेन, तद्व्यवहितप्रत्यक्षादिशक्तीनां साक्षात् तत्ताभावस्य सूक्तत्वं युक्तमेवेति भावः ।

श्रुत्यर्थस्तु, **अरे** इति सम्बोधने । **आत्मा** जिज्ञास्यं सर्वज्ञं सर्वशक्ति ब्रह्म, **द्रष्टव्यो** द्रष्टुं योग्य इति । अनेन दर्शनमुद्दिश्य तदसाधारणसाधनतया ध्यानं विधीयते—**निदिध्यासितव्य** इत्यत्र विध्यर्थकस्तव्यप्रत्ययः । श्रवणमनने तु ध्यानस्य साधनभूते । एतच्च विधिनिरूपणप्रकरणे निपुणमुक्तम् । **मनसैवे**त्यनेन, अप्राप्य मनसा सहेति श्रुत्या प्रतीतं मनोगोचरत्वं वार्यते । नचोभयवाक्ययोस्तुल्ययोगक्षेमत्वेनैकतरस्यापि निवृत्तेरसंभव इति तर्कनीयम् । मनसैवेत्यस्य सावधारणत्वाद् बलीयस्त्वम् । तत् स्पष्टार्थं द्वितीयवाक्यं पठति—**मनसैवे**ति । शिष्टानि वाक्यानि स्पष्टार्थकानि ॥

**पूर्वोक्तश्रुतीनां** गतेर्विद्यमानत्वादित्युक्त्या पूर्वपक्षो निरस्तः । तत्र, का सा गतिरित्याकाङ्क्षायां तज्ज्ञापनाय प्रतिजानीते—**पूर्वपक्षे पठितानामि**त्यादिना ।

**पूर्वपक्षे पठितानां तु वाक्यानामयमर्थः ।**
**अगाधतोयेऽब्धौ तदवगाहनार्थं प्रवृत्ता मनुजा यथाशक्ति तमवगाह्य तद्गाधताममप्राप्य पुनरावृत्ता इव मनसा सहिता वाचस्तत्प्रतिपादने प्रवृत्ता**

अपि अप्राप्य तत्स्वरूपगुणादीनामियत्तामलब्ध्वा स्थगिताः सत्यो, यत इति पूर्वं लक्षणप्रमाणाभ्यां प्रतिपादिताज्जगत्कारणाद् ब्रह्मणो निवर्तन्त इत्यर्थः। अशब्दमिति, शब्देन परिच्छेत्तुमनर्हम्। यद्वाचेति। अनभ्युदितप्रायम्। कात्स्न्र्येनागोचरत्वात्। अवचनेनेति। इयत्तावच्छिन्नवचनाभावेनैवेति। अन्यथा, प्रोवाचेति क्रियापदस्यानर्थक्यप्रसङ्गात्। यच्छ्रोत्रेणेति। यद् ब्रह्म श्रोत्रेण श्रवणेन्द्रियेण परिच्छिन्नतया श्रोतुं नार्हते। स्वरूपादिभिरपरिच्छिन्नत्वादिति भावः। यद्वा, केवलस्य स्वरूपमात्रस्य शक्त्यादि ऋते वागाद्यगोचरत्वेऽपि तद्वत्तया श्रुतिभिः प्रतिपाद्यमानत्वान्न किञ्चिद् दुरर्थकतेति श्रुतीनां निर्गलितोऽर्थः।

अथवा, यतो वाच इत्यादौ वाक्शब्दस्य लौकिकशब्दपरत्वान्न श्रुतिप्रतिपाद्यताया असामञ्जस्यमित्यर्थः। मनसा सहेति पाठ एव लौकिकतां स्पष्टं बोधयति। वेदस्य तत्साहचर्यनियमाभावात्। प्रत्युत ब्रह्मनिःश्वसितत्वेनालौकिकत्वप्रतिपादनाच्च॥

**वाक्यानां**, यतो वाचो निवर्तन्त इत्यादीनाम् । प्रतिज्ञातेषु मध्ये प्रथमं व्याचष्टे—अगाधतोयेऽब्धावित्यादिना । **मनसा सहिता वाचस्तत्प्रतिपादने प्रवृत्ता अपि यतो निवर्तन्त** इत्यन्वयः । निवर्तने कारणमाह—**अप्राप्येति** । एतद्विवृणोति—**तत्स्वरूपगुणादीनामिति** । तथाच श्रुतिः,—न ते विष्णोर्जायमानो न जातो देवस्य महिम्नः परमं तमाप । विष्णोर्नु कं वीर्याणि प्रवोचं यः पार्थिवानि विममे रजांसीत्यादि । उक्तमर्थं दृष्टान्तमुखेन निगमयति—**अगाधतोय** इत्यादि । **अगाधं** तलस्पर्शनयोग्यताऽभाववत् **तोयं** जलं यस्य तस्मिन् । यथा अगाधजले समुद्रे तद्गाधतोपलब्धये प्रविष्टा जना **यथाशक्ति** यावद्बलम् **अवगाह्य तद्गाधतां** तलस्पर्शम् **अप्राप्य** अकृतार्था इव पुनरावर्तन्ते तद्वत् । इवेति शब्दः सर्वथाऽकृतार्थत्वनिषेधपरः । स्नानपानादिदृष्टादृष्टफलैः कृतार्था अपि तत्तलस्पर्शमात्रे अकृतार्थाः । न तावता बलहानिः । अगाधत्वात् । तथा वेदा अपि तत्स्वरूपगुणादिप्रतिपादने प्रवृत्ता यथाधिकारं सर्वाधिकारिभ्यः पुरुषार्थचतुष्टयप्रापकत्वलक्षणभगवद्दत्तकैङ्कर्यपालनेन कृतार्था अपि तदियत्ताद्योतनामात्रे अकृतार्था इत्यर्थः । तथाभूताऽकृतार्थत्वस्य तु तेषां भूषणवत्त्वमेव । भगवदैश्वर्यानन्त्यद्योतकत्वात् । एतेन वेदेषु ब्रह्मस्वरूपादेरियत्ताया अज्ञता दूरे निरस्ता । यदि तदियत्तासत्त्वे वेदो न जानीयात् तर्हि उक्तशङ्काप्रवेशो घटेत । न तु तदस्ति । अदृष्टश्रुतत्वात् । न हि खपुष्पादीनां गन्धाज्ञाने, शशविषाणादिताडनक्षतादर्शने च ज्ञानहानिः । अन्यथा सोऽङ्ग वेद यदि वा न वेदेत्यनेन वाक्येन ब्रह्मणोऽपि सर्वज्ञताया हान्यापत्तेरिति भावः । **यत** इत्यस्य व्याख्यानमाह—**पूर्वं लक्षणप्रमाणाभ्यां प्रतिपादितादिति** ।

लक्षणप्रमाणसंज्ञकाभ्यां सूत्राभ्यामित्यर्थः । **अशब्दमिति** । द्वितीयं वाक्यं व्याख्यायते—**शब्देनेति** । परिच्छेदविषयीकर्तुमयोग्यमित्यर्थः । यद्वाचेत्यादिवाक्यान्तरार्थमाह—**अनभ्युदितप्रायमिति** । उदितममप्यनुदितकल्पमिति प्रायशब्देन सूच्यते । तत्र हेतुमाह—**कार्त्स्न्येनेति** । तथाचोक्तं भगवद्भिराद्याचार्यचरणैः । "अचिन्त्यशक्तेरविचिन्त्याशयाद्" इति । **अवचनेनेति** वाक्यान्तरव्याख्यानमाह—**इयत्तावच्छिन्नेति** । अपरिच्छिन्नत्वेनाहेत्यर्थः । "य उदूर्ध्वं गार्गि दिवो यदर्वाक् पृथिव्या यदन्तरा द्यावापृथिवी इमे यद्भूतं च भवच्च भविष्यच्च कोऽद्धा वेद यत आबभूव, योऽस्याध्यक्षः परमे व्योमन् सोऽङ्ग वेद यदि वा न वेद । न तस्य कश्चित् पतिरस्ति लोके न चेदिता नैव च तस्य लिङ्गमित्यादिप्रकारकैर्वाक्यैरिति भावः । अत्रानुपपत्तिलक्षणं प्रमाणमाह—**अन्यथेति** । वेदानां तत्प्रवचनात्मकक्रियानुकूलव्यापाराश्रयताभावापत्तेरित्यर्थः । यच्छ्रोत्रेणेतिवाक्यार्थमाह—**यद् ब्रह्मेति** । अनेनेव यच्छब्दार्थ उक्तः । **श्रवणेन्द्रियेण परिच्छिन्नतयेति** । घटादिपदार्थवत् तत्तद्घटानुपूर्वीमात्रशब्दपरिच्छिन्नतया श्रोत्रेण ग्रहीतुमशक्य इति यावत् । यथा कम्बुग्रीवादिव्यक्तिमान् पदार्थो घटकलशादिमात्रशब्दपरिच्छेदेन श्रोत्रग्राह्यो, न तथा ब्रह्म । सर्वपदार्थवत्त्वेऽपि सर्वविलक्षणत्वादिति भावः । एतस्मिन्नर्थे हेतुमाह—**स्वरूपादिभिरिति** । किञ्च । "स वेत्ति वेद्यं, न च तस्यास्ति वेत्ता, न वेदिता" इत्यस्य वाक्यस्य मुख्यार्थस्वीकारे "तमेव विदित्वा अतिमृत्युमेति, नान्यः पन्था विद्यतेऽयनाय । ऋते ज्ञानान्न मुक्तिः । यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवाः । तदा देवमविज्ञाय दुःखस्यान्तं निगच्छति" इत्यादिश्रुतीनामन्वयव्यतिरेकावधारणरूपप्रमाणस-

हक्कृतानां बाधप्रसङ्गभयादन्या गतिः सर्वसंमता इत्र उक्तानामपि श्रुतीनां गतेः सुकरत्वादिति निष्कर्षः ।

प्रकारान्तरेण व्याचष्टे—**यद्वेति** । **केवलस्येति** । अहंत्वेदंत्वावच्छिन्नसर्ववस्तुविलक्षणस्य । यद्यपि तच्छक्त्यादीनां स्वाभाविकत्वेन तदसन्तवैलक्षण्यस्याघटितत्वान्न तादृशकेवलत्वसिद्धिस्तथापि शक्त्यादिभ्यो ब्रह्मणः स्वरूपविवेचनमात्रविवक्षया तथोक्तमित्याह—**स्वरूपमात्रस्येति** । नैतावता शक्त्यादिशून्यता संभावनीया । तद्वत्त्वेऽपि तद्विवेकस्य स्वाभाविकत्वात् । नाप्यसन्ताभिन्नत्वं शङ्कनीयम् ब्रह्मण एव तदात्मकतापत्त्या तद्भिन्नस्वरूपाभावप्रसङ्गात् । शक्तिरेव ब्रह्मेति प्रत्यापत्त्या केवलत्वस्यैव नाशप्रसक्तिरित्यर्थः । तदेव द्रढयन्नाह—**शक्त्यादि ऋते वागाद्यगोचरत्वेऽपीति** । शक्त्यादि विना तदवस्थानाऽभावेन सर्वप्रमाणागोचरत्वे सत्यपि । **तद्वत्तयेति** । सर्वशक्त्यादिमत्त्वेन यथावस्थितस्य कारणकार्यावस्थाभ्यामुक्तप्रकारकैकत्वानेकत्वाभ्यां **श्रुतिभिः प्रतिपद्यमानत्वादिति** । तत्र कारणावस्थायामुपसंहृतशक्तित्वादेकत्वेन, "सदेव सौम्येदमग्र आसीदकमेवाद्वितीयं, तदक्षत बहु स्यां प्रजायेय, एको ह वै नारायण आसीन्न ब्रह्मा नेशान" इत्यादिप्रकारेण । कार्याववस्थायां च विक्षिप्तशक्तित्वादनेकत्वेन, "तस्माद्वा एतस्मादात्मन आकाशः संभूतः, सर्वं प्रोक्तं त्रिविधं ब्रह्ममेतत् । भोक्ता भोग्यं प्रेरितारं च मत्वा, पृथगात्मानं प्रेरितारं च मत्वा" इत्यादिना । "एकत्वेन पृथक्त्वेन बहुधा" इति श्रीभगवदुक्तेश्च ।

एकत्वे सति नानात्वं नानात्वे सति चैकता ।
अचिन्त्यं ब्रह्मणो रूप कस्तद् वेदितुमर्हति ॥—

**इत्यादिवचनाच्च** । निखिलस्य वस्तुनो ब्रह्मात्मकत्वेऽपि त्रिरूपताया अपि श्रुतिसूत्रसिद्धत्वादिति भगवद्भिराद्याचार्यैरप्युक्तेश्च । ख्यातिनिर्णये व्याख्यातं चैतच्छ्रीनिवासाचार्यचरणैः । "अवस्थाभेदेनैकत्वानेकत्वयोर्विरोधाभावात् सर्वं घटितमेव" इत्यादिना । एतदपि सिद्धान्तक्षीरार्णवे श्रीपुरुषोत्तमाचार्यचरणैराक्षेपसिद्धान्ताभ्यां निष्कर्षितम् । विस्तरभयादुपरम्यते । एतदेव विवक्षयाह—**न किञ्चिद् दुरर्थकतेति** । उक्तरीत्या सर्वं सामञ्जस्यमित्यर्थः । उपसंहरति—**इति श्रुतीनां निर्गलितोऽर्थ इति** । ब्रह्मणि तत्प्रतिपादकतया श्रुतीनां समन्वितत्वप्रकारस्य सिद्धान्तः ।

अन्यया चापि परिपाट्या व्याचष्टुमाह—**अथवेति** । **यतो वाच इत्यादाविति** । आदिपदेन, अशब्दमित्यादीनां व्याख्यातानां सर्ववाक्यानां संग्रहः । **वाक्शब्दस्येति** पूर्वपक्ष्युचरितवाक्येषु पौनःपुन्येन पठितस्य । **लौकिकेति** । वैदिकविलक्षणशब्दपरत्वात् । **न श्रुतिप्रतिपाद्यताया इति** । निषिद्धविलक्षणश्रौतशब्दवाच्यतायाः सुकरत्वमेवेत्यर्थः । तस्य लौकिकपरत्वे प्रमाणमाह—**मनसा सहेति पाठ एवेति** । अवधारणेन स्वार्थत्यागपरार्थकल्पनाशङ्का वार्यते । **स्पष्टमित्यनेन** संकल्पपूर्वकत्वाल्लौकिकशब्दस्येति तद्व्याप्तेरन्वयाव्यभिचारः सूच्यते। यत्र लौकिकवाग्विसर्गत्वं, तत्र मनःपूर्वकत्वमिति साहचर्यनियमस्य श्रुतिमूलकत्वात् । तथाच श्रुतिः—मनसा वा अग्रे संकल्पयत्यथ वाचा व्याहरति, यद्वै मनसा ध्यायति तद् वाचा वदतीत्यादिः । श्रौतशब्दे चोक्तन्यायस्य व्यतिरेकं प्रमाणयति—**वेदस्य तत्साहचर्यनियमाभावादिति** । लौकिकशब्दवच्छ्रौतशब्दे मनोव्याप्तेरभावादित्यर्थः । उक्तार्थे श्रुतिगर्भितहेतु-

माह—प्रत्युत तस्येति । अलौकिकत्वप्रतिपादनादित्यस्य पूर्वं शास्त्रमुखेनेति शेषो योजनीयः । शास्त्रमुखेनाऽलौकिकत्वप्रतिपादनादित्यर्थः । तथाच श्रुतिः—अस्य महतो भूतस्य निःश्वसितमेवैतद् यद् ऋग्वेदो यजुर्वेदः सामवेद इति ।

नन्वीश्वरमनःसाहचर्यस्य तत्रापि सत्त्वान्न व्यतिरेक इति चेन्न। ब्रह्मणि मनआदिकल्पनाया अप्रमाणकत्वात्। "अप्राणो ह्यमना" इति श्रुतेः । एतेन " नमो वेदान्तवेद्याय, योऽसौ वेदे तिष्ठति, योऽसौ सर्वैर्वेदैर्गीयते, सर्वे वेदा यत् पदमामनन्ति, तं त्वौपनिषदं पुरुषं पृच्छामि, नावेदविन्मनुते तं बृहन्तम्" इत्याद्यन्वयव्यतिरेकगर्भितवाक्यकदम्बस्यानुपपत्तेरप्यत्र प्रामाण्यमुपलक्षितं बोध्यम् । इत्थं ब्रह्मणो वेदवाच्यताप्रतिपादनेन ब्रह्मणि त्रिविधमुख्यवृत्तिप्रवृत्त्यभावपक्षो निरस्तः । अयमभिप्रायः । यदुक्तं ब्रह्मणि जातिगुणादीनां रूढिवृत्तिप्रवृत्त्यौपयिकानामसंभवात् तत्प्रवृत्त्यभाव इति । तत्तुच्छम्। तद्धर्मगुणादीनां श्रुतिस्मृतिसिद्धत्वात् । तथाहि यदुक्तं—"न तावद् गवादिवज्जात्या निर्देष्टुं शक्यम्, एकत्वादि"ति । तन्न समीचीनम् । एकत्वस्य जातित्वाभावेऽपि तदादीनां देवत्वबृहत्त्वादिधर्माणां बाधकाभावेनाकाशत्वादिवत् प्रतिपादयितुं शक्यत्वात् । एको देव इत्यादीनां त्वत्पठितश्रुतीनामेवात्र प्रमाणत्वात् । ' नापि शुक्ल इत्यादिवद् गुणवत्तया, निर्गुणत्वाद् ' इत्युक्तिरपि तथैव बोध्या । तद्वर्णस्यापि शास्त्रेण मोक्षासाधारणतया अत्यादरमुखेन प्रतिपादितत्वात् । तथाच श्रुतिः—

यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम् ।
तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति ।
आदित्यवर्णं तमसः परस्तात् ।

आमणखात् सुवर्णः ।

सत्पुण्डरीकनयनं मेघाभं वैद्युताऽम्बरमित्यादि ।

स्मर्यते च मनुना औषधवद्वाक्येन—

प्रशासितारं सर्वेषामणीयांसमणीयसाम् ।

रुक्माभं स्वप्नधीगम्यं विद्यात् तं पुरुषं परम्—इति ।

नच निर्गुणश्रुतिविरोध इति वाच्यम् । मायिकगुणादिपरत्वस्य पौनःपुन्येनोक्तत्वात् । नापि 'स्वरूपेण, अव्यक्तत्वाद्' इत्युक्तिर्युक्ता । सत्यं ज्ञानमनन्तं ब्रह्म, विज्ञानमानन्दं ब्रह्मेत्यादिश्रुतीनां स्वरूपप्रतिपादनपरत्वस्य सर्वसंमतत्वात् । 'नापि क्रियानिर्देशेन, निष्क्रियत्वाद्' इत्यपि न रोचकम् । विभुत्वेऽपि अचिन्त्यशक्तित्वेनाविरोधात् । "अनेजदेकं मनसो जवीय" इत्यादिश्रुतेः । निष्क्रियत्वश्रुतेः प्रयोज्यतानिषेधपरत्वान्न दोषः । "नामानि सर्वाणि यमाविशन्ती"ति श्रुतिः स्पष्टं रूढिवृत्तिमत्यादरेण स्वीकरोति । तस्मान्न रूढिप्रवृत्त्यभाव इति सिद्धम् । 'नापि योगस्य तत्र प्रवृत्तिसंभवः । तत्प्रवृत्तिनिमित्तप्रकृतिप्रत्ययार्थत्वायोगाद्' इत्युक्तमपि तुच्छतरम् । ब्रह्मणो, बृहि बृंहि वृद्धाविति धात्वर्थतायाः श्रुतिस्मृतिभिः साधितत्वात् । तथाच श्रुतिः—बृहति बृंहयतीति ब्रह्मेत्यादि ।

हरिवंशे शिवः—

बृहत्त्वाद् बृंहणत्वाच्च तस्माद् ब्रह्मेति शब्दित इति ।

वैष्णवेऽपि श्रीध्रुववाक्यम्—

बृहत्त्वाद् बृंहणत्वाच्च यद्रूपं ब्रह्मसंज्ञितमिति ।

उक्तेभ्यो हेतुभ्यो योगरूढिप्रवृत्तेरपि सौकर्यं ज्ञातव्यम् । इत्थं शक्त्यसंभवो निरस्तः ॥

इदानीमुभयप्रकारकजघन्यवृत्त्यसंभवं निराकुर्वंस्तत्रादौ गौ-

इत्यप्रवृत्तिपक्षो निवार्यते आक्षेपसमाधानाभ्याम्—नन्वित्यादिना।

ननु गुणशक्त्याद्यभ्युपगमे केवलनिर्गुणश्रुतिविरोधापत्तिर्दुर्वारेति चेन्न। तासां मायिकगुणादिनिषेधपरत्वात्। ब्रह्मणः शक्तिगुणक्रियादीनां स्वाभाविकतायाः श्रुतिसूत्रसाधितत्वाच्च। एवं शक्त्यादीनां स्वाभाविकत्वे सिद्धे तत्संबन्धस्यापि तत्तायां विवादस्य निरवकाशत्वात्। एवंभूतस्य शास्त्रसमन्वितस्य ब्रह्मणः, सोऽन्वेष्टव्यः स विजिज्ञासितव्यो निदिध्यासितव्य' इत्यादिश्रुतिप्रमितेन ध्यानेन, 'यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनुं स्वाम्' इत्यादिवाक्योक्ततदनुग्रहसहकृतेन,।

भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः।
क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे—इत्यादिमन्त्रप्रतिपादितात् तत्साक्षात्कारात् कार्यकारणप्रकृतिसंबन्धात्मकप्रतिबन्धनिवृत्तौ सत्याम्,

निरस्तातिशयाह्लादसुखभावैकलक्षणा।
भेषजं भगवत्प्राप्तिरेकान्तात्यन्तिकी मता—

इति सर्वज्ञपराशरोक्तश्रीभगवत्प्राप्तिलक्षणो मोक्षः ॥

अत्र प्राप्तिर्नाम

"द्व्यक्षरं तु भवेन्मृत्युस्त्र्यक्षरं ब्रह्म शाश्वतम्।
ममेति च भवेन्मृत्युर्न ममेति च शाश्वतम् ॥

निर्ममो निरहंकार" इति शास्त्रोक्तेन इदंकाराहंकारास्पदयोः क्षेत्रक्षेत्रज्ञयोः स्वत्वममत्वभावनाशेन, "ममैवांशो जीवलोके। अंशो नानाव्यपदेशादि"ति शास्त्रोक्तस्वाभाविकतदीयतासंबन्धसाक्षात्कारपूर्वकं सुरसरित्प्रवाहवच्छ्रीभगवदनवच्छिन्नानुभूत्या स्थितिरिति। एषैव साम्यसायुज्यब्रह्मादिशब्दैः श्रुतिस्मृतिभिर्गीयते।

यदा पश्यः पश्यते रुक्मवर्णं
कर्तारमीशं पुरुषं ब्रह्मयोनिम्।
तदा विद्वान् पुण्यपापे विधूय
निरञ्जनः परमं साम्यमुपैति ॥

जुष्टं, तरति शोकमात्मवित्। ब्रह्मविद् ब्रह्मैव भवतीत्यादिश्रुतेः। मम साधर्म्यमागता इति भगवदुक्तेश्च। ब्रह्मैव भवतीति बृहज्ज्ञानादिधर्मेण बृहत्त्वस्य तत्रापि भावान्न स्वरूपेणेत्यर्थः॥

गुणेत्यादेः पूर्वं ब्रह्मण इति शेषो योक्तव्यः। तथाच ब्रह्मणो गुणशक्त्याद्यभ्युपगमे आदिपदेन ज्ञानबलक्रियादीनां संग्रहः। तत्रोत्तरं—नेति। नोक्तश्रुतिविरोध इत्यर्थः। तत्र हेतुमाह—तासामित्यादि। केवलो निर्गुणश्चेत्यादीनाम्। तत्रैव हेत्वन्तरमाह—ब्रह्मण इत्यादि। श्रुतिसूत्रसाधितत्वादिति। "परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च" इत्यादिश्रुतेः। "विवक्षितगुणोपपत्तेश्च" इत्यादिसूत्राच्च। तथाच गुणादिमत्त्वे सिद्धे सादृश्यस्यापि तत्सामान्यगुणैः सत्त्वचैतन्यादिभिर्वक्तुं शक्यत्वात्, परमं साम्यमुपैतीति श्रुतेर्मम साधर्म्यमागता इति भगवदुक्तेश्च।

किञ्च, 'न हि लक्षणायाः प्रवृत्तेरवकाशः, शक्येन समं संबन्धाग्रहाद्' इति यदुक्तं तदपि न रमणीयमित्याह—एवं शक्त्यादीनामिति। सिद्धे, शास्त्रप्रतिपादितत्वेनेति शेषः। तत्संबन्धस्येति। शक्तिशक्तिमतो, गुणगुणिनः क्रियातद्वत इत्यादेरित्यर्थः। तस्यायां स्वाभाविकतायाम्। तथैव वाच्यवाचकशब्दपदार्थसंबन्धस्यापि स्वाभाविकत्वं शास्त्रप्रसिद्धमेव। "नमामः सर्ववचसां प्रतिष्ठा यत्र शाश्वती" इत्यादिना पराशरादिभिः सर्वज्ञैस्तत्प्रतिपादिताया उक्तत्वात्। 'न च लक्षणयैव लक्ष्यस्वरूपोपस्थितिः। तस्याः स्मारकत्वाद्' इति यदुक्तं, तन्न विरुद्धम्। लक्षणायाः स्मारकत्वमात्रमेवास्तु। अस्माकमपीष्टत्वात्। नच तथात्वे लक्ष्यस्वरूपोपस्थित्यभावस्तदवस्थ इति वाच्यम्। शक्त्या तदनुभाविकत्वस्याभ्युपगमात्। तथाहि। गङ्गायां घोष इत्यत्र तीरात्मकपदार्थस्य तीरपदानुभावितस्यैव गङ्गापदेन स्मारकत्वम्। न सर्वत्र लक्षणाप्रवेशो युक्तः। अनवस्थाप्रसङ्गात्। व्यञ्जनादेर्लक्षणायामन्तर्भावस्य पूर्वमेवोक्तत्वाच्च। एवं हि सर्वज्ञाचिन्त्यानन्तश-

क्तिब्रह्माभ्युपगच्छतां वैदिकानुयायिनामस्माकं किं वा दुर्घटमिति भावः। उक्तलक्षणस्य ब्रह्मणो निष्ठायाः फलं चतुर्थाध्याये वक्ष्यमाणमपि प्रसङ्गादत्र चिन्त्यते—एवंभूतस्येत्यादिना। **एवंभूतस्य ब्रह्मणः साक्षात्कारात् कार्यकारणप्रकृतिसंबन्धात्मकप्रतिबन्धकनिवृत्तौ सत्यां मोक्ष इत्यन्वयः।** कीदृशस्येत्यपेक्षायां शास्त्रयोनित्वादित्याद्युक्तप्रमाणगर्भितविशेषणमाह—**शास्त्रसमन्वितस्येति।** **शास्त्रं** वाचकतया **समन्वितं** येन तस्य। **शास्त्रे** वाच्यतया **समन्वितं** यत् तस्येति वा।

तथा स्वर्गपर्वणि वैशंपायनः—

वेदे रामायणे पुण्ये पुराणे भारते तथा।

आदावन्ते च मध्ये च हरिः सर्वत्र गीयते—इति।

साक्षात्कारादेव मोक्ष इत्यत्र किं मानमिति चेत् तत्राह—**मन्त्रप्रतिपादितादिति।** मन्त्र एवात्र मानमित्यर्थः। तमेव मन्त्रं पठति—**भिद्यते हृदयग्रन्थिरि**त्यादि। अस्यार्थः। तस्मिन् ब्रह्मणि दर्शनगोचरे सति हृदयग्रन्थिः स्थूलसूक्ष्मरूपप्रकृतिसंबन्धो भिद्यते ध्वंसं प्राप्नोति। तत्कार्यभूताः सर्वे संशयाः स्वपरेतरतत्त्वविषयकाश्छिद्यन्ते। अस्य ब्रह्मसाक्षात्कारवतः कर्माणि क्षीयन्ते। कर्मभिर्मुच्यत इति यावत्। तस्मिन्नितितच्छब्दार्थं विवृण्वँस्तत्स्वरूपमाह—**परावरे** इति। परे चिदचिद्वर्गा अवरे यस्मात् तस्मिन् पुरुषोत्तम इति यावत्।

प्रधानक्षेत्रज्ञपतिर्गुणेश इति श्रुतेः।

यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः।

अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः।—

इति भगवदुक्तेश्च। ननु तस्मिन् दृष्टे इति यदुक्तं, तत्र,

तस्यासम्भवत्वाद् दृष्टिगोचरताया इति चेन्न । तद्गुणरूपादि-मत्तया द्रष्टुमर्हतीत इत्युक्तमेव । "सदा पश्यन्ति सूरय" इत्यादिश्रुतेः । "भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन । ज्ञातुं द्रष्टुं च तत्त्वेनेति" स्वयं भगवतैवोक्तत्वाच्च । दर्शने कोऽन्तरङ्ग इत्यत आह—ध्यानेनेति । तत्र प्रमाणमाह—श्रुतिप्रमितेनेति । तदेव प्रमाणं पठ्यते—सोन्वेष्टव्यः, निदिध्यासितव्य इत्यादि । स्पष्टोऽर्थः। तत्र व्यभिचारशङ्कावारणाय सहकारिणमाह—वाक्यो-क्ततदनुग्रहसहकृतेनेति । श्रुतिप्रतिपादितेन तस्य भगवतोऽनुग्रहसहकृतेनेत्यर्थः । वाक्योक्तेतिविशेषणेन पूर्ववत् प्रमाण-शङ्का निरस्ता । वाक्यं दर्शयति—यमेवैष इत्यादि । एष सर्वज्ञः सर्वेश्वरो यं कञ्चिदपि क्षेत्रज्ञं वृणुते तेनैव लभ्यो, नान्यै-रित्यन्वयः । 'पुरुषः स परः पार्थ भक्त्या लभ्यस्त्वनन्यया' इतिवचनात् । तत्र, यमिति शब्दः श्रीभगवत्प्रसादविषयवाचकः। प्रसादविषयश्च निरतिशयप्रीतिविषय एवेति लोकप्रसिद्धः । स चानन्यभक्त एव । एतच्च स्वयमेवाह श्रीभगवानभ्यासेन—

सर्वारम्भपरित्यागी यो मद्भक्तः स मे प्रियः ।
मय्यर्पितमनोबुद्धिर्यो मद्भक्तः स मे प्रियः ।
शुभाशुभपरित्यागी भक्तिमान् यः स मे प्रियः—
इत्यादिना ।

नारायणीये नरनारायणौ नारदं प्रति—

नारदैतद्धि नौ सत्यं वचनं समुदाहृतम् ।
नास्य भक्तात् प्रियतरो लोके कश्चन विद्यते ॥

यतः स्वयं दर्शितवान् स्वमात्मानं द्विजोत्तमेति ।

अनन्यत्वं च, अन्यसाधनान्यफलान्यसम्बन्धशून्यत्वम् । तत्र-

अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते ।

तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम् ॥
तेषामहं समुद्धर्ता मृत्युसंसारसागरात् ।
भवामि नचिरात् पार्थ मय्यावेशितचेतसाम् ॥
तेषामेवानुकम्पार्थमहमज्ञानजं तमः ।
नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता ॥
मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ।
मच्चित्ता मद्गतप्राणा बोधयन्तः परस्परम् ।
कथयन्तश्च मां नित्यं नित्ययुक्ता उपासते ॥

सर्वारम्भपरित्यागी । शुभाशुभपरित्यागी । सर्वधर्मान् परित्यज्य । तमेव शरणं गच्छेत्यादिभिरन्वयव्यतिरेकगर्भितैः स्वस्यैव श्रीभगवतः स्वेनैव स्वप्रियाणां साधनत्वबोधनादन्यसाधनं निरस्तम् ।

एवमेव च,
यान्ति देवव्रता देवान् पितॄन् यान्ति पितृव्रताः ।
भूतानि यान्ति भूतेज्या यान्ति मद्याजिनोऽपि माम् ॥
मामेवैष्यसि युक्त्वैवमात्मानं मत्परायणः ।
मामेवैष्यसि सत्यं ते प्रतिजाने प्रियोऽसि मे ॥
मद्भक्त एतद्विज्ञाय मद्भावायोपपद्यते ।
मम साधर्म्यमागताः ।
मामुपेत्य पुनर्जन्म दुःखालयमशाश्वतम् ॥
नाप्नुवन्ति महात्मानः संसिद्धिं परमां गताः ।
आब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन ॥
मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते ।
यं प्राप्य न निवर्तन्ते तद्धाम परमं मम ॥
न तु मामभिजानन्ति तत्त्वेनातश्च्यवन्ति ते ।

मामप्राप्यैव कौन्तेय ततो यान्त्यधमां गतिम्—

इत्यादिभिश्च प्रतिज्ञापूर्वकान्वयव्यतिरेकसहकृताभ्यासलिङ्गालङ्कृतवाक्यैः स्वात्मनो भिन्नफलस्य निषेधो विस्तृतः ।

किञ्च नारायणीयाख्यानेऽपि स्वयमेवार्जुनं प्रत्येवमेवाह—

चतुर्विधा मम जना भक्ता एवेति मे श्रुतम् ।

तेषामेकान्तिनः श्रेष्ठा ये चैवानन्यदेवताः ॥

अहमेव गतिस्तेषां निराशीःकर्मकारिणाम्—

इत्यादिना सिद्धान्तितम् । तथैव हि,

ममैवांशो जीवलोके जीवभूतः सनातनः ।

मद्भक्त एतद् विज्ञाय । स मे प्रियः । अहं स च मम प्रियः । तद्धाम परमं मम । प्रतिजाने प्रियोऽसि मे—इत्यादिवचनसंदर्भेण परस्परसंबन्धिसंबन्धयोर्वैशद्येन प्रतिपादनादन्यसंबन्धोऽपि स्पष्टं निषिद्धः । तत् सिद्धमुक्तलक्षणानन्यत्वम् । तदवच्छिन्नस्तत्प्रसादविषय इति ।

किञ्च, यतिरत्रैकवचनम्,

मनुष्याणां सहस्रेषु कश्चिद् यतति सिद्धये ।

यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्त्वतः—

इति वचनादुक्तलक्षणाधिकारिणां निरतिशयदुर्लभतां सूचयति ।

तत्र तावदसंख्याः क्षेत्रज्ञास्तेष्वसंख्या एव मनुष्ययोनयस्तेष्वपि केचिन्मनुष्याः शास्त्राधिकारिणस्तेष्वपि केचिद्यत्नसंभावनामात्रपरास्तेषु केचिद् यत्नपरायणाः । यत्नपरायणानां केचिद् विरला यत्नसिद्धाः । तेषां केचित् तत्त्वजिज्ञासवः । तेषां केचिच्छास्त्रतत्त्वज्ञाः । तेषामपि कश्चिदुक्तलक्षणो मन्निष्ठावानिति श्लोकार्थ एवैकवचनेन श्रुत्या द्योत्यत इति भावः । अपिच ।

यमित्यत्र यच्छब्दसामान्यादुक्ताधिकारिणो जातिकुलादिगौरवतानियमोऽपि निरस्तः । " ये जनाः पर्युपासते । चतुर्विधा भजन्ते मां जनाः । मद्भक्त " इत्यादिनाभ्यासस्य व्यक्ततया सर्वत्र गीतापाठे जात्यादेरधिकारिविशेषणतया कुत्राप्यस्मरणात् ।

मां हि पार्थ व्यपाश्रित्य येऽपि स्युः पापयोनयः ।
स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यान्ति परां गतिम् ॥—

इत्यादिना सर्वेषामप्यधिकारित्वेन ग्रहणात् । अन्यत्रापि नारायणीये भगवदेकान्तिनां सर्वेभ्यो विलक्षणगतिप्रतिपादनाच्च ।

सहोपनिषदान् वेदान् ये विप्राः सम्यगाश्रिताः ।
पठन्ति विधिमास्थाय ये चापि यतिधर्मिणः ॥
तेभ्यो विशिष्टां जानामि गतिमेकान्तिनां नृणामित्यादिना ।

अथ, एष इत्यनेन, " तेषामहं समुद्धर्ता । प्रतिजाने । ददामि बुद्धियोगं तम् । योगक्षेमं वहाम्यहम् । अहं सर्वस्य प्रभवः । मत्तः परतरं नान्यत् किञ्चिदस्ति धनञ्जय । भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन " इत्यादिसर्वसाधनफलादिदातृत्वप्रतिज्ञाता सर्वज्ञो भगवान् पुरुषोत्तम उच्यते । " एष भूताधिपतिरेष लोकपाल एष त आत्माऽन्तर्यामी " इत्यादिश्रुतेः । एवेति तन्त्रपाठः । एवैवमित्यर्थः । एकेन, नान्यैरिति साधनान्तरं व्यावृत्तम् ।

नाहं वेदैर्न तपसा न दानेन न चेज्यया ।
शक्य एवंविधो द्रष्टुं दृष्टवानसि मां यथेत्यादिवचनात् ।
न हि यज्ञफलैस्तात न तपोभिश्च संचितैः ।
शक्यते भगवान् द्रष्टुं न दानेन नचेज्यया ॥—

इत्यादिनोत्तरकाण्डे श्रीभगवत्सनत्कुमारवचनाच्च । द्वितीयाऽवधारणेन चोक्तलक्षणभिन्नाधिकारिनिषेधः । तथाच, " देवा अप्यस्य रूपस्य नित्यं दर्शनकाङ्क्षिण " इत्यादिवचनात् ।

न स शक्यः सुरैर्द्रष्टुं नाऽसुरैर्न च पन्नगैः ।
यस्य प्रसादं कुरुते स वै तं द्रष्टुमर्हति ॥
तद्भक्तैस्तद्गतप्राणैस्तच्चित्तैस्तत्परायणैः ।
शक्यते भगवान् द्रष्टुं ज्ञाननिर्द्धूतकिल्बिषैरिति— तत्रैव सनत्कुमारवचनात् ।
एकतश्च द्वितश्चैव त्रितश्चैव महर्षयः ।
इदं मे समनुप्राप्ता मम दर्शनलालसाः ॥
न च मां ते ददृशिरे न च द्रक्ष्यति कश्चन ।
ऋते ह्येकान्तिकं चैषां त्वं चैवैकान्तिको ममेति— नारदं प्रति भगवतः श्वेतद्वीपपतेर्वचनाच्च । तच्च, प्रपत्तिचिन्तामणौ भगवच्चरणैराद्याचार्यैस्तद्व्याख्यातृभिः श्रीचरणैर्विश्वाचार्यैश्च चरमश्लोकव्याख्यायां निपुणं प्रपञ्चितं, विस्तरभयादुपरम्यते। किञ्चोक्तार्थदार्ढ्यार्थं तुल्यार्थकमपि वाक्यान्तरमुदाहरति—**तस्यैष आत्मा वृणुते तनुं स्वामिति** । व्याख्यातप्राया चेयं श्रुतिः । **आदिना**, "तमक्रतुं पश्यति वीतशोको धातुः प्रसादान्महिमानमीशम्" इत्यादिश्रुतीनां संग्रहः । **कार्यकारणेति** । कार्यमत्र स्थूलशरीरम् । कारणं सूक्ष्मशरीरम् तद्रूपायाः प्रकृतेः सम्बन्ध एव स्वरूपं यस्य स चासौ प्रतिबन्धकश्च, तस्य निवृत्तौ सत्यामित्यर्थः । **मोक्ष** इत्युक्तं, तस्य च श्रीपराशरोक्तमेव लक्षणमाह । **श्रीभगवत्प्राप्तिलक्षणो मोक्ष** इति । भगवत्प्राप्तिरेव लक्षणं यस्य सः ॥

कीदृशी प्राप्तिरित्याशङ्क्य तां विवृणोति—**अत्र प्राप्तिर्नामेति** । श्रीभगवदनवच्छिन्नानुभूत्या स्थितिरिति तत्त्वं प्राप्तेर्लक्षणमित्यर्थः । अनुभूत्येत्युक्ते ध्यानादावपि तस्याः सत्त्वात् तत्रातिप्रसङ्गस्तद्वारणायाह—**अनवच्छिन्नेति** । तत्र तावत्कालीना-

नुभूतौ सत्तायामप्यनवच्छिन्नत्वं नास्तीत्यर्थः। यद्वा परेषां संमतायां जीवन्मुक्तावपि तस्याः सत्त्वेनातिव्याप्तेस्तद्व्यावृत्तये आह—अनवच्छिन्नेति। जीवन्मुक्तौ विक्षेपलक्षणापरिच्छेदस्य तैरपि स्वीकृतत्वात्। ननु क्षेत्रज्ञस्वरूपानुभूतेरप्यनुभवितुरपेक्षयानवच्छिन्नत्वात् तत्रातिव्याप्तिरिति चेत् तत्राह—भगवदिति। भगवदनुभूतेर्निरपेक्षानवच्छिन्नत्वान्महद्वैलक्षण्यमिति भावः। केषाञ्चिन्मतेऽनुभूतेरेव मोक्षस्वरूपाऽभ्युपगमात् तत्र व्यभिचारवारणाय स्थितिपदम्। अनुभूतेरनुभवितुर्वैलक्षण्यादेवंभूतानुभूत्या स्थितो मुक्तसंज्ञक इत्यर्थः। ननु भगवदनुभूतेर्निरपेक्षानवच्छिन्नताभ्युपगमे विभुत्वापत्तिस्तत्त्वे च तस्या बद्धेषु विषयप्रवणेष्वपि व्याप्तत्वादतिप्रसङ्गो दुर्वारः। तथात्वे सर्वमोक्षापत्तेः। व्यतिरेके चासम्भव इति चेत् तत्राह— क्षेत्रक्षेत्रज्ञयोः स्वत्वममत्वभावनाशेनेति। श्रीभगवदनुभूतेस्तेष्वपि सामान्यतः सत्त्वेन तेषां धर्मभूतज्ञानद्वारकस्तदनुभवाधारभूतायाः अनादिप्रकृतिसम्बन्धेनैवावृतत्वाज्जन्मान्धस्य सूर्यादितेऽपि तत्प्रकाशानुभवाऽभाववन्न प्रकाशतेऽतो न किञ्चिद् विरुद्धमिति भावः। प्रकृतिसम्बन्धात्मकप्रतिबन्धकनिवृत्तौ सत्यां मोक्ष इत्युक्तम्। तत्र किमात्मकः सम्बन्ध इत्यपेक्षायां तत्स्वरूपं ज्ञापयन् विशिनष्टि—इदंकाराहंकारास्पदयोरिति। अनयोः स्वत्वममत्वस्वातन्त्र्यभावस्यैव प्रकृतिसम्बन्धरूपत्वात् तद्भावाभावयोर्बन्धमोक्षबीजत्वमिति निष्कर्षः। तत्राप्रामाण्यशङ्कां निरासयति, अश्वमेधपर्वणि पठितसूत्रकारवाक्येनैवान्वयव्यतिरेकगर्भितेन—द्व्यक्षरं तु भवेन्मृत्युस्त्र्यक्षरं ब्रह्म शाश्वतम्। ममेति च भवेन्मृत्युर्न ममेति च शाश्वतमिति। ममेति मृत्युर्बन्धः। "प्रमादं वै मृत्युमहं ब्रवीमि" इति श्रुतेः। परकीयस्वकीयत्वा-

भिमानस्यैव प्रमादत्वात् । न ममेति ब्रह्म शाश्वतं, ब्रह्मवदेकरसो मोक्ष इत्यर्थः । तदेवोपोद्बलयति, द्वादशाध्यायपठितभगवद्वाक्येन—**निर्ममो निरहङ्कार इति** । "स मे प्रिय" इत्युत्तरेणान्वयो ज्ञातव्यः । बद्धानां विषयप्रवणानां तदनुभूतिप्रकाशाभावे हेतुमाह—**स्वाभाविकतदीयतासम्बन्धसाक्षात्कारपूर्वकमिति** स्वाभाविकस्येत्यस्य पूर्वं, क्षेत्रज्ञस्येति योजनीयम् । तत्र भगवद्वाक्यं प्रमाणयन् विशिनष्टि—**ममैवांशो जीवलोके जीवभूतः सनातन इति** । सनातन—इति, अंशस्य विशेषणम् । सनातनोंऽश इत्यर्थः । एतेनौपाधिकभेदवादः स्पष्टं निरस्तो भगवतेति ज्ञायते । तदर्थकं वक्ष्यमाणं सूत्रमपि पठ्यते—**अंशो नानाव्यपदेशादिति** । एतच्च, "अंशो ह्येष परस्य" इत्यादिश्रुतीनामप्युपलक्षणम् । बद्धानां तु उक्तलक्षणसम्बन्धस्याऽऽवृतत्वान्न प्रकाशत इत्यर्थः । अनवच्छिन्नत्वे दृष्टान्तः—**सुरसरित्प्रवाहवदिति** । तत्र पराशरवचनमनुवदति—**निरस्तातिशयाह्लादसुखभावैकलक्षणा । भेषजं भगवत्प्राप्तिरेकान्तात्यन्तिकी मतेति** । उक्तेनैव लक्षणेन श्लोकोऽपि व्याख्यातप्राय एव । तथाहि । भगवत्प्राप्तिर्भेषजमित्यन्वयः । प्रकृतिसम्बन्धरूपरोगस्येति शेषः । कीदृशीत्यपेक्ष्याह—**निरस्तेति** । निरस्तोऽतिशयाह्लादो यस्मात् तथाभूतेन सुखेन भावः स्थितिरेवैकं लक्षणं यस्याः सा । अत एवैकान्तात्यन्तिकी निरतिशया च । एतच्च सर्वं परिष्कारमुखेनोक्तमेव । श्लोकस्य परिष्कार एव लक्षणतया प्रतिपादितो, न स्वतन्त्रः । **सर्वज्ञपराशरोक्तश्रीभगवत्प्राप्तिलक्षणो मोक्ष इति** प्रतिज्ञातत्वादित्यर्थः । ननु भगवत्प्राप्तिरेव मोक्ष इत्युक्तं, तदनुपपन्नम् । श्रुतिष्वन्यथैव दर्शनादिति चेत् तत्राह—**एषैवेति** । उक्तलक्ष-

णेत्वेत्यर्थः। तान्येव ज्ञापकानि श्रुतिस्मृतिवाक्यानि पठ्यन्ते— यदा पश्यः पश्यते इत्यादीनि। ब्रह्मैव भवतीत्यत्र माया-वादभ्रान्तिं वारयति—बृहज्ज्ञानादिधर्मेणेत्यादिना॥

कैश्चिच्च "सोऽयं देवदत्तः। दशमस्त्वमसी"त्यादिवाक्य-श्रवणज्ञानादेवाज्ञाननिवृत्तिः। तथात्वे च कारणाभावे कार्या-भाव इति न्यायात् स्वरूपविषयकाज्ञाननिवृत्तौ बन्धनकारणा-ऽज्ञानस्य नाशान्मोक्ष इति मन्यते। तन्निराकरोति—नचेत्यादिना॥

नच वाक्यज्ञानमात्रादज्ञाननिवृत्तिलक्षणो मोक्ष इति संभावनीयः। अपि तु तद्वाच्यसाक्षा-त्कारेणैव। तत्र च ध्यानस्यैवान्तरङ्गत्वात्। "श्रो-तव्यो मन्तव्यो निदिध्यासितव्य" इति श्रुत्या वाक्यज्ञानानन्तरमननव्यवहितध्यानस्यैव स्पष्ट-मन्तरङ्गत्वविधानात्। अन्यथा रोगिणो भेषज-श्रुतिमात्रादेव तत्सेवनमृतेऽपि, रोगनिवृत्तिप्र-सङ्गात्। ननु, नायं सर्पो मा भी रज्जुरेषेत्याप्तवा-क्याद्भयनिवृत्तिदर्शनात् तथा प्रकृतेऽपि संग-च्छत इति चेन्न। तत्रापि रज्जुस्वरूपसाक्षात्का-रद्वारेणैव भ्रान्तिनिवृत्त्या भयनाशनिश्चयात्। तथात्रापि श्रवणानन्तरं वाक्यज्ञानावगतेऽपि त-त्साक्षात्कारौपयिकासाधारणध्यानेन तद्दर्शने कृते उक्तलक्षणो मोक्षः। तथाच, " भिद्यते हृदयग्र-

न्थिरि " त्यादिप्रमाणस्य पूर्वोक्तत्वादत्रापि द्रष्ट-व्यम् ॥

इति न संभावनीय इत्यन्वयः । एतत्संभावनायोग्योऽपि नास्तीत्यर्थः । इतिशब्दार्थस्य विवरणमाह—वाक्यज्ञानमा-त्रादिति । किन्तर्हि तदिति चेत्तत्राह—अपि तु तद्वाच्य-साक्षात्कारेणैवेति । न वयं वाक्यज्ञानस्य साधनत्वं वारयामः । तस्यापि "श्रोतव्य" इत्यादिना श्रूयमाणत्वात् । किन्तु साक्षात्कारव्यवहिततया स्वातन्त्र्याभावादन्तरङ्गत्वं निषिध्यत इति यावत् । तदेवाह—तत्र चेत्यादि । तत्र साक्षात्कारे । ध्यानस्यैवेत्यत्रैवकारस्तदन्यसाधनव्यावृत्तिपरः । नान्येषां तद्भि-न्नानामित्यर्थः । अन्तरङ्गत्वादिति । स्वतन्त्रत्वेन साक्षादुपयो-गित्वात् । उक्तार्थे शास्त्रप्रमितहेत्वन्तरं कथयन् वाक्यज्ञानस्यात्यन्तबहिरङ्गतां बोधयति, श्रुतिमुखेनैव—श्रोतव्य इत्यादिना । श्रुत्यैव वाक्यज्ञानोत्तरं, तत्रापि मननरूपसाधनान्तरव्यवधानेन । किञ्च । स्पष्टं कण्ठरवेणैव, नार्थगौणकल्पनयेति । नास्माकं वाक्यस्य स्वातन्त्र्यनिषेधे आग्रहः । अपि तु श्रुतेरेव । तथाहि श्रोतव्य इति वाक्यज्ञानात्मकं श्रवणं विधाय ततश्च मन्तव्य इति मननस्य तन्मध्ये व्यवधानं कृत्वा पश्चाच्चोपसंहारोक्त्यैव निदि-ध्यासितव्य इति ध्यानस्यान्तरङ्गत्वं विधत्त इति भावः ।

उक्तसिद्धान्तमसहिष्णुः पुनराक्षिपति—नन्वित्यादि । आप्त-वाक्यादित्यादि । दृष्टान्तगर्भितो हेतुः । नायं सर्प इत्याद्यु-दाहरणम् । यथा ह्याप्तवाक्याद् भयनिवृत्तिस्तथा प्रकृतेऽपि वेद-स्याप्ततरत्वात् तद्वाक्याद् बन्धनिवर्तने किं विकल्प इति भावः ।

अत्र प्रयोगः—वाक्यश्रवणान्मोक्षः। लोके तथा दर्शनात्। आप्तवाक्यजन्यसर्पादिभयनाशवदिति शङ्कार्थः। परैः कथितेऽर्थेऽनुपपत्तिं दर्शयन् समाधत्ते—**नेति**। तदेव द्रढयति, हेतुमुखेन—**तत्रापीत्यादिना**। **तत्रापीति**। आप्तवाक्यश्रवणजन्यविश्वासेऽपि। आप्तवाक्यश्रवणजन्यविश्वासेन भयनिवृत्तिरित्यत्र न विवादः। परन्तु रज्ज्वादिस्वरूपसाक्षात्कारव्यवधानेनैव, न तु स्वातन्त्र्येण। तच्छ्रवणानन्तरमपि भयकम्पादेस्तादवस्थ्यदर्शनादित्यर्थः। उक्तन्यायं दार्ष्टान्तिकेऽतिदिशन् सिद्धान्तयति—**तथात्रापीत्यादिना**। स्पष्टार्थः। उक्तप्रक्रियाकत्वात् तत्र पूर्वपठितमेव वाक्यं प्रमाणयन् स्मारयति—**तथाच, भिद्यत इत्यादिना**। किं बहुना, वाक्यस्य मोक्षेऽन्तरङ्गत्वमभ्युपगच्छतां श्रुतय एव परिहसन्त्य उक्तसिद्धान्तं बहु मन्यमान्या उररीकुर्वत्यस्तन्निषेधं कण्ठरवेणैव डिण्डिमयन्त्य आक्रोशन्ति "शृण्वन्तोऽपि बहवो यं न विद्युः। नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन। यमेवैष वृणुते तेन लभ्यः। तमक्रतुं पश्यति वीतशोको धातुः प्रसादान्महिमानमात्मन" इत्यादय इत्यलं विस्तरेण॥

स्यादेतत्। ध्यानेनोक्तरीत्या मोक्ष इति। एष पक्षश्चास्मदेकदेशिभिर्वाचस्पत्यादिभिरपि स्वीकृतः। तथापि मोक्षस्य जन्यत्वापातादनित्यत्वं दुर्वारमित्याशयेनाशङ्क्यते—**नन्वित्यादिना**।

**ननु ध्यानस्य मानसक्रियाविशेषस्य मोक्षान्तरङ्गत्वे तस्य तज्जन्यत्वेन घटादिवदनित्यताप्रसङ्ग इति चेन्न। तस्य तु साक्षात्कारप्रतिबन्धकरूपावरणभङ्गेनैव नैराकाङ्क्ष्यान्न तज्जन्यत्वं, न सुत-**

रामनित्यत्वमुक्तलक्षणमोक्षस्य । नच ध्यानस्य क्रियाविशेषत्वेन पुरुषतन्त्रता कल्पनीया । तस्य स्वाभाविकाचिन्त्यानन्तशक्तिब्रह्मविषयकत्वेन वेदैकगम्यतया ज्ञानवत् प्रमाणतन्त्रत्वाज्ज्ञानाभिन्नत्वाच्च । तथाच ब्रह्मणः सार्वज्ञ्यादिमत्तया सर्ववैलक्षण्येन च वेदनस्य ध्यानज्ञानशब्दाभ्यां प्रतिपाद्यमानत्वाच्छास्त्रमुखेन "ऋते ज्ञानान्न मुक्तिः । तमेव विदित्वाऽतिमृत्युमेति । पृथगात्मानं प्रेरितारं च मत्वा । जुष्टं यदा पश्यत्यन्यमीशस्य । भोक्ता भोग्यं प्रेरितारं च मत्वा । निचाय्य तं मृत्युमुखात् प्रमुच्यते । भोक्तारं यज्ञतपसां सर्वलोकमहेश्वरम्॥ सुहृदं सर्वभूतानां ज्ञात्वा मां शान्तिमृच्छति । मद्भक्त एतद्विज्ञाय मद्भावायोपपद्यते । इदं ज्ञानमुपाश्रित्य । इदमेकं सुनिष्पन्नं ध्येयो नारायणः सदा । तद् ब्रह्म परमं धाम तद्ध्येयं मोक्षकाङ्क्षिणा । श्रुतिवाक्योदितं सूक्ष्मं तद्विष्णोः परमं पदम्" इति शास्त्रस्योक्तलक्षणवेदनमेवार्थः । अन्यथा त्वत्संमतस्य ज्ञानस्यापि मानसत्वाविशेषेणोक्तन्यायस्य तत्राप्यवतारणशक्यत्वात् ।

**ध्यानस्य मोक्षान्तरङ्गत्वाभ्युपगमे तस्य** मोक्षस्यानित्यत्वप्रसङ्ग इति योजना। अनित्यत्वे हेतुमाह—**तज्जन्यत्वेनेति**। ध्यानजन्यत्वेन। तत्र दृष्टान्तः—**घटादिवदिति**। कथमित्यपेक्षायां जन्यत्वे हेतुगर्भितविशेषणमाह—**क्रियाविशेषस्येति**। मानसक्रियाविशेषत्वादिति यावत्। तथाचात्र प्रयोगः—उक्तलक्षणो मोक्षः, अनित्यः। मानसक्रियाजन्यत्वात्। यदेवं तदेवम्। शारीरिकक्रियाजन्यघटादिवदिति शङ्कासंदर्भः। तत्रोत्तरमाह—**नेति**। नास्तिशङ्कास्थितिपदमत्रेत्यर्थः। तत्र हेतुः—**तस्येत्यादि**। **तस्य** ध्यानस्य **नैराकाङ्क्ष्यात्** कृतकृत्यत्वात्। **यथा तव मते** ज्ञानस्यावरणभङ्गेनैव परिक्षीणत्वान्न तज्जन्यत्वं मोक्षस्य, तथाऽस्माकं ध्यानस्यापि तुल्ययोगक्षेमत्वान्नोक्तदोषगन्धस्पर्शावकाश इत्याह—**न तज्जन्यत्वमिति**। निमित्ताभावे नैमित्तिकाभाव इति न्यायमवतारयन् सिद्धान्तमाह—**न सुतरामनित्यत्वमुक्तलक्षणमोक्षस्येति**। उक्तप्रयोगस्य स्वरूपासिद्धलक्षणेन हेत्वाभासेन गिलनान्न प्रामाण्यमितिभावः। ननु 'यथा तव मते ज्ञानस्य' इत्यनेन यद् ध्यानस्य ज्ञानसादृश्यमुक्तं, तदयुक्तम्। तस्य क्रियात्वेन पुरुषतन्त्रत्वान्महद्वैलक्षण्यमिति शङ्कां निराकरोति—**नचेत्यादिना**। **कल्पनीयेति**। कल्पनाविषयीकर्तुमनर्हेति। तत्र हेतुः—**तस्यापि ज्ञानवत् प्रमाणतन्त्रत्वादिति**। तत्र, **तस्येति**। ध्यानस्य। यथा युष्माकं ब्रह्मविषयकं ज्ञानं प्रमाणतन्त्रं, न पुरुषतन्त्रं, तथास्माकं ध्यानेऽपि तुल्यन्याय इत्यर्थः। किं तत्र मानमितिचेच्छास्त्रमेवेत्याह—**वेदैकगम्यतयेति**। ननु क्रियाया अपि विध्यात्मकवेदमुखेनैव श्रूयमाणत्वाविशेषाद् ध्यानस्यापि तथात्वमेवेतिचेत् तत्राह—**तस्य स्वाभाविकत्वादि**। क्रियाया वैदिकत्वेऽपि तस्या दृश्यमाकृ-

तसाध्यवस्तुविषयकत्वादस्य च नित्यसिद्धैकरसोक्तलक्षणवस्तु-विषयत्वान्महान् भेदोऽतो न पुरुषतन्त्रत्वम् । प्रमाणतन्त्रमेव ध्यानमिति भावः । प्राकृतवस्तुविषयकध्यानस्य तु क्रियासादृश्यात् पुरुषतन्त्रत्वं स्वभीष्टमेव । तच्चान्यविषयकज्ञानेऽपि समाननमित्युक्तं कर्ममीमांसकैरपि—

सर्वत्रैव हि विज्ञानं संस्कारेणोपगम्यते ।
पराङ्गं चात्मविज्ञानादन्यत्रेत्युपधार्यताम् ॥—

इत्यादिना । तच्च वक्ष्यते तृतीयाध्याये । ध्यानस्य क्रियाभिन्नत्वे हेत्वन्तरमाह—**ज्ञानाभिन्नत्वाच्चेति** । ज्ञानशब्दस्य पूर्वं तस्येति पदं योजनीयम् । वेदैकगम्यतयेत्युक्तं, तत् प्रपञ्चयति—**तथाचेत्यादिना** । **ब्रह्मणो वेदनस्यैव ध्यानज्ञानशब्दाभ्यां शास्त्रमुखेन प्रतिपाद्यमानत्वादित्यन्वयः** । कथमित्यपेक्षायामन्यप्रमाणागोचरतया वैलक्षण्यं दर्शयन् प्रतिज्ञातां वेदैकगम्यतां व्यनक्ति—**सार्वज्ञ्यादिमत्तयेति** । तत्र हेत्वन्तरमाह—**सर्ववैलक्षण्येन चेति** । क्षेत्रक्षेत्रज्ञकालकर्मादीनामन्तर्यामितया तेभ्यो वैलक्षण्याच्चेत्यर्थः । अयं भावः । ब्रह्मणः स्वरूपमात्रस्य ध्यानाविषयत्वे न विवादः । किन्तु सार्वज्ञ्यादिमत्त्वेन तद्विषयत्वं वाच्यम् । एतच्च ज्ञानेऽपि तुल्यमिति **शास्त्रमुखेनेत्युक्तम्** । तदेव शास्त्रं पठन्नुक्तार्थे योजयति—**ऋते ज्ञानादित्यादि** । श्रुतीनां, भोक्तारं यज्ञतपसामित्यादिस्मृतीनाञ्च सर्वज्ञत्वादिमत्त्वेन वेदनमेवार्थ इत्युक्तार्थानङ्गीकारे उक्तदोषस्य तन्मतेऽप्यतिव्याप्तिं दर्शयन् हेत्वन्तरमाह—**अन्यथेति** । **ज्ञानस्यापि मानसत्वाविशेषेणेति** । अनेन भगवदनुग्रहासहकृतज्ञानस्य विघ्नबाध्यत्वेन प्रत्युत बन्धनहेतुत्वेन चाकिञ्चित्कारित्वं द्योतितं बोध्यम् । तथाच श्रीभगवतैवोक्तम्—

ज्ञानविज्ञाननाशनमिति ।

सुखसङ्गेन बध्नाति ज्ञानसङ्गेन चानघेति च ॥

यद्यप्यत्र सत्त्वस्य बन्धनहेतुताप्रतिपादने श्रीभगवतस्तात्पर्यं न, ज्ञानस्य गुणत्रयप्रकरणत्वात् । तथापि ज्ञानस्य तत्र व्यापाररूपत्वादस्ति बन्धनहेतुत्वमिति भावः । उक्तज्ञानस्य भगवदनुग्रहासहकृतत्वं द्योतयन् विशिनष्टि—त्वत्संमतस्येति । उक्तज्ञानमुपलक्षणं साधनमात्रस्य । अस्मन्मते साधनमात्रस्य भगवदुपेक्षितस्याकिञ्चित्करत्वेनाज्ञानमाहश्यात् । अत एव, ध्यानेन तदनुग्रहसहकृतेनेत्युपक्रमाद् व्यतिरेके ध्यानेऽप्युक्तन्यायोपसर्पणादिति भावः । उक्तन्यायस्येति । तज्जन्यत्वेनानित्यत्वमित्यस्य । तत्रापि तव मतेऽपि । तथात्वेचोक्तदुष्टतायाः समानत्वादुक्तसिद्धान्तस्यैव वरीयस्त्वमित्यर्थः ।

अपिच । चतुर्विधप्रसिद्धक्रियाजन्यपदार्थस्यानित्यत्वाश्रयताघटना तत्रोक्तशङ्काप्रवेशाच्छिद्रं लभते । प्रकृते तु नैतदस्तीत्याशयेनाह—किञ्चेति ।

**किञ्चोक्तलक्षणभगवदनुभूतेराश्रयविषयाभ्यां स्वरूपतश्चतुर्विधक्रियाजन्यत्वाभावादपि नानित्यत्वकल्पनावकाशः ।**

**तत्र न तावदाश्रयेण । तथाहि तदनुभूत्याश्रयः क्षेत्रज्ञः । स च नोत्पाद्यः कटादिवत् । तस्याजत्वात् । "अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः । अजो नित्यः**

शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीरे इति वचनात् । नापि चाप्यः । स्वस्वरूपत्वेन नित्यप्राप्तत्वात् । अन्यप्रामाणानपेक्षत्वाच्च । नापि विकार्यो दध्यादिवदयम् । षड्विकारहीनत्वात् । "न जायते म्रियते वा विपश्चित् । न जायते म्रियते वा कदाचिन्नायं भूत्वा भविता वा न भुय" इत्यादिप्रमाणात् । न च संस्कार्यः । स च द्विविधः । गुणाधानदोषापकर्षभेदात् । नाद्यः । नित्यज्ञानादिगुणवत्त्वात् । न्नोऽत एव । न हि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते, अविनाशित्वात् । "एतद् यो वेत्ति तं प्राहुः क्षेत्रज्ञ इति तद्विद" इत्यादि शास्त्रात् । नापि द्वितीयः । विज्ञानरूपत्वेनास्पृष्टदोषगन्धत्वात् । "योऽयं विज्ञानघन" इति श्रुतेः ॥

ननु क्षेत्रज्ञस्य सर्वथा प्राकृतदोषसंबन्धाभावेऽभ्युपगम्यमाने बन्धमोक्षव्यवस्थाभङ्गप्रसङ्गः। संबन्धे च व्यवस्थासिद्धौ सत्यामपि तदपाकरणलक्षणसंस्कारस्यावश्यंभावित्वात, तर्हि कथं संस्कार्यत्त्राभाववत्त्वमितिचेन्न । तस्य धर्मात्मकज्ञानमेवानादिकर्मात्मकाज्ञानसंवलितत्वेन संकुचितम् । सैव बद्धावस्थेति कथ्यते । भूयो भगवत्-

प्रसादेन तत्संकोचकारणप्रकृतिसंबन्धध्वंसे सति स्वस्वाभाविकज्ञानप्रकाशेन मोक्षो, न स्वरूपतो बन्धमोक्षावतो नोक्तदोषावकाशः। तत् सिद्धं भगवदनुभूतेराश्रयेण क्रियाजन्यताभाववत्त्वम्। नापि विषयतस्तथात्वम्। विषयश्चास्या ब्रह्मैव। तस्य चतुर्विधक्रियाजन्यत्वाभावे सर्वेषामपि संमतत्वेन विवादाभावात्। अत एव न स्वरूपतोऽपीति। तस्याः स्वाभाविकत्वात्। ब्रह्मस्वरूपवत्। तस्मान्न कथमप्युक्तलक्षणमोक्षे अनित्यत्वकल्पनागन्धसंबन्धसंस्पर्शः।

तत्र तावद् भगवत्प्राप्तिरूपमोक्षस्याश्रयविषयस्वरूपभेदाद् अंशत्रयवत्त्वेऽपि न केनाप्यंशेन क्रियाजन्यत्वकल्पनागन्धस्पर्श इति वक्तुं प्रतिजानीते—**उक्तलक्षणभगवदनुभूतेराश्रयविषयाभ्यां स्वरूपतश्च नानित्यत्वकल्पनावकाश** इत्यन्वयः। तत्र हेतुः—**चतुर्विधक्रियाजन्यत्वाभावादिति**। तत्राश्रयः प्राप्ता, विषयश्च प्राप्यः, स्वरूपं च प्राप्तिरिति विवेकः। अत्रायं प्रयोगः सूचितः। भगवत्प्राप्तिरनित्यत्वकल्पनानवकाशवती। क्रियाजन्यत्वाभावात्। यन्नैवं तन्नैवम्। घटादिवत्। अन्वये वा ब्रह्मस्वरूपवदिति। आदावाश्रयांशे उक्तार्थं प्रपञ्चयति—**तत्र न तावदाश्रयेणेति**। कथमित्यपेक्षायामाह—**तथाहीति**। तदेव वर्ण्यत इत्यर्थः। किमाश्रयस्वरूपमिति? तत्राह—**तदनुभूत्याश्रयः क्षेत्रज्ञ इति**। **चतुर्विधक्रियाजन्यत्वाभावादित्यनेनोक्तं**

चातुर्विध्यं विचार्यते—**स चेत्यादिना** । स क्षेत्रज्ञरूप आश्रयः कटादिवन्नोत्पाद्य इति । उत्पाद्यत्वं नाम भूतकालीनसत्ताशून्यत्वे सत्युत्तरकालीनसत्ताभाक्त्वम् । तच्च क्षेत्रज्ञे असमन्वितम् । कुतः ? । **अजत्वात्** । तथाच क्षेत्रज्ञो नोत्पाद्यः । अजत्वात् । यन्नैवं तन्नैवम् । कटादिवदिति । उक्तप्रयोगे बाधशङ्कां वारयंस्तन्मूलं शास्त्रं पठति—**अजो ह्येको जुषमाणोऽनुशेत** इत्यादिश्रुतयः, **अजो नित्यः शाश्वतोऽयमित्यादिस्मृतय**श्चास्य मूलमित्यर्थः ॥ १ ॥

आप्यत्वमस्यास्त्विति चेत् तत्राह—**नापि चाप्य** इति । आप्यत्वं प्राप्तिक्रियाविषयतावत्त्वम् । नैतल्लक्षणलक्षितो जीवात्मा इत्यर्थः । **स्वस्वरूपेत्याद्युक्त**हेतोरन्यप्रमाणनिरपेक्षतामाह, हेत्वन्तरेण—**अन्यप्रमाणानपेक्षत्वादिति** । एतदपि प्रमाणगर्भितमेव । तथाच, नाप्यो जीवात्मा । नित्यप्राप्तत्वात्, स्वस्वरूपत्वाद्, अन्यप्रमाणानपेक्षत्वाच्च । यन्नैवं तन्नैवम् । रूपादिवत् । न हि स्वस्य प्राप्तौ प्रमाणापेक्षेति भावः ॥ २ ॥

उभये मा स्याताम् । विकार्यत्वं भवेदेव । तद्विकार्यैः क्रोधादिभिस्तथात्वानुमानादिति संभावनां वारयन्नाह—**नापि दध्यादिवदयं विकार्य** इति । विकार्यत्वं हि परिणामादिमत्त्वम् । न तदाश्रयोऽयमित्यर्थः । कुतः ? । **षड्विकारहीनत्वादिति** । नायं विकार्यः । विकारहीनत्वात् । यन्नैवं तन्नैवम् । दध्यादिवदिति । उक्तप्रमाणं शास्त्रमुखेन द्रढयति—**न जायते म्रियते** इत्यादिश्रुतेः । तद्व्याख्यानरूपभगवद्वाक्याच्च—**न जायते म्रियते वा कदाचिदित्यादेः** । किञ्च, अविकार्योऽयमुच्यत इति श्रीमुखेनैवोक्तत्वाच्च क्रोधादीनामन्तःकरणपरिणामत्वान्नोक्तानुमानस्यात्रावतरणमिति भावः ॥ ३ ॥

स्यादेतत् । तथापि वक्ष्यमाणरीत्या बन्धमोक्षव्यवस्थानुपपत्तिभयेन संस्कार्यत्वस्यापरिहार्यत्वादवश्यंभाव इतिचेत् तत्राह—**नच संस्कार्य** इति । संस्कार्यत्वं च संस्कर्तुमर्हत्वम् । तच्च क्षेत्रज्ञे नास्तीत्यर्थः । तत्र विशेषमाह—**स च द्विविध** इति । यद्वान् संस्कार्य उच्यते स संस्कारो द्विविध इति यावत् । द्वैविध्यमेवाह—**गुणेत्यादि** । प्रथमं निराकरोति—**नाद्यः** । न गुणाधानरूपसंस्कारयोग्योऽयं क्षेत्रज्ञ इत्यर्थः । यद्वा, पाठान्तरानुसारेण गुणाधेय—मलापनयनीयभेदात् संस्कार्यस्यैव द्वैविध्यम् । तत्रहेतुः—**नित्यज्ञानादिगुणवत्त्वादिति** । नोक्तसंस्कारवानयम् । नित्यगुणत्वात् । यन्नैवं तन्नैवम् । राजादिवत् । एतच्च शास्त्रमुखेनाह—**ज्ञोऽत एवेति** वक्ष्यमाणसूत्रमेव । तत्र श्रुतिवाक्यं चोदाहरति—**न हि विज्ञातुरित्यादि** । **स्मृतिश्च**—**एतद् यो वेत्तीति** । द्वितीयस्य व्युदासमाह—**नापीति** । दोषापनयनात्मकसंस्कारवान्न जीव इति यावत् । कुतः? । विज्ञानरूपत्वेनाऽस्पृष्टदोषगन्धत्वात् । नोक्तलक्षणसंस्कार्योऽयम् । अस्पृष्टदोषगन्धत्वात् । यन्नैवं तन्नैवम् । दर्पणादिवत् । ब्रह्मवदित्यन्वये च । उक्तेषु सर्वत्रापि योजनीयम् । तत्र, **विज्ञानरूपत्वेनेत्यस्यायं** भावः । प्राकृतवस्तुनः प्राकृतगुणस्य सजातीयसंबन्धो ज्ञायते । अस्य तद्विजातीयत्वान्न तथात्वमिति । तत्र श्रुतिं प्रमाणयति—**योऽयमित्यादि** ॥

असंस्कार्यत्वेऽनुपपत्तिं दर्शयन् शङ्कामारोपयति—**नन्वित्यादि**ना । क्षेत्रज्ञस्य प्रकृतिसंबन्धो न वेति द्वितीये बन्धमोक्षव्यवस्थानुपपत्तिरित्याह—**क्षेत्रज्ञस्य सर्वथा प्राकृतदोषसंबन्धाभावेऽभ्युपगम्यमाने** इत्यादि । आद्ये चोक्तानुपपत्त्यभावेऽपि असंस्कार्यत्वाभावेऽकामैरपि युष्माभिरभ्युपगम्य इत्याह—**संबन्धे**

त्येत्यादिना । उभयत्रापि पाशारज्जुरिति शङ्कार्थः । क्षेत्रज्ञस्व सर्वथैव दोषसंबन्धाभावान्नोक्तदोष इत्युत्तरमाह—नेति । भयथापि दोष आरोपयितुं शक्य इत्यर्थः । बन्धमोक्षव्यवर निरूपयन् द्वितीयपक्षं निराकरोति—तस्येत्यादिना । तत्र, नमेवेत्यत्रैवकारः स्वरूपव्यावर्तकः । संबन्धध्वंस इत्यनेन भावाद्भ्रान्तिर्वारिता । प्रकृतितत्संबन्धगुणादीनां ध्वंसाभावप्र योगितैव, नात्यन्ताभावप्रतियोगितेति भावः । यद्वा, ईश्वरापेक्ष ध्वंसाभावो, लौकिकापेक्षयाऽत्यन्ताभाव इति विवेकः । किञ्च धर्मस्य संकोचविकाशयोग्यतया आरोप्यकल्पनावकाशवत्त्वेऽ न स्वरूपे तद्भाव इति नान्यस्य दोषोऽन्यं दूषयितुं शक्त इ भावः । आद्याऽनुपपत्तिं वारयति—न स्वरूपत इति । अ न संस्कार्यत्वमिति निष्कर्षः ॥ ४ ॥

उपसंहरति—तत् सिद्धमित्यादि । इत्थमाश्रयतो नित्य त्वं प्रतिपाद्य विषयतोऽपि तत्त्वमाह—नापि विषयतस थात्वमिति । मोक्षस्य विषयांशतोऽपि तथात्वं क्रियाजन्य नास्तीत्यर्थः । को वा तस्य विषय इत्यत आह—विषयश्चेति ब्रह्मैवेति । नान्यः प्रत्यगात्मादिरित्यवधारणार्थः । उक्तार्थस सर्ववादिसम्मतत्वं दर्शयन् प्रमाणनिरपेक्षतामाह—तस्य चेत्य दि । तत्र सर्वेषामपीत्यत्रास्तिकपर एव सर्वशब्दो नेतव्यः नास्तिकानां विवादस्य तु विद्यमानत्वात् । तमेवातिदिश स्वरूपे तत्त्वं वार्यते—अत एव न स्वरूपतोऽपीति । उक्त न्यायादेवेत्यर्थः । आदिमद्वस्तुन उक्तदोषसहिष्णुत्वादस्यास तद्विलक्षणत्वान्न तथात्वमित्याह—तस्या इत्यादि । ब्रह्मानुभ तेरिति यावत् । ब्रह्मानुभूतिः शाश्वती, स्वाभाविकत्वात् क्रियाजन्यत्वाभावाच्च । ब्रह्मवत् । "स्वाभाविकी ज्ञानबलक्रि

च" इत्यादिशास्त्रमप्यत्रानुसंधेयम् । प्रकरणमुपसंहरति—तस्मान्न कथमपीत्यादि । केनाप्यंशेन, कुतर्कादिभिश्चेत्यर्थः ॥

भूयश्च प्रमाणाभासमाश्रित्य विवादायोत्तिष्ठते—नन्विति ।

ननु ध्यानस्योपासनात्मकत्वाद्, ध्येयस्य च ब्रह्मण उपास्यत्वेन, नेदं ब्रह्म यदिदमुपासते इत्यादिश्रुतिभिरब्रह्मत्वप्रतिपादनान्नोक्तसिद्धान्तो रमणीय इतिचेन्न । उक्तश्रुतीनामध्यासादिरूपोपासनपरत्वेन तन्निषेधस्य युक्तत्वान्नोक्तलक्षणब्रह्मनिषेधपरत्वम् । आरोप्यस्यैव निषेधविषयत्वं, न प्रमाणसिद्धवस्तुन इति न्यायस्य सर्वसंमतत्वात् । यथाऽन्यत्र नद्यादिजले गङ्गात्वमारोप्य पुनर्नेदं गङ्गात्वमिति निषेधसंभवान्न साक्षाद् विष्णुपादोदक्यां भागीरथ्यां तन्निषेधावकाशः । यथा वा, "पुरुषो वा व गौतमाग्निर्योषिद् वा व गौतमाग्निरि" त्यादिपञ्चाग्निविद्यायां योषित्पुरुषयोरुपासनार्थमाग्नित्वमारोपितं रूपकरीत्या, तन्निषेधश्चेदहंत्येव, नतु प्रसिद्धेऽग्नौ तन्निषेधस्पर्शः । प्रमाणसिद्धत्वात् । तथा प्रकृतेऽपि अतद्वस्तुषु "मनो ब्रह्मेत्युपासीते" त्यादिश्रुत्युक्तेषु मनोवागादिष्वारोपितब्रह्मत्वनिषेधो, न सर्वेश्वरे साक्षाद् ब्रह्मणि तत्स्पर्शः । एतच्च,

नेदं ब्रह्मेतीदंकारेणैव द्योत्यमानत्वान्न श्रुतार्थत्या-
गाश्रुतकल्पनाप्रसङ्गोऽवतारणीयः । इदङ्कारास्पद-
प्रपञ्चविलक्षणं ब्रह्मेति श्रुत्यर्थः । अन्यथा प्रसि-
तस्यैव निषेधे वेदस्यैवोन्मत्ततापत्तेः । तच्चानिष्टमेव
बौद्धमतापत्तेरिति ॥

नोक्तसिद्धान्तो रमणीय इतिचेदित्यन्वयः । रमणी-
यत्वाभावे किं बीजमितिचेत्तत्राह—ब्रह्मण उपास्यत्वेनेति
उपास्यत्वे किं दूषणमित्यत आह—नेदमित्यादि । श्रुतिभिरब्रह्म-
त्वप्रतिपादनात् । उपास्यत्वमेव कथं निश्चितमत्राह—ध्येयस्येति
ध्यानविषयस्येति यावत् । उपास्यत्वेऽपि हेतुः—ध्यानस्यो-
पासनात्मकत्वादित्यादि । वाक्यार्थाऽज्ञानाद् भ्रान्त्याऽऽशङ्क्य-
मित्याशयवांस्तन्निराकरोति—नेति । एतद् वैशद्येनाह—श्रुतीनामि-
ति । तासां नोक्तलक्षणब्रह्मनिषेधपरत्वमिति शास्त्रैकप्रमेयब्रह्मणो
निषेधायोगादित्याह—आरोप्यस्यैवेति । न प्रामाणसिद्धे-
स्यावधारणार्थः । पूर्वपक्षे पठितशास्त्रस्य प्रमेयब्रह्मनिषेधपरता
नास्तीत्युक्तम् । किं विषयकं तद् ? इत्यपेक्षायामाह—अध्यासा-
द्युपासनपरत्वेनेति । अध्यस्तोपास्यनिषेधपरत्वं तासामित्यर्थः ।
एतच्चाभीष्टमेवेत्याह—तन्निषेधस्य युक्तत्वादिति । ननु तर्हि
स्वार्थत्यागपरार्थकल्पनाप्रसक्तेर्मुख्यार्थबाधोऽवश्यं भावी, ब्रह्मेति
सामान्यनिर्देशादितिचेत् तत्राह—एतच्चेति । न श्रुतार्थत्या-
गाश्रुतकल्पनेति । कुतः ? नेदमित्यत्र पठितेदंकारपदेनैवोक्तार्थ-
स्य द्योत्यमानत्वादिति । न हि शास्त्रैकगम्यस्य ब्रह्मण इदंकार-
निर्देशविषयत्वमिति भावः । वाक्यार्थं चाह—इदंकारास्पदेति ।
इदंकारनिर्देश्यो यः प्रपञ्चस्तद्विजातीयं ब्रह्मेति मनोवागादिप्र-

पश्चाध्यस्तं ब्रह्म न भवति । तस्य मनआदीनां सर्वपदार्थानामन्तर्यामितया तद्भिन्नत्वात् । मनआदेश्च दृश्यत्वाच्च तस्य वैलक्षण्यं च । तस्मिन्नेव वाक्ये, "यद्वाचानभ्युदितं येन वागभ्युद्यते" इत्यादिना कण्ठरवेणैव पाठात् । वागभ्युद्यत इत्यनेनैव वागाद्यध्यस्तस्यैव निषेधविषयतालाभाच्च । व्यतिरेके दोषमाह—अन्यथेत्यादि । वेदस्यापि भ्रान्तित्वे अप्रामाण्यापातात् सर्वप्रमाणोच्छेदप्रसङ्ग इति भावः । उक्तसिद्धान्तं लौकिकवैदिकदृष्टान्ताभ्यामुपमिनोति—यथान्यत्रेत्यादि । स्पष्टार्थः संदर्भः ॥

भवेदेतत् । वेदस्याप्रामाण्यापातभयात् तत्प्रमितस्य ब्रह्मणो निषेधागोचरत्वमिति । तथापि तस्योपास्यत्वे मोक्षे सशरीरत्वं मुक्तस्य तदाश्रयस्यावश्यं भाव्यम् । एवं हि मुक्तशरीरनिषेधपराणां श्रुतीनामप्रामाण्यस्य तत्रापि तौल्यमेवेति तात्पर्येणाशङ्क्यते—नन्वित्यादिना ।

ननु ब्रह्मण उपास्यतायां मोक्षे शरीरत्वप्रसऽङ्गः । तथात्वे च "न ह वै शरीरस्य सतः प्रियाप्रिययोरपहतिरस्तीति, अशरीरं वा व सन्तं न प्रियाप्रिये स्पृशतः । अशरीरं शरीरेष्वनवस्थेष्ववस्थितम् । महान्तं विभुमात्मानं मत्वा धीरो न शोचति । अप्राणो ह्यमनाः शुभ्रः । असङ्गो ह्ययं पुरुष" इत्यादिवाक्यानां बाधप्रसङ्ग इतिचेन्मैवम् । तेषां प्राकृतोभयविधस्थूलसूक्ष्मशरीरनिषेधपरत्वात् । नैतावता मोक्षे शरीराभावः प्रतिपादयितुं योग्यः । "यक्ष्यन् क्रीडन् रममाणः सह ब्रह्मणा"

इत्यादिश्रुतिप्रमेयत्वात् । अन्यथा ईश्वरे सुखादि-सम्बन्धे सम्भाविते सति अज्ञत्वप्रसक्त्या सार्व-ज्ञ्यादिहानिः । तत्राप्यज्ञाने कल्प्यमाने जीवसा म्यापत्तेः । तथात्वे च "तमीश्वराणां परमं महे-श्वरम् । न तत्समश्चाभ्यधिकश्च दृश्यते । स्वा-भाविकी ज्ञानबलक्रिया च । यः सर्वज्ञः सर्ववित् । यस्य ज्ञानमयं तपः" इति ब्रह्मस्वरूपप्रतिपादक-श्रुतिकदम्बबाधापत्तेश्च ॥

ब्रह्मण उपास्यतायां मोक्षे शरीरत्वप्रसङ्ग इति । शरीराभावे उपासनानुपपत्तेरिति भावः । तथात्वे चेति । शरी-रत्वे सति । "न ह वै शरीरस्य सतः । अशरीरं वा व सन्तम्" इत्यादिवाक्यानां बाधप्रसङ्गादिति । मोक्षस्वरूप-विषयकप्रमाणबाधे तत्प्रमेयस्य मोक्षस्यैवासिद्धेरिति शङ्कानि-ष्कर्षः । निषेधवाक्यानां विषयस्य सत्त्वान्न बाध इत्याशयेनोत्त-रमाह—मैवमिति । एवं श्रुतीनां बाधशङ्कां मा कार्षीरित्यर्थः । कुतः ? । तेषां प्राकृतोभयविधेत्यादि । तर्ह्यागतोऽसि नो मार्गे । सिद्धो मोक्षे शरीराभावस्तदभावे चोपासनाभाव एव । तत्साधनाभावादितिचेत् तत्राह—नैतावता मोक्ष इत्यादि । एतावता प्राकृतशरीराभावमात्रेण दिव्याऽप्राकृतशरीरस्य श्रुति-प्रमाणसिद्धत्वादित्याह—यक्ष्यन् क्रीडन्नित्यादि । व्यतिरेके दोषमाह—अन्यथेति । शरीरमात्रस्य दुःखादिसंबन्धनियमस्वी-कारे । ईश्वर इति । सुखादीनां पुण्यादिकर्मकार्यत्वात् कर्मण-श्चाज्ञानरूपत्वात् । सार्वज्ञ्याज्ञत्वयोः परस्परात्यन्तविरुद्धत्वादिति

भावः । ननु भवेदेतदस्माकं पक्षे ज्ञानाज्ञानयोरविद्याकल्पितत्वादितिचेत् तत्राह—तत्रापीति । तस्मिंश्चापि सर्वेश्वरे अज्ञाने कल्प्यमाने सति अज्ञत्वाविशेषाज्जीवसाम्यापत्तेरिति । भवत्वेवं, तत्रापि विक्षेपादिदर्शनाद् विक्षेपादेश्चाज्ञानत्वप्रसिद्धेरिति चेत् तत्राह—तथात्वे चेति । ईश्वरस्य जीवसाम्यापत्तौ सत्यां स्वरूपप्रतिपादकशास्त्रबाधापत्तौ तवापि सिद्धान्तभङ्गस्तुल्य एव । अयं भावः । ज्ञानाज्ञानयोरविद्याकल्पितत्वादित्युक्तम् । तत् पृच्छयते । सा कल्पनाकारणीभूताऽविद्या जीवनिष्ठा ? ब्रह्मनिष्ठा वा ? । नाद्यः । भवतां जीवस्य प्रतिबिम्बस्वरूपत्वेन जडत्वात् । ब्रह्मभिन्नानङ्गीकाराच्च । नापि द्वितीयः । तस्य स्वयंप्रकाशत्वेन प्रकाशतमसोरिवात्यन्तविरुद्धत्वात् । ब्रह्मणोऽप्याविद्यकत्वे च जीववत्तदभावप्रसङ्गाच्च । किञ्च अविद्या । सहेतुकी ? निर्हेतुकी वेति ? । आद्ये तस्यापि कारणान्तरकल्पनेऽनवस्थापत्तेः । द्वितीये मुक्तानां भूयोऽपि बन्धप्रसङ्गात् । अस्माकं तु कर्मसंस्कारादेरनादित्वेऽपि भगवत्कृपाकटाक्षेणोक्तरीत्या तत्सम्बन्धनिवृत्तेर्नासमञ्जसमिति श्रुतीनामयमर्थः ।

न ह वा इति । प्रकृतिकार्यभूतोभयशरीरस्य सतः सुखदुःखयोर्नाशो नास्तीति प्राकृतशरीरसंबन्धरहितं मुक्तं सुखदुःखे न स्पृशत इति । "अशरीरं शरीरेष्वि" त्यादिवाक्यं तु ब्रह्मस्वरूपपरम् । तथाहि । आत्मानम् अन्तर्यामिणं मत्वा धीरो न शोचति । कीदृशं, महान्तं निरतिशयबृहद् ब्रह्मेति यावत् । विभुं विभुपरिमाणकम्, अनवस्थेषु क्षणभङ्गुरेषु शरीरेषु ब्रह्मादिस्थावरान्तेषु तन्नियामकत्वेनावस्थितमिति । अन्तर्यामिणः स्थूलशरीरसंबन्धवारणपरमिदं वाक्यम् । अप्राण इति । प्राणादिसंबन्धशून्यः । तेषां प्रकाशकत्वादिति तस्यैव सूक्ष्मशरीरसंबन्धं वारयति ॥

अपिच । ब्रह्मणो वेदनस्यैव ध्यानज्ञानशब्दाभ्यां शास्त्रमुखेन प्रतिपाद्यमानत्वादित्युक्तम् । तत्रानुपपत्तिमारोपयन्नाह—नन्विति ।

ननु "अन्यदेव विदितादथो अविदितादधि, येनेदं सर्वं विजानाति तं केन विजानीयात्, तदेतद् ब्रह्मापूर्वमनपरमनन्तरमबाह्यम्, अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात् कृताकृतात्, अन्यत्र भूताच्च भव्याच्च यत् तत् पश्यसि तद् वद" इत्यादिश्रुतिभिर्वेदनादिक्रियाऽविषयताया निर्णीयमानत्वात् कथं तस्य ध्येयत्वमिति चेन्मैवम् । तासां ब्रह्मणो रूपगुणादीनामियत्तानिषेधपरत्वात् । तदनङ्गीकारे "तरति शोकमात्मवित् । ब्रह्म वेद ब्रह्मैव भवति । तस्मिन् दृष्टे परावरे । आनन्दं ब्रह्मणो विद्वान् । यदात्मानमेवावेद् । को मोहः कः शोकः एकत्वमनुपश्यतः । तद्धैतत् पश्यन्नृषिर्वामदेव" इत्यादिवाक्यकदम्बैर्वेदनदर्शनादिविषयत्वेन ब्रह्मप्रतिपादनपरैर्मोक्षविधायकैर्विरोधेन निर्मोक्षप्रसङ्ग इति पौनःपुन्यनोक्तमेव । अन्यथा शास्त्रयोनित्वस्यैवासिद्धेः ॥

कथं तस्य ध्येयत्वमितिचेदित्यन्वयः । तस्य ब्रह्मणो ध्यानादिविषयत्वमसंभावितमित्यर्थः । का वात्रासंभावनेतिचेदत्र

आह—अन्यदेव विदितादथोऽविदितादधि, येनेदं सर्वमित्यादिश्रुतिभिः। वेदनादिक्रियाविषयताया निर्णीयमानत्वादिति। तद्विरुद्धवेदनादिविषयतास्वीकारे श्रुतिकदम्बबाधो महान् दोषः। स च वैदिकानामनिष्टतमस्तदेवासंभावनाबीजमिति निष्कर्षः। "आत्मा वा रे द्रष्टव्यः। परिपश्यन्ति धीराः। ब्रह्म वेद ब्रह्मैव भवती" त्यादिश्रुतिविरोधादित्यादिना पूर्वोक्तमेवोत्तरमनूद्य स्मारयति—मैवमिति। भूय एवं मा वद। कुतः ?। तासामित्यादि। पौनः पुन्येनोक्तमेवेत्यत्रावधारणेन शङ्कायाः पुनरुक्तत्वाद् वैयर्थ्यमेवेति द्योतितम्। दोषान्तरमाह—अन्यथा शास्त्रयोनित्वस्यैवेति। श्रुत्यर्थस्तु—अन्यदेवेति, तद् ब्रह्म विदितात् परिच्छिन्नज्ञानविषयात् कार्यादाकाशादेरन्यदेव विलक्षणम् अपरिच्छिन्नत्वात्। मायावादिभिर्जीवस्यापि स्वरूपतो विभुत्वाङ्गीकारात् सिद्धान्तेऽपि जीवस्य जडवर्गाद् वैलक्षण्यं ज्ञानेन धर्मेण विभुत्वं च स्वीक्रियतेऽतो जीव एवास्तीतिचेत् तत्राह—अथो अविदितादधीति। अविदितादतीन्द्रियात् क्षेत्रज्ञादधि अधिकमित्यर्थः। यद्वा अविदितात् कारणात् प्रधानमहदादिवर्गादधिकमिति। यद्वा, विदिताल्लौकिकाद् बद्धजीवादन्यद् भिन्नम्। अविदितान्मुक्तादप्यधिकम्। तयोर्नियामकत्वात्। "प्रधानक्षेत्रज्ञपतिर्गुणेश" इति श्रुतेः। तदेवाह—येन ज्ञापयित्रा स्वतन्त्रेण प्रेरित इदं सर्वं विजानाति। "यद्विज्ञातेन सर्वं विज्ञातं स्यादि" तिश्रुतेः। तत्परतन्त्रो ज्ञाता जीवस्तत्प्रसादं विना केन साधनेन विजानीयात्। न केनापीत्यर्थः। "भक्त्या मामभिजानाति। मद्भक्त एतद् विज्ञाये" त्यादिभगवदुक्तेः। एतद् ब्रह्म कीदृशं तद् अपूर्वं पूर्वं ज्येष्ठं यस्य नास्ति तत्। सर्वतो भूयस्त्वात्। अनपरमिति। न परं साम्यं यस्य

तत् । अनुपमेयत्वात् । "न तत्समश्चाभ्यधिकश्च दृश्यते" इति श्रुतेः । "न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्य" इति स्मृतेश्च । अनन्तरमिति । अन्तरमन्तःकरणं यस्य नास्ति तत् । "अप्राणो ह्यमना" इति श्रुतेः । अबाह्यमिति । बाह्यं बहिर्यस्मान्न किञ्चिदस्ति । सर्वस्य तदाधेयत्वात् । आधेयस्याधाराद् बहिःस्थित्यदर्शनाच्च । "यत् प्रयन्त्यभिसंविशन्तीति" श्रुतेः । यद् वस्तु धर्मादिभ्यो वैलक्षण्येन पश्यसि तद् वदेत्यर्थः । तत्र धर्माद् धर्मफलाद् वैषयिकसुखाद्, अधर्मात् पापफलाद् दुःखात्, कृतात् कार्यादाकाशादेरकृतात्, कारणात् प्रधानादेर्भूतादतीतकालाद्, भव्याद् भाविनश्चकाराद् वर्तमानात् । द्वितीयश्चकारः स्वभावादिसमुच्चयार्थः । उत्तरश्रुतीनां प्रायः स्पष्टोऽर्थः । तत्र, को मोह इति । उभयोर्जडचेतनवर्गयोरन्तर्यामिणः सर्वकारणस्यैकत्वं नैरन्तर्येण पश्यतः पुंसः शोकादयो न सन्तीति समुदायार्थः । शोकादीनां तत्कारणानाञ्च स्वातन्त्र्याभावात् । यदात्मानमिति । अत्रात्मशब्दः परमात्मवाची । आत्मैवैक एवाग्र आसीदिति तैत्तिरीये प्रसिद्धः ॥

यस्यामतं तस्य । विज्ञातमविजानतामित्यादिना ब्रह्मज्ञानाभाववतां ज्ञातृत्वप्रतिपादनान्निर्मोक्षप्रसङ्गो वाच्यः । तज्ज्ञानाभावस्यैव ज्ञानत्वेनोपचरितत्वात् तेन मोक्षसंभवादित्याशयेनाक्षिप्यते—नन्वित्यादि ।

ननु, "यस्यामतं तस्य मतं मतं यस्य न वेद सः । अविज्ञातं विजानतां विज्ञातमविजानताम् । न हि दृष्टेर्द्रष्टारं पश्ये । न हि विज्ञातेर्विज्ञातारं विजानीयाम्" इत्यादिश्रुतिभिस्तदज्ञातत्वप्रपञ्चनान्न निर्मोक्षप्रसङ्गो वक्तुं योग्य इति

चेन्न। आश्वकीटादीनां तदज्ञानस्याविशेषात् सर्व-
मोक्षप्रसक्तेः शास्त्राचार्यसंततिवैयर्थ्यापत्तेः। किञ्च
अन्यदेव विदितादित्यत्र वेदननिषेधवद्, अथोऽ
विदितादधीत्यनेन वाक्यशेषेणावेदनस्यापि निषि-
द्धत्वाद्, अन्यत्र धर्मादित्यत्रापि वाक्यशेषे, यद्वै
पश्यसि तद् वदेति वेदनदर्शनादिविषयत्वेनैवोप-
संहाराच्च। तस्मादुभयविधश्रुतीनां प्रामाण्यप्राब-
ल्याविशेषात् तासां बाधनिरासार्थमुक्तैव गतिरा-
श्रयणीया। समुद्रं पश्यामि, कियानित्येतन्न जाना-
मीति प्रतीतिवत् प्रकृतेऽपि उभयथा समञ्जस-
मेव। किञ्च, " तद् यथा निर्ल्वयनी वल्मीके
मृतायास्ता शयीतैवमेवेदं शरीरं शेतेऽथायम-
शरीरोऽमृतः प्राणो ब्रह्मतेज एवेति सचक्षुरच-
क्षुरिव सकर्णोऽकर्ण इव सवागवागिव समना
अमना इव सप्राणोऽप्राण इवेति। आत्मानं
चेद् विजानीयादयमस्मीति पूरुषः। किमिच्छन्
कस्य कामाय शरीरमभिसंज्वरेद्" इत्यादिवा-
क्यान्युक्तलक्षणनिष्ठावतो विदुषः प्रकृतिसंबन्धे
सत्यपि देहद्वयाभिमानशून्यतां बोधयन्ति सन्ति
तत्कृतार्थतामाहुः। नच जीवन्मुक्तस्वरूपपराण्ये-

तानीति वाच्यम् । "तस्य तावदेव चिरं यावन्न-विमोक्ष्ये अथ संपत्स्ये" इति श्रुत्या तस्य मोक्षे चिरमित्यनेन कालप्रतिबन्धकता, न विमोक्ष्य इत्यनेन मोक्षाभावः । अथ संपत्स्य इत्यनेन भविष्यत्काले तत्प्राप्यता च स्पष्टं कण्ठरवेण प-ठ्यते । अनेन ज्ञानकाल एव मोक्ष इत्यपि नि-रस्तं वेदितव्यम् । नच "अत्र ब्रह्म समश्नुत इति श्रुतिविरोध इति शङ्क्यम् । ध्यानेऽपि ब्रह्मानुभूतेः सत्त्वान्न तूक्तलक्षणो मोक्ष इत्यलं विस्तरेण । अग्रे समन्वयस्य विस्तरणीयत्वात् ॥

श्रुतिभिस्तद्ज्ञातत्वप्रपञ्चनादिति । तज्ज्ञानाभावस्यैव ज्ञानत्वेन मोक्षसाधनत्वात् तदेव ऋते ज्ञानान्न मुक्तिरित्यादिना ज्ञानशब्देनोपचर्यत इति भावः । तत्र समाधानमाह—नेति । ब्रह्मज्ञानाभावोऽज्ञानत्वेनोच्यत इति सत्यं ज्ञानाभावशब्देन ब्रह्म-स्वरूपादिज्ञानस्य स्वरूपतोऽभावो विवक्षितः ? स्वरूपादीय-त्ताभावो वा ? । न द्वितीयः । अस्मत्पक्षे नेष्टत्वात् । तच्चोक्त-मेव । नाद्योऽपि पक्षः संभवतीत्याह—आश्वकीटादीनामिति । श्वकीटादिनित्यनारकीयाणामपि तदज्ञानस्य विशेषाभावात् सर्व-मोक्षप्रसक्तेरिति । तत्रापि हेतुः—शास्त्राचार्येति । श्रुत्यर्थ-स्तु—यस्यामतमिति । यस्य पुंसो देशादिपरिच्छेदेनामतम् अज्ञातं तस्य मतं ज्ञातं भवति । यस्य तु परिच्छेदेन मतं स न वेद, न जानाति । परिच्छिन्नदर्शित्वात् । तदेव द्रढयति—विजा-

नतां परिच्छिन्नज्ञानवताम् अविज्ञातम् । परिच्छेदमविजानतां विज्ञातम् । वाक्यान्तरं व्याचष्टे—दृष्टेश्चक्षुर्जन्याया वृत्तेः कर्मभूताया द्रष्टारं स्वाभाविक्या दृष्ट्या व्यापारं दृश्यमानया दृष्ट्या न पश्येदित्यादिना मैत्रेयीं प्रति याज्ञवल्क्यवचनम् । तथाच भगवदुक्तेः—दिव्यं ददामि ते चक्षुः पश्य मे योगमैश्वरमिति । विज्ञातेर्बुद्धिवृत्तेर्निश्चयलक्षणाया विज्ञातारं तयैव वृत्त्या तत्प्रसादं विना विज्ञातारं न विजानीयाः । तत्प्रसादैकगम्यत्वात् । यद्वा दृष्टेरित्यादिना स्वाभाविकीनां क्षेत्रज्ञस्य शक्तीनामेव ग्रहणम् । न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यतेऽविनाशित्वादित्यादिना श्रवणात् । तथा च क्षेत्रज्ञस्य स्वाभाविक्या दृष्टेर्दर्शनशक्तेरपि द्रष्टारं तस्या अप्यन्तर्यामिणं तत्प्रयोज्यद्रष्टीत्वं न पश्येः । यावद् भगवत्प्रसादं तस्याः संकोचात् । एवमग्रेऽप्यूह्यम् । यत्प्रमाणबलेन शङ्कितं, तेनैव तदघटनां दर्शयति—किञ्चेति । अन्यदेव विदितादित्यस्मिन् वाक्ये यथा वेदनस्य निषेधं भवद्भिः स्वीकृत्य शङ्क्यते तथा तत्रैवावेदनस्यापि निषेधस्तुल्य एव । तथात्वे शून्यवादापत्तिरिति भावः । उक्तन्यायमत्राप्यतिदिशति, अन्यत्र धर्मादित्यत्रापि सिद्धान्तमाह—तस्मादुभयश्रुतीनामिति । तमेव विदित्वाऽतिमृत्युमेति, अन्यदेव विदितादित्याद्युभयप्रकारिकाणामित्यर्थः । उक्तार्थे लौकिकानुभवं प्रमाणयति—समुद्रमित्यादिना । इदानीं ब्रह्मनिष्ठस्य प्रकृतिवियोगात् पूर्वमपि कृतकृत्यतां दर्शयति श्रुतिवाक्यैरेव—किञ्चेति । तद्यथा निर्ल्वयनीति विदुषः प्रकृतिसंबन्धे सत्यपि कृतार्थतां बोधयन्ति वाक्यान्येव । न वयं स्वातन्त्र्येण कथयाम इत्यर्थः । श्रुत्यर्थश्च यथालोकेऽहेर्निर्ल्वयनी सर्पविनिर्मुक्ता त्वग् वल्मीके प्रत्यस्ता प्रक्षिप्ता मृता पूर्वमिव सर्पेणात्मतयाऽगृहीता वर्तत एवमेवेदं विदुषः शरीरं प्रागे-

वात्माभिमानिनागृहीतं प्रकृतिवियोगपर्यन्तं तिष्ठतीत्यर्थः। त्वचा शरीरस्य साम्यमुक्त्वा विदुषः सर्पसाम्यं दर्शयति—अथेति। दृष्टान्तेऽथशब्दः। यथा सर्पो त्वचम् अहिरहमिति न मन्यते तथायं विद्वान् देहस्थोऽपि तत्राहमिति बुद्धि न करोति। अहंकारममकारास्पदयोर्भगवद्विभूतित्वेन निश्चयात्। अशरीरः शरीराभिमानशून्योऽत एव अमृतो देहकार्यप्रमादादिरहितः, प्राणः प्राणसहितो, ब्रह्मतेजो ब्रह्मणोंऽशः। एवं स्थूलदेहाभिमानं निरस्य वाक्यान्तरेण सूक्ष्मदेहाभिमानाभावमपि दर्शयति—सचक्षुरित्यादि। चक्षुषा युक्तोऽपि तत्कार्यप्राकृतरूपासक्तेरभावादचक्षुरिव। श्रोत्रसहितोऽपि तत्कार्यबाह्यशब्दसङ्गाभावादकर्ण इव। वागिन्द्रिययुक्तोऽपि तत्कार्यवृथालापशून्यत्वान्मूक इव। मनसा युक्तोऽपि तत्कार्यनानासंकल्पहीनत्वादमना इव। प्राणसहितोऽपि तत्कार्यबाह्यशब्दसङ्गाभावादकर्ण इव। वागिन्द्रिययुक्तोऽपि तत्कार्यवृथालापशून्यत्वान्मूक इव। मनसा युक्तोऽपि तत्कार्यनानासंकल्पहीनत्वादमना इव। प्राणसहितोऽपि तत्कार्यबलज्ञापनादिशून्यत्वादप्राण इव। चक्षुरादीन्द्रियतद्वृत्तीनां प्रयोजकनियन्तृपारतन्त्र्यप्रवृत्तिज्ञानात् तेषु स्वातन्त्र्यप्रवृत्तिसामर्थ्याभावनिश्चयाच्च न तत्राभिमानं धत्ते। स्वात्मना सह सर्वेषामपि तत्पारतन्त्र्यादिति भावः। इत्थं देहद्वयेऽनात्मवर्गे आत्मत्वाभिमानाभावं प्रदर्श्य वाक्यान्तरेण तत्कृतार्थत्वं द्योतयति—आत्मानं चेदिति। चेदिति संदिग्धशब्दप्रयोगात् तस्य विदुषोऽत्यन्तदौर्लभ्यं द्योतयति। यदि श्रीभगवन्निर्हेतुककृपाकटाक्षेण कोटिकोटीनां क्षेत्रज्ञानां मध्ये कश्चिदात्मानं विजानीयात् स्वरूपं निश्चिनोति। कथमितिचेदत आह—अयमस्मीति। सर्वज्ञाऽनन्ताचिन्त्यशक्तेर्भगवतोंऽशभूतोऽयं ब्रह्मात्मकस्तन्नियोज्यस्तदा-

त्मीयचिदानन्दस्वरूपः साक्षादहमस्मीति, न तु देहद्वयरूपो न तत्संबन्धवान्, अत एव न तद्गुणशोकादिभागिति । तर्हि, किमिच्छन्निति । किं स्वर्गाद्यामुष्मिकं फलमिच्छन् । कस्य कामायेति, कस्य वा पुत्रराज्यादेरैहिकस्य विषयस्य प्राप्तये । शरीरमनुसंज्वरेदिति । शरीरमिस्रनेन यद्यपि स्वस्य तत्रात्मत्वाभावात् तत्कृतसंतापो नास्ति, केवलं शारीरतापनमेव निरभिमानिनां क्रियाकरणम् । यदि काचित् फलप्राप्तिरवशिष्येत तदा तदर्थं तदुपाये प्रवृत्तिः । तस्य त्वेतन्नास्त्येव । किमर्थं शरीरं संज्वरेत् । ऐहिकामुष्मिकयोः फलयोः प्राकृतत्वेन नश्वरत्वाद्, यथेह कर्मचितो लोकः क्षीयत एवमेवामुत्र पुण्यचितो लोकः क्षीयत इति श्रुतेः, क्षीणे पुण्ये मर्त्यलोकं विशन्तीति स्मरणाच्च, तद्भोक्तुश्च संसारित्वाद्, गतागतं कामकामा लभन्ते इति भगवदुक्तेः, स्वस्य च निरतिशयानन्दब्रह्मांशत्वनिश्चयेन तदात्मीयत्वेन तदात्मकत्वेन च समाप्तसर्वपुरुषार्थत्वात् । तथाच वक्ष्यते स्वयमेव भगवान् सूत्रकारः । अंशो नानाव्यपदेशात् । उक्तं श्रीभगवतापि साभिमानवचनेन—ममैवांशो जीवलोके जीवभूतः सनातन इति । अयं भावः । लोके तावद् वासनायुक्तस्य तत्साधनसम्पादनसमर्थस्य तदुपायफले विदुषश्च प्रवृत्तिदर्शनात् । तथाचाह भगवाञ्जैमिनिः । अर्थी समर्थो विद्वानधिकारी । अस्य तु अधिकारिविशेषणाभावादधिकाराभावः । तथाहि । न तावत् तस्यार्थित्वसम्भवः । ऐहिकामुष्मिकयोस्तुच्छत्वनिश्चयात् । नापि सामर्थ्यवत्त्वम् । साध्यसाधनकर्तृभोक्तृणां भगवत्पारतन्त्र्यज्ञानात् । फलविषयकविद्वत्त्वेऽपि पारतन्त्र्यनिश्चयादेव विद्वत्ताराहित्यात् प्रवृत्त्यधिकारिणः सकाशात् तस्यात्यन्तवैलक्षण्यमिति । ननु प्रकृतिसम्बन्धे

सति देहाभिमानभावस्य दुर्निवर्त्यत्वात् कुतः कृतार्थत्वम् । नचोक्तश्रुतीनां निर्विषयत्वापत्तिः कल्पनीया । तासां जीवन्मुक्तविषयकत्वादितिचेत् तत्राह—नच जीवन्मुक्तेत्यादि । अत्र प्रमाणं दर्शयन्ननुपपत्तिमाह—तस्येति । स्पष्टोऽर्थः । जीवन्मुक्तेति संज्ञामात्राभ्युपगमे न कश्चिल्लाभः । नेत्रहीनस्य कमलनयनेति संज्ञावदिति भावः । केषाञ्चिज्ज्ञानकालीन एव मोक्ष इत्याग्रहस्तान् प्रत्याह—अनेनेति । जीवन्मुक्तानुपपत्तिप्रतिपादनेन । ननु ब्रह्मप्राप्तिलक्षणमोक्षप्रतिपादकवाक्यानां कथं निर्वाह इतिचेत् तत्राह—नचात्र ब्रह्मेति । ध्यानेऽपीति । भगवत्स्वरूपादिध्यानेऽपि तत्सम्भवस्य सत्त्वादिति भावः । विस्तरादुपरमन्नाह—अलं विस्तरेणेति । ननु विस्तराभावे कथं ज्ञानं, ज्ञानाभावे कथन्तरां जिज्ञासावतां प्रवृत्तिरित्यत आह—अग्रे समन्वयस्येति । अग्रेऽग्रिमग्रन्थेऽस्मिन्नेवाध्याये समन्वयस्य समन्वयप्रकारविशेषस्य भगवता सूत्रकृतैव विस्तरिष्यमाणत्वादित्यर्थः ॥

चतुःसूत्र्यर्थमुपसंहरन्नाह—तत् सिद्धमिति ।

तत् सिद्धं सर्वज्ञे स्वाभाविक्यचिन्त्यानन्तशक्तौ शास्त्रयोनौ ब्रह्मणि पुरुषोत्तमे अस्पृष्टमायागुणासंबन्धगन्धमाहात्म्ये भगवति श्रीकृष्णे वेदान्तस्य तद्वाचकतया समन्वयः, समन्वितश्च वेदान्ते वाच्यतया भगवान् वासुदेव इति । तस्मादेव जिज्ञासाविषय इति । तथाहि । यतो वा इमानि भूतानि जायन्ते इति यच्छब्देन जग-

* श्रीसर्वेश्वरो विजयते *

॥ श्रीभगवन्निम्बार्कमहामुनीन्द्राय नमः ॥

श्रीभगवद्देवाचार्यपादप्रणीतवेदान्त-
जान्हव्याख्यव्याख्यानेन सनाथीकृतम् ।

# श्रीब्रह्मसूत्रम् ।

## द्वैताद्वैतदर्शनम् ।

( ५ ईक्षत्यधिकरणम् । सू० ५-१२)

### ईक्षतेर्नाशब्दम् ॥ ५ ॥

इत्थं चतुर्भिः सूत्रैः "यतो वा इमानि भूतानि जायन्ते" ( तै. ब्रा. ३-१ ) इत्यादिलक्षणलक्षितं सर्वज्ञं सर्वशक्ति शास्त्रैकप्रमाणकं तत्समन्वितं ब्रह्म जिज्ञास्यमिति प्रतिपादितम् । इदानीं प्रधानादिषूक्तलक्षणस्यातिप्रसङ्गं वारयता समन्वयप्रकारः प्रपञ्च्यते भगवता सूत्रकारेण "ईक्षतेर्नाशब्दम्" इत्यादिभिः । छान्दोग्ये ह्यत्रमाम्नातं-"सदेव (१)सोम्येदमग्र आसीत् । एकमेवाद्वितीयम् ।तदैक्षत बहु स्यां प्रजायेय । तत्तेजोऽसृजत" (छा. उ. ६-२-१, २, ३) इत्यादि । तत्र संशयः-अस्मिन्वाक्ये सच्छब्देन प्रतिपाद्यं जगत्कारणं प्रधानमुत परं ब्रह्मेति । तत्राचेतने ह्यानुमानिके वेदान्तसमन्वयमारोप्यावतिष्ठन्तः सांख्या आहुः प्रधानमेवेति । न च ज्ञानक्रियाहीनस्याचेतनस्य कथं कारणत्वमिति वाच्यं, ज्ञानकारणस्य सत्त्वस्य तत्र भावात् सर्वज्ञत्वं, रजोगुणभावाच्च क्रियाशक्तिमत्त्वं चावि-

(१) 'सौम्य' आदर्शपुस्तके ।

रूढम् । तस्मात्प्रधानमेव जगत्कारणम् । न हि चेतन(स्य)कारणता वाच्या, चिन्मात्रस्य निर्धर्मकस्य कूटस्थत्वात्; इति चेत् ? तत्राह– **ईक्षतेर्नाशब्दमिति** । आनुमानिकं प्रधानं जगत्कारणं न भवेत् । कुतः ? अशब्दमिति । न शब्दः श्रुतिप्रमाणं यस्मिंस्तदशब्दम्, अश्रौतमिति । हेतुगर्भितमिदं विशेषणम् अशब्दत्वात् । तत्रापि हेतुः ईक्षतेरिति । ईक्षतिशब्दो धातुवाची तदर्थपरत्वेन व्याख्येयः । तेन च जगत्कारणस्य तत्तत्प्रकरणेषु सर्वत्रेक्षणश्रवणादित्यर्थः । ईक्षणं नाम पर्यालोचनम् अध्यवसाय इति यावत् । तस्य तु चेतनासाधारणधर्मत्वेनाचेतने प्रधानेऽसम्भवात् । नापि सत्त्वादिमत्त्वेन ज्ञानक्रियाशक्तिमत्त्वं घटते, साम्यावस्थायां तस्य गुणत्वाभावात् । गुणसाम्यं प्रधानं निर्णीयमानत्वाच्च । नापि निर्धर्मकं ब्रह्म तस्य ज्ञानक्रियादीनां स्वाभाविकशक्तीनां शास्त्रसिद्धत्वात् ।

> "न तस्य कार्यं करणं च विद्यते
> न तत्समश्चाभ्यधिकश्च दृश्यते ॥
> पराऽस्य शक्तिर्विविधैव श्रूयते
> स्वाभाविकी ज्ञानबलक्रिया च" ॥

( श्वे० उ० ३–१९ ) इत्यादिश्रुतेः । "तदैक्षत बहु स्यां प्रजायेय" ( छा० उ० ६–२–२ ) तथाऽन्यत्रापि सृष्टिप्रकरणे ईक्षणश्रवणात्–"स ऐक्षत लोकानुसृजा इति । स इमाँल्लोकानसृजत" ( ऐ. उ. १-१-१ ) "स ईक्षां चक्रे, स प्राणमसृजत" ( प्र० उ० ६–३ ) इत्यादिश्रुतेः । अतश्चेतनं सर्वज्ञं परं ब्रह्मैव कारणं, तदेव सच्छब्दवाच्यमिति ॥ ५ ॥

ननु स्यादेतदीक्षणस्य चेतनासाधारणधर्म[त्व]मिति, तथापि नैतन्मात्रेण ब्रह्मैव जगत्कारणमिति निश्चेतुं शक्यम्, अचेतन-

ऽपि चेतनवदीक्षणादेरुपचारदर्शनात् । पतनासन्नं कूलमालक्ष्य 'कूलं पिपतिषति' इति, शुष्कपङ्कां कृषिमालक्ष्य 'कृषिर्वृष्टिं प्रतीक्षते' इति च प्रयोगस्य लोकप्रसिद्धत्वात् । एवमचेतने प्रधानेऽपि चेतनवदीक्षणमौपचारिकमस्तु । ननु मुख्यमीक्षितृत्वं त्यक्त्वा कुत औपचारिककल्पनेति वाच्यं, "तत्तेज ऐक्षत बहु स्यां प्रजायेय तदपोऽसृजत" ( छा० उ० ६-२-३ ) "ता आप ऐक्षन्त बह्व्यः स्याम प्रजायेमहीति, ता अन्नमसृजन्त" ( छा० उ० ६-२-४ ) इत्यादिनाऽचेतनयोरप्तेजसोः चेतनवदुपचारदर्शनात् । तस्मात्सकर्तृकमीक्षणमौपचारिकमिति श्रुत्याऽप्यवगम्यते उपचारप्रायवचनादिति प्राप्ते आह--

## गौणश्चेन्नात्मशब्दात् ॥ ६ ॥

सच्छब्दवाच्यं प्रधानमेवेक्षणं तत्र गौ(१)ण इति चेदिति, तत्रोत्तरमाह--नेति । कुतः ? आत्मशब्दादिति । सच्छब्दवाच्यस्यात्मशब्देन परामर्शदर्शनात्--"सदेव सौम्येदमग्र आसीत्" इत्युपक्रम्य "ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो" ( छा० उ० ६-१४-३ ) इति । न ह्यचेतनं प्रधानमात्मशब्दाभिधेयं भवति । नापि चेतनस्य जिज्ञासोः श्वेतकेतोरचेतनं प्रधानमात्रं भवितुमर्हति । अतः सच्छब्दवाच्यं सर्वनियन्तृ ब्रह्मैव । 'कूलं पिपतिषति' इत्यादौ तु युक्तं गौणत्वं संशयस्थान एव प्रायपाठस्य निश्चायकत्वात् । अत्र प्रकृते तु गौणमुख्ययोर्गौणस्य जघन्यत्वेन संशयाभावात् । तथा चाह भगवान् जैमिनिः--"विशये प्रायदर्शनात्" ( जै. सू. २-३-६-१६) इति । विशये नाम संशयस्थले प्रायदर्शनादिति प्रायदर्शनस्य निश्चायकत्वादिति तदर्थः । तस्मात्त सच्छ-

(१) ईक्षणशब्दवाच्य गौण इत्यर्थः ।

न्दवाच्यमचेतनम् ॥ ६ ॥

तत्रैव हेत्वन्तरं चाह--

## तन्निष्ठस्य (१)मोक्षव्यदपदेशात् ॥ ७ ॥

तस्मिन्सर्वज्ञे सर्वशक्तौ सच्छब्दवाच्ये ब्रह्मणि सर्वकार नि(२)ष्ठा यस्य स तन्निष्ठस्तस्य मोक्षव्यपदेशात् । "आचार्य वान् पुरुषो वेद, तस्य तावदेव चिरं यावन्न (३)विमोक्ष्ये । अ संपत्स्ये" (छा. उ. ६-१४-२) इत्यादिना ब्रह्मसाम्यापत्तिल क्षणस्य मोक्षस्य प्रारब्धमात्रप्रतिबन्धश्रवणान्नहि प्रधाननिष्ठस मोक्षोपदेशसंभवः । यदि प्रधाननिष्ठस्यैव मोक्षः संभाव्यते तर्हि सर्वेषामपि तन्निष्ठत्वाविशेषात् सर्वमोक्षप्रसङ्गापत्तेः अचेतन साम्यापत्तिरेव मोक्षाभिधेयः स्यात् । तस्य तु सर्वत्रादिनामपि अनभिमतत्वात् सर्वेश्वर एव सच्छब्दवाच्यः ॥ ७ ॥

इतश्च न (४)प्रधानम्—

## हेयत्वावचनाच्च ॥ ८ ॥

प्रधानस्य सच्छब्दाभिधेयत्वे मुमुक्षोः श्वेतकेतोस्तदात्म कत्वस्य हेयत्वं ब्रूयात्, न हि तदुच्यते । प्रत्युत "तत्त्वमसि" ( छा० उ० ६-१४-३ ) "तस्य तावदेव चिरम्" ( छा० उ० ६-१४-२ ) इत्युपादेयत्वेनोपदेशो दृश्यते । सांख्याना- मपि अचेतननिष्ठस्य संसारित्वाभ्युपगमात् । "तं यथा यथो- पासते तदेव भवति" इति श्रुतेः ।

---

(१) शाङ्करभाष्यानुसारी पाठो 'मोक्षोपदेशात्' इति वर्तते ।

(२) तदात्मकत्वानुसन्धानरूपेत्यर्थः ।

(३) विमोक्ष्ये संपत्स्ये इत्युत्तमपुरुषश्छान्दसत्वात् प्रथमपुरुषार्थे बोद्धव्यः ।

(४) अस्य 'सच्छब्दवाच्यम्' इति शेषः ।

यं यं वाऽपि स्मरन् भावं त्यजत्यन्ते कलेवरम् ।
तं तमेवैति कौन्तेय सदा तद्भावभावितः ॥ (गी० ८–६)

इति स्मृतेः तत्तन्निष्ठस्य तत्तत्प्राप्तेरेव फलत्वेन नियमनाच्च । न तु हेयत्वमुक्तं प्रत्युतोपादेयत्वप्रतिपादनान्न प्रधानम् ॥ ८ ॥

इतश्चापि हेतोः—

## (१)प्रतिज्ञाविरोधात् ॥ ९ ॥

वाक्योपक्रमे कारणविज्ञानेन सर्वविज्ञानं प्रतिज्ञातं (२)"उ-त तमादेशमप्राक्ष्यो येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञात वि-ज्ञातमिति कथं नु भगवः स आदेशो भवतीति । यथा सौम्यैकेनतु मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्याद्वाचारम्भणं विकारो नाम-धेयं मृत्तिकेत्येव सत्यमेवं सौम्य स आदेशो भवति" ( छा० उ० ६–१–१, २, ३ ) इत्यादिश्रवणात् । प्रधानाभ्युपगमे तद्विरो-धात् । तथाहि, यद्यपि प्रधानज्ञानात्तद्विकारजातस्याचेतनवर्गस्य विज्ञानं सुकरं, तथापि चेतनवर्गस्य विज्ञानं न स्यादेव, तस्य तत्कार्य्याभावात् । अतः सर्वविज्ञानप्रतिज्ञाहानेरिति भावः ॥९॥

इतश्च न प्रधानम्—

## स्वाप्ययात् ॥ १० ॥

सदेव सच्छब्दवाच्यं कारणं प्रकृत्य श्रूयते—"स्वप्नान्तं मे

(१) इदं सूत्रं शाङ्करभाष्ये न वर्तते । तत्र हि "चशब्दः प्रतिज्ञा-विरोधाभ्युच्चयप्रदर्शनार्थः" इत्युक्तम् । चकारेणास्य सूत्रार्थस्याभ्यु-च्चय इति तदाशयः ।

(२) 'उत्तमादेशमप्राक्ष्यम' आदर्शपुस्तके । हेश्वेतकेतो ! उत अपि आदिश्यत इत्यादेशस्तं शास्त्राचार्योक्तिगम्यं वस्त्वप्राक्ष्यः पृष्टवानस्याचार्यम् । वाचा आरभ्यमाणमुच्चार्यमाणं नामधेयमेव विकारो न तु घटशरावादि नामातिरिक्तो मृदि विकारो वस्तुतोऽ-स्ति परमार्थतो मृत्तिकैव तु सत्यं वस्त्वस्तीति । सुलभमन्यत् ।

सौम्य विजानीहि इति । यत्रैतत्पुरुषः (१)स्वपितीति नाम सता सौम्य तदा सम्पन्नो भवतीति स्वमपीतो भवति । तस्मादेनं स्वपितीत्याचक्षते स्वं ह्यपीतो भवति" ( छा० उ० ६-८-१ ) इति । एवं सुषुप्तौ जीवस्य स्वस्मिंल्लय उपदिश्यते । लयश्च स्वस्वकारणे एव । न ह्यचेतनं जीवस्य कारणं स्यादतो ब्रह्मैव लयस्थानं सच्छब्दाभिधेयम् ॥ १० ॥

इतश्चापि न प्रधानं कारणम्—

## गतिसामान्यात् ॥ ११ ॥

"आत्मा वा इदमेकमेवाग्र आसीत् । नान्यत् किंचन मीषत् स ऐक्षत लोकान्नु सृजै स इमाँल्लोकानसृजत" ( ऐ० उ० १-१-१ ) "तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः" ( तै० २-१ ) "अस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेद इति । यथाग्नेर्ज्वलतः सर्वा दिशो विस्फुलिङ्गा(२)विप्रतिष्ठेरन्ने(३)वमेवैतस्मादात्मनः (४) सर्वे प्राणा यथायतनं विप्रतिष्ठन्ते प्राणेभ्यो देवा देवेभ्यो लोकाः" (कौ० ३-३) "आत्मत एवेदं सर्वम्" ( छा० उ० ७-२६-१ ) "आत्मन एष प्राणो जायते" ( प्र० ३-३ ) "एतस्माज्जायते प्राणः । नारायणाज्जायते प्राणः" इत्यादिसृष्टिवाक्यानां या वाचकतया गतिस्तद्वाच्ये प्राप्तिरन्वय इति यावत् तत्सामान्यात् परमेश्वर एव कारणं सच्छब्दाभिधेयम् । न ह्यन्येषां तार्किकादीनामिव वे-

---

(१) यत्र सुप्तौ पुंसः स्वपितीत्येतन्नाम भवति तदा पुरुषः सता सम्पन्नस्तेनैकीभूत इति योजना ।

(२) विप्रतिष्ठरन् नानागतित्वेन दिशो दशापि प्रसृताः स्युरित्यर्थः ।

(३) 'एवमे' नास्ति आदर्शपुस्तके । (४) 'सर्वे' नास्ति आदर्शपुस्तके।

दान्तशास्त्रस्य भिन्ना गतिर्यतोऽन्यस्यापि कारणतां वक्तुं शक्येतेति भावः ॥ ११ ॥

इतोऽपि न प्रधानम्—

श्रुतत्वाच्च ॥ १२ ॥

अत्रैव सच्छब्दाभिधेयस्य सर्वज्ञसर्वशक्तित्वमर्वाश्रयत्वनामरूपव्याकरणत्वादीनामसाधारणानां श्रुतत्वात् "सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः । यच्चेहास्ति यच्च नास्ति सर्वं तस्मिन्समाहितम् । तस्मिन्कामाः समाहिताः । एष आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघित्सोऽपिपासः सत्यकामः सत्यसंकल्पः नामरूपे व्याकरवाणि" इत्यादिना । चकारादन्यत्रापि—

न तस्य कश्चित्पतिरस्ति लोके
न चेशिता नैव च तस्य लिङ्गम् ।
स कारणं(१)करणाधिपाधिपो
न चास्य कश्चिज्जनिता न चाधिपः ॥
सर्वाणि रूपाणि विचिन्त्य धीरो
नामानि कृत्वाऽभिवदन्यदास्ते ॥ ( श्वे० उ० ६-९ )

"अन्तः प्रविष्टः शास्ता जनानाम्" सर्वात्मानं परायणं पतिं विश्वस्यात्मेश्वरम् । एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः यः सर्वज्ञः सर्ववित्" इत्यादिभिः । तस्मात्सर्वज्ञं परं ब्रह्मैव जगत्कारणं न प्रधानमिति सिद्धम् ॥१२॥

इति ईक्षत्यधिकरणम् ॥ ५ ॥

१ करणाधिपा जीवाः तेषामधिप इत्यर्थः ।

( ६ आनन्दमयाधिकरणम् । सू० १३-२० )

एवं हि न प्रधानं जगत्कारणमिति निर्धारितम् । इदानीं चेतनवर्गस्य प्रत्यगात्मनः कारणतावारणार्थमिदमारभ्यते—

## आनन्दमयोऽभ्यासात् ॥ १३ ॥

तैत्तिरीयके "स वा एष पुरुषोऽन्नरसमयः" ( तै० २–१ ) इत्यादिना अन्नमयप्राणमयमनोमयविज्ञानमयकोशचतुष्टयमनुक्रम्याम्नायते "तस्माद्वा एतस्माद्विज्ञानमयादन्योन्तरात्माऽऽनन्दमयस्तेनैष पूर्णः" (तै० २–५)इति। तत्र संदिह्यते·किमत्र "ब्रह्मविदाप्नोति परं सत्यं ज्ञानमनन्तं ब्रह्म"(तै०२–१)इत्यादिनोपक्रान्तं ब्रह्मैवानन्दमयशब्देनाभिधीयतेऽथवा तदन्यो जीवात्मेति । किं तावत्प्राप्तम् ? क्षेत्रज्ञ एव। कुतः ? अन्नमयादिभिः गौणार्थकैः सह पठितत्वात् । न ह्येकस्मिन्पाठे कश्चिद्गौणः कश्चिन्मुख्य इति वैषम्येन व्याख्यानं युक्तं प्रकरणभङ्गप्रसङ्गात् । किञ्च "एष एव शारीरः" ( तै० २–६ ) इति शरीरित्वश्रवणात् शरीरयोगो जीवे एवातो न ब्रह्मेति प्राप्ते राद्धान्तः—"आनन्दमयोऽभ्यासात्" । आनन्दमयशब्दवाच्यमुपक्रान्तं ब्रह्मैव । कुतः ? अभ्यासात् तस्यैव बहुकृत्वोऽभ्यस्यमानत्वात् "रसो वै सः । रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति । (१) को ह्येवान्यात् कः प्राण्यात् । (२)यद्येष आकाश आनन्दो न स्यात् । एष(३)

---

(१) कोवाऽन्याच्चलेत्, को वा विशिष्य प्राण्यात् जीवेत् इत्यर्थः । सुलभमन्यत् ।

( २ ) 'यदेष' क० ।

( ३ ) आनन्दयाति आनन्दयेत् लिङर्थे लेट्, "लेटोऽडाटौ" ( पा० सू० ३–४–९४ ) इत्याडागमः ।

त्कारणमुपक्रम्य, तद् विजिज्ञासस्वेतिवाक्यशेषेण तस्य जगत्कारणस्य ब्रह्मणस्तच्छब्देन परामर्श इत्युक्तमेव । किञ्च । आद्याचार्यचरणैर्वेदान्तपारिजातसौरभपठितवाक्यचतुष्टयस्यैतन्मूलभूतस्य श्रीनिवासचरणैर्भगवद्भिर्वेदान्तकौस्तुभे तद्भाष्ये निगदभाषितत्वाद्, अत्रापि सूत्रव्याख्यामुखेनास्माभिरपि व्याख्यातप्रायत्वेन पौनरुक्त्यापातदोषाच्च नेह व्याख्यार्थमुद्युज्यते । सूत्रव्याख्ययैव कृतार्थत्वात् ॥ ४ ॥

श्रीनिवासपदाम्भोजस्मरणोद्बुद्धबुद्धिना ॥
संक्षिप्तैव मुमुक्षूणां परमानन्दलब्धये ॥ १ ॥
कारुण्यसिन्धोश्चरणाम्बुजं मुदा
ध्यायेन्मुमुक्षुः सततं सुमङ्गलम् ॥
तरेत संसारमपारवारिधिं
लभेत ह्यानन्दमनन्तमञ्जसा ॥ २ ॥

इति श्रीसनत्कुमारसन्ततिपदाश्रितश्रीभगवन्नियमानन्दाद्याचार्यपदपङ्कजमकरन्दभृङ्गश्रीदेवाचार्यविरचितायां सिद्धान्तजाह्नव्यां शारीरकमीमांसाव्याख्यायां चतुः सूत्रीव्याख्यानो नाम प्रथमस्तरङ्गः समाप्तः ॥

तत्पदार्थं स्वयमेव व्याकरोति—**सर्वज्ञे** इत्यादिना। **श्रीकृष्णे वेदान्तस्य समन्वय** इति योजना। वेदान्तप्रतिपाद्यो भगवान् श्रीकृष्ण एवेति भावः। अहमेव वेद्य इति तदुक्तेः। तमेव विशिनष्टि—**सर्वज्ञ** इत्यादि। सर्वदेशकालवस्तूनि जानातीति तथा।

वेदाहं समतीतानि वर्तमानानि चार्जुन।

भविष्याणि च भूतानि मां तु वेद न कश्चनेति भगवदुक्तेः। स्वाभाविक्यचिन्त्यानन्तशक्तौ स्वाभाविक्य आद्यन्ताभाववत्यः स्वरूपवद् यथार्था, अचिन्त्या एतावत्य इति परिच्छेत्तुमनर्हा, अनन्ता असंख्याकाश्च शक्तयो यस्य तस्मिन्। **शास्त्रयोनाविति**। शास्त्रं योनिः कारणं प्रमाणं यस्मिंस्तस्मिन् ब्रह्मणि निरतिशयस्वरूपशक्तिकल्याणगुणादिभिर्बृहति। **पुरुषोत्तम** इति। क्षराक्षराभ्यामुत्कृष्टे। **अस्पृष्टमायेति**। माया च तद्गुणाश्च तत्संबन्धश्च मायागुणसंबन्धास्तेषां गन्धो मायागुणसंबन्धगन्धः। न स्पृष्टं मायागुणसंबन्धगन्धेन माहात्म्यं यस्य तस्मिन्। **भगवतीति** षड्गुणैश्वर्यसंपन्ने। तथाह भगवान् पराशरः—

यत् तदव्यक्तमजरमचिन्त्यमजमव्ययम्।
अनिर्देश्यस्वरूपं च पाणिपादादिवर्जितम्॥
विभुं सर्वगतं नित्यं भूतयोनिमकारणम्।
व्याप्यव्याप्तं यतः सर्वं तद्वै पश्यन्ति सूरयः॥
तद् ब्रह्म परमं धाम तद् ध्येयं मोक्षकाङ्क्षिणा।
श्रुतिवाक्योदितं सूक्ष्मं तद् विष्णोः परमं पदम्॥
तदेव भगवद्वाच्यं स्वरूपं परमात्मनः।
वाचको भगवच्छब्दस्तस्याद्यस्याक्षयात्मनः॥

शुद्धे महाविभूत्याख्ये परे ब्रह्मणि निष्कले ।
मैत्रेय भगवच्छब्दः सर्वकारणकारणे ॥
संबिभर्ति तथा भर्ता भकारोऽर्थद्वयान्वितः ।
नेता गमयिता स्रष्टा गकारार्थस्तथा मुने ॥
वसन्ति यत्र भूतानि भूतात्मन्यखिलात्मनि ।
सर्वभूतेष्वशेषेषु वकारार्थस्तथाऽव्ययः ॥
तत्र पूज्यपदार्थोक्तिपरिभाषासमन्वितः ।
शब्दोऽयं नोपचारेण ह्यन्यत्र ह्युपचारतः ॥
एवमेष महाशब्दभगवानिति सत्तमः ।
परमो ब्रह्मभूतस्य वासुदेवस्य नान्यगः ॥
ज्ञानशक्तिबलैश्वर्यवीर्यतेजांस्यशेषतः ।
भगवच्छब्दवाच्यानि विना हेयैर्गुणादिभिः ॥

स सर्वभूतप्रकृतिं विकारान्
गुणाँश्च दोषाँश्च मुने व्यतीतः ।
अतीतसर्वावरणोऽखिलात्मा
तेनाश्रितं यद् भुवनान्तराले ॥
समस्तकल्याणगुणात्मकोऽसौ
स्वशक्तिलेशाद्धृतभूतसर्गः ।
इच्छागृहीताभिमतोरुदेहः
संसाधिताशेषजगद्धितोऽसौ ॥
तेजोबलैश्वर्यमहावबोध-
स्ववीर्यशक्त्यादिगुणैकराशिः ।
परः पराणां सकला न यत्र
क्लेशादयः सन्ति परावरेशे ॥
स ईश्वरो व्यष्टिसमष्टिरूपो-

ऽव्यक्तस्वरूपः प्रकटस्वरूपः ।
सर्वेश्वरः सर्वगः सर्ववेत्ता
समस्तशक्तिः परमेश्वराख्यः ॥
उत्पत्तिस्थितिनाशानां हेतुर्यो जगतोऽव्ययः ।
स सर्वभूतः सर्वात्मा कथ्यते भगवान् हरिः ॥

एतदुक्तं भवति । यथा काचिन्नवयौवना बाला प्रियसङ्गसंभूतस्वानुभूतानन्दपरिपूर्णत्वात् तज्ज्ञाऽपि तदानन्दस्य कुमारीं बोधयितुमशक्ता । तस्यानुपमेयत्वात् कुमार्याश्चानधिकारित्वात्। अन्यस्यै तदधिकारिभूतायै स्वचिह्नादिद्वारा तज्ज्ञापनेऽशक्यत्वाच्च । तथैव वेदोऽपि श्रीभगवदनुभवानन्देन परिपूर्णोऽपि तस्यानुपमितत्वादियत्ताभाववत्त्वाच्चानधिकारिणे तज्ज्ञापयितुमशक्योऽपि तत्प्राप्यमानाय तदेकदेशेन बोधयतीति । यद्यपि दृष्टान्ते विषयस्य परिच्छिन्नत्वान्न तदुपमानार्हत्वं, तथाऽप्यनुपमेयत्वमात्र एकदेशे दृष्टान्तः । तस्माद् ब्रह्मणः स्वरूपगुणादीनामियत्तां निराकुर्वंस्तस्य जडाजडवैलक्षण्यं च प्रतिपादयन् वेदान्त उक्तलक्षणे ब्रह्मणि तत्प्रतिपादकतया समन्वेतीति राद्धान्तः ।

अथ ग्रन्थोपक्रमे पठितानां श्रीभगवदाद्याचार्यवाक्यानां व्याख्याभावरूपापूर्णतां स्मृत्वा निरासयति—किञ्चेति । आद्याचार्यो भगवान् संप्रदायप्रवर्तको नियमानन्दाख्यो निम्बार्कापरनामा । तेन स्वप्रणीतवेदान्तपारिजातसौरभाख्ये ग्रन्थ शारीरकमीमांसावाक्यार्थलक्षणे पठितानां सूत्रस्थानीयानां चतुष्टयस्य अथात इत्यादिसूत्रचतुष्टयविषयकस्य निर्मितग्रन्थमूलभूतस्य श्रीनिवासचरणैर्वाक्यार्थभाष्यकृद्भिर्व्याख्यातप्रायत्वेन सूत्रार्थस्य तद्व्याख्यारूपत्वात् प्रायपदग्रहणम् । तेनैव सूत्रव्याख्यानेनैव ॥४॥

अथ ग्रन्थसंक्षेपणे प्रयोजनमाह—श्रीनिवासस्य श्रीनिवासाभिधस्य वाक्यार्थभाष्यकारस्य पादाम्बुजस्मरणेनोद्बुद्धा बुद्धिर्यस्य तेन मया संक्षिप्ता । ननु व्याख्या तु विस्तार्यैव । मुमुक्षूपकारकत्वात् । किमिति संक्षिप्यते इति चेत् तत्राह—**मुमुक्षूणामिति** । तेषां सौलभ्येन पदार्थप्राप्तये पूर्वाचार्यैर्विस्तृतत्वात् तैरेव प्रेरितेन मया संक्षिप्तेति भावः । **परमानन्दो** मोक्षस्तत्प्राप्त्यर्थं व्यस्तसमस्तयोर्मोक्षफलकत्वसाम्यात् । यद्वा, **श्रीनिवासो** रमाकान्तो भगवाञ्छ्रीपुरुषोत्तमो गोविन्दो वेदमात्रुक्तसवितृदेवपदवाच्यो जगत्कारणभूतः सर्वधियां प्रवर्तकस्तेनोद्बुद्धिता प्रचोदिता बुद्धिर्यस्य तेन मया संक्षिप्ता । त्वं मुमुक्षूणां तत्त्वप्राप्त्यर्थं सुलभोपायं कुर्विति बुद्धौ प्रेरितेनेत्यर्थः ॥ १ ॥

अथ तरङ्गसमाप्तौ सूत्रकारचरमसिद्धान्तव्याख्यानरूपमङ्गलमाचरन् पूर्वप्रतिपादितमर्थं संक्षिप्य स्मारयति—**कारूण्येति** कारुण्यशब्द उपलक्षणार्थः । कारुण्यवात्सल्यक्षान्तिबलाद्यनन्ताचिन्त्यासंख्येयबृहद्गुणसागरस्य । अनेनैवोपक्रमसूत्रस्य ब्रह्मपदार्थः स्मारितो भवति । **चरणाम्बुजं ध्यायेदिति** पूर्वोक्तसाधनकदम्ब उपलक्षणत्वेन स्मार्यते । **मुमुक्षुरिति** पूर्वोक्ताधिकारिस्मारणम् । **तरेत्**इत्यादिनोक्तभगवद्भावापत्तिलक्षणमोक्षज्ञापनमिति तत्त्वम् । **अम्बुजपदाद्** ध्यानविषयस्य निरतिशयसौन्दर्योक्तिः । **मुदेति** ध्यानस्यान्तरङ्गतां सौलभ्यञ्च द्योतयति । निरतिशयसौन्दर्ये स्वाभाव्यादेव चेतस आसक्तिघटनात् । **सुमङ्गलमिति** क्रियाकर्तृकर्मणां सर्वेषामपि विशेषणत्वात् सर्वत्र संयोजनीयम् । **सततमिति** ध्याने नैरन्तर्यगुणविधानम् । **वारिधि**रूपकेण संसारस्य भगवत्कृपामन्तरेण दुस्तरत्वं सूचयति । **अञ्जसेति** ध्यानस्य निरपेक्षत्वं स्फुटयति । **आनन्दमिति** । भगव-

स्त्स्वरूपगुणादिविषयको निरतिशयानन्दः । यं लब्ध्वानन्दीभवति, आनन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्चनेति श्रुतिकदम्बप्रतिपादितः । तं मोक्षाख्यम्, अत एवाऽनन्तम् आनन्दमयाधिकरणे वक्ष्यमाणं देशकालादिपरिच्छेदशून्यं सर्वदेशसर्वकालसर्ववस्तुव्याप्तमञ्जसा लभेत इति यावत् । हिशब्दोऽत्रधारणेऽयोगव्यवच्छेदार्थे । यस्मादेवं तस्मान्मुमुक्षोः सततं ब्रह्मभूतस्य श्रीमाधवस्य पादारविन्दचिन्ता मोक्षान्तरङ्गोपायरूपेति शास्त्रनिर्गलितोऽर्थः । तथाह सूत्रकारः—

आलोड्य सर्वशास्त्राणि विचार्य च पुनः पुनः ।
इदमेकं सुनिष्पन्नं ध्येयो नारायणः सदेति ॥
वेदान्ताभ्युपगीयमानमहिमा तर्काप्रतिष्ठो हि यो
ध्यानाभ्यासविनिश्चलेन मनसा साक्षात्कृतो मोक्षदः ।
तं देवं कमलाभिलालितपदं गोपीकटाक्षार्चितं
गोपालं शरणं व्रजामि सततं वंशीकरं सद्गुरुम् ॥ १ ॥

इति श्रीसनत्कुमारसन्ततिपदाश्रितश्रीदेवाचार्यविरचितसिद्धान्तजाह्नवीटीकायां श्रीसुन्दरभट्टविरचितायां सिद्धान्तसेतुकायां प्रथमतरङ्गमर्यादा समाप्ता ॥

THE

# CHOWKHAMBÂ SANSKṚIT SERIES;

A

COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS.

## NOS. 94 & 99.

---

# ब्रह्मसूत्रम् ।

## द्वैताद्वैतदर्शनम् ।

श्रीमद्वैष्णवसंप्रदायचतुष्टयान्यतमपूज्यपादश्रीहंसनकादिपथाश्रित
श्रीसुन्दरभट्टरचितसिद्धान्तसेतुकाभिधटीकया समुद्भासितेन
निर्दिष्टपथावलम्बिश्री१०८भगवद्वासुदेवपाणिस्थपद्मावतारश्रीदेवा-
चार्यप्रणीतसिद्धान्तजान्हव्याख्यव्याख्यानेन समुल्लासितम् ।

कलियुगजनपावनावतारपरपुमर्थप्रेमवितरणपरायणश्री१०८भगवत्कृष्णचैतन्यचरणोप-
दिष्टैकवीथीमात्रपथिकेन श्रीदमध्वसंप्रदाचार्य्येण साहित्यदर्शनाचार्य्येण श्रीगोस्वा
मिदामोदरलाल शर्म्मणा तथा रत्नगोपालभट्टेन संशोधितम् ।

BRAHMASUTRA,

WITH A GLOSS CALLED

SIDDHANTAJÂHNAVI BY

SHREE DEVÂCHÂRYA

And a commentary called DWAITADWAITASIDDHÂNTASETUKÂ

BY SREE SUNDARA BHATTA

EDITED BY

Sâhityâchârya Pandit Dâmodar Lal Goswâmi

And Ratna Gopâl Bhatta.

---

*PUBLISHED AND SOLD BY THE SECRETARY*

CHOWKHAMBÂ SANSKṚIT BOOK-DEPÔT:

BENARES.

AGENTS:—OTTO HARRASSOWITZ LEIPZIG:

PANDIT JYESHTHÂRÂMA MUKUNDJÎ, BOMBAY.

*Printed by Harî Dâs Gupta, Proprietor,*

AT THE VIDYÂ-VILÂSA PRESS,

BENARES.

---

*Price Rupee One.*

1906.

# श्रीहरिः शरणम्

## नमो भगवते श्रीनियमानन्दाय

**विदितमस्तु सङ्ख्यावताम् ।**

श्रीमतो भगवतः परमपुरुषस्येक्षणमात्रसमुत्थितेऽस्मिञ्जगति सन्ति भगवल्लीलापरिकरीभूता अनन्ता जीवसङ्घाः । तानशरीरिणः सञ्चरतोऽचिद्विशेषान् अनादिकर्मरूपाविद्याग्रस्तान् नैत्य-सुखानुभूतिरहितान् स्वांशभूतानपि दुःखितान् दृष्ट्वा परमकारुणिको भगवाननन्तकोटिब्रह्माण्डशरीरी जगदुदयविभवलयलीलो निरतिशयलावण्यसौन्दर्यमहोदधिरनन्तापरिच्छिन्नमहागुणगण-सागर इच्छागृहीताभिमतोरुदेहत्वेऽपि नित्यस्वेच्छास्वीकृतानन्ता-श्चर्यावहदिव्यदेहः सर्वेश्वरः श्रीकृष्णः स्वमपि स्ववशे नयन्स्वा अपारकरुणया तानुद्धर्त्तुकामः स्वप्राप्तिसाधनोपयुक्तानि करण-कलेवरादीनि पर्य्यग्राहयत । तादृशशरीरपरिग्रहवत्स्वपि चतुरशितिलक्षभेदभिन्नेषु मानवमेकं देहमपावृतं मुक्तिद्वारं सन्तो वदन्ति। तत्रापि कर्त्तव्यतयोपदिष्टेष्वनन्तकार्य्येषु कस्मिन् प्रयतितव्यमितीच्छायां श्रीभगवान्नारदः श्रीवेदव्यासोपदेशव्याजेनसमशिक्ष-यत् । तद्यथा—

> तस्यैव हेतोः प्रयतेत कोविदो न लभ्यते यद् भ्रमतामुपर्य्यधः॥
> तल्लभ्यते दुःखवदन्यतः सुखं कालेन सर्वत्र गभीररंहसा ॥१॥

एतादृशपरमदुर्लभमोक्षस्यापि न हि वेदान्तविद्यामन्तरा कोऽपि साधनान्तरं ब्रवीति । तदिह समायातं मुमुक्षूणां वेदान्तविचारणेति । तत्र च वेदस्यान्तो वेदान्त इति उपनिषद्भागो

गृह्यते। तन्मीमांसारूपश्रीबादरायणशारीरकसूत्राणि खलु वेदान्तार्थं निश्चिन्वन्ति । तेषां सूत्राणामिदं सरससरलपरिपाट्या निबद्धं परमोत्कृष्टं व्याख्यानं श्रीमत्सनकसम्प्रदायकूटस्थश्री श्रीभगवन्निम्बार्कसिद्धान्तनिर्वाहकाचार्य्यवासुदेवपाणिपद्मावतारश्रीमद्देवाचार्यप्रणीतसिद्धान्तजाह्नव्याख्यव्याख्यानं तत्सिद्धान्तानुगामिश्रीमत्सुन्दरभट्टविरचितसिद्धान्तसेतुकाभिधया टीकाया समुद्भासितं, काशीचौखम्बासंस्कृतग्रन्थमालायां मुद्रितमस्ति

ते चाचार्य्यमौलिमणयो ब्रह्मसूत्रवृत्तिकाराः श्रीभगवद्वासुदेवकरस्थकञ्जावताराः श्रीश्रीदेवाचार्य्याः कं ग्रामं स्वजन्मनाऽलंचक्रुरिति तु न निश्चेतुं शक्यं, परञ्च वेदान्तकेसरिश्रीमदनन्तरामकृतगद्यात्मकाचार्यचरितादेवमवगम्यते—यत्किलैते तैलङ्गजनपदे वैक्रमे युगरुद्रेन्दु (१.१.१२) वत्सरे प्रादुरासन्। ततश्च श्रीश्रीकृपाचार्यसन्निधौ अखिलवेदान्तशास्त्रमधिजगिरे। ततश्च

> चक्रुर्वेदान्तसूत्राणां वृत्तिं वेदान्तजाह्नवीम् ॥
> भक्तिरत्नाञ्जलिश्चैव मुमुक्षूणां हिताय ते ॥ १ ॥

परन्तु खेदोऽस्तीदानीं यदेतौ रत्नभूतग्रन्थौ पूर्णौ नोपलभ्येते, तत्रापि ससेतुकेयं जाह्नवी तु प्रथमाध्यायपर्य्यन्तमपि नोपलभ्यते। मुमुक्षुजनप्राणजीवनस्य समयप्रभावादेतद्ग्रन्थस्य भाविनं मूलोच्छेदमालोचयता एतद्ग्रन्थप्रकाशनेच्छया मया काशीस्थचौखम्बासंस्कृतग्रन्थमालाया अधिष्ठातुः परमोदारश्रीहरिदासगुप्तस्य करकञ्जे यथोपलब्धं ससेतुकेयं जाह्नवी समर्पिता। तेन च नरमणिना भगीरथेन सर्वजनस्नानपानतर्पणादिसौलभ्यार्थं विष्णुपादसम्बन्धिनी जाह्नवीव ससेतुकेयं विष्णुस्वरूपसम्बन्धिनीयं जाह्नवी मुद्रापयित्वा वेदान्तरसतृषार्त्ताना-

मस्माकञ्चापरोक्षतां नीता । अयमस्याः सेतुरपि श्रीश्रीदेवाचार्य-शिष्यश्रीसुन्दरभट्टपादकृतोऽस्ति । तेन सहैव मुद्रितेयमतः स्नातु-कामाः सेतुना गच्छन्तु यथेच्छम् ।

अस्मिन् भारते वर्षे ससेतुरयं जाह्नवीग्रन्थोऽस्माभिरन्वे-षितोऽपि समग्रो नोपलब्धः, तस्मादितः परम्—

> मान्यान् प्रणम्य सनयं विनिवेदयामि
> चेदस्ति सेतुसहिताऽखिलजाह्नवी वः ।
> तर्ह्युत्तर सपदि देयमलौकिकेऽर्थे
> स्याद्वः श्रमः सफल एव न तापहेतुः ॥ १ ॥

ये महाशयाः सम्पूर्णं ससेतुकां जाह्नवीं निवेदयेयुस्तेषामहं जीवितावधि कृतज्ञतामात्रहेयम् । उपहारञ्च तेभ्यो भाष्यत्रयोपेतं श्रीदश्रीनिम्बार्कदर्शनं समर्पयेयम् ।

कोटिशो धन्यवादांश्च वर्द्धमानस्थश्रीमत्स्वभूदेवाचार्यपाद-समाश्रितश्रीश्रीनरहरिदेवाचार्यपादपीठाधिकृत "श्रीश्रीमन्मधु-सूदनशरणदेवेभ्यो" ददामि । यैर्विद्याभिवृद्धये सत्सम्प्रदायसंर-क्षणार्थं च स्वीयपुस्तकप्रदानेन साहाय्यं कृतमिति शम् ।

निवेदको विद्वज्जनपरिचर्योत्सुको
वृन्दाटवीवास्तव्यः पं—किशोरदासः ।

आनन्दयाति ( तै० २–७ ) इत्यादिना । अपि च "सैषाऽऽनन्दस्य मीमांसा भवति" इत्युपक्रम्य "स एको मानुष आनन्दः" ( तै० २–८ ) इत्यादिनाऽत्यन्तापकृष्टं मानुषानन्दमारभ्य सर्वेषामपि क्रमश उत्तरोत्तरोत्कृष्टानन्दजीवानामुत्तरोत्तरानन्दं परिच्छिन्नतया निर्णीय "आनन्दं ब्रह्मणो विद्वान्न बिभेति कुतश्चन" ( तै. २–९ ) इति ब्रह्मानन्दस्याभयकारणत्वोक्त्याऽपरिमितत्वेनोपसंहृतत्वात् । उपक्रमोपसंहारयोः तात्पर्यनिर्णायकलिङ्गत्वात्तेन परमात्मैवानन्दमयशब्दाभिधेय इत्यवगम्यते । किंच "विज्ञानमयादन्योन्तरः" ( तै. २–५ ) इति श्रुत्यैव विज्ञानमयशब्दवाच्याज्जीवादन्यत्वेनोत्कृष्टत्वेनान्तरत्वेन जीवान्तर्यामित्वेन च प्रतिपादितत्वात् । न हि प्रत्यगात्मनः स्वस्मात्स्वस्योत्कृष्टत्वं स्वान्तर्यामित्वं च घटते, येन प्रतिपादितं स्यात् । ननु विज्ञानमयशब्दो बुद्धिवाचकः । बुद्धेः परत्व जीवस्य युक्तमेव "यो बुद्धेः परतस्तु सः" इति भगवदुक्तेरिति चेत् ? मैवं, मयट्प्रत्ययस्य वैयर्थ्यापत्तेः । न च "विज्ञानं यज्ञं तनुते" इत्युत्तरश्लोके पठ्यमानस्य बुद्धिवाचकस्य केवलविज्ञानपदस्य सत्त्वात्तदनुरोधेनात्रापि विज्ञानमयस्य विज्ञानपरत्वं कल्प्यते अन्योन्तरपाठविरोधापत्तेरिति वाच्यं,(१) श्लोकस्थविज्ञानपदस्यापि कर्तृव्युत्पत्त्या प्रत्यगात्मवाचित्वात् । न ह्यचेतनरूपाया बुद्धेर्यज्ञकर्तृत्वं संभवति । नच गौणकर्तृत्वं तत्रापि संभवत्येव 'काष्ठानि पचन्ति' इति प्रयोगदर्शनादिति वाच्यं, मुख्यार्थं विहाय बुद्धेर्गौणकर्तृत्वकल्पितत्वात् तदनुरोधेन च विज्ञानमयस्य गौणतरत्वेन नयनस्यान्याय्यतरत्वात् । नापि गौणार्थकैरन्नमयादिभिः सह पाठात्तस्यापि गौणत्वं निर्णेतुं शक्यं, सर्वपरत्वेन सर्वान्तरत्वेन प्रतिपादितत्वात् । तथाहि,

(१) उत्तरश्लोकस्थेत्यर्थः ।

यथान्नमयादिभ्योऽन्यत्वमान्तरत्वं चोत्तरेषामुक्त्वा पूर्वेषामितरत्वं बाह्यत्वं च निर्धारितं "तस्माद्वा एतस्मादन्नमयादन्योन्तरः प्राणमयः" ( तै. २–२ ) इत्यादिना, तथैवानन्दमयादपि यदि कश्चिदन्यमन्तरं ब्रूयात् तर्हि पूर्वसादृश्याद्बाह्यत्वेन गौणव्याख्यानं घटते। नत्वेतदस्ति, तस्य तु सर्वेषामानन्तरत्वमुत्कृष्टत्वं चोक्त्वा तत्रैव वाक्यसमाप्तिश्रवणात्। अतो ब्रह्मैवानन्दमय इति। नच शरीरत्वमपि तस्य विरुद्धं, सर्वेष्वपि तन्नियन्तृत्वेन वर्तमानत्वात्। अपि च "तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः" ( तै. २–१ ) इत्युपक्रमवाक्येन प्रतिपाद्यमानं जगत्कर्तृत्वं "भीषाऽस्माद्वातः पवते भीषोदेति सूर्यः" इत्युपसंहारवाक्येन चोक्तं वाय्वादीनां भयकर्तृत्वेन सर्वशास्तृत्वं सर्वेश्वरं विना नान्यस्य संभवति, तयोः परमात्मासाधारणलिङ्गत्वात्। अतो न जीवात्माऽऽनन्दमयशब्दवाच्य इति ॥ १३ ॥

## विकारशब्दान्नेति चेन्न प्राचुर्यात् ॥ १४ ॥

अत्र भूयोऽपि शङ्कयते—नानन्दमयः परमात्मा। कुतः? विकारशब्दात् विकारवाचिशब्दस्य मयट्प्रत्ययस्य श्रवणात्। तथाचाह भगवान्पाणिनिर्मयटो विकारार्थत्वं "नित्यं वृद्धशरादिभ्यः" ( पा. सू. ४–३–१४४ ) इति सूत्रेण। दृश्यन्ते च लौकिका वैदिकाः प्रयोगा बहवः—'मृन्मयो घटः' 'दारुमयो यूपः' 'पर्णमयी जुहूः' 'शमीमयः स्रुक्' इत्यादयः, इति चेत्तत्राह—नेति। नानन्दमयः सर्वेश्वरादन्यः ( प्राचुर्यात् ) कुतः? प्राचुर्यार्थकत्वात्। "तत्प्रकृतवचने मयट्" ( पा. सू. ५–४–२१ ) इति स्मरणात्। 'अन्नमयो यज्ञः' 'प्रकाशमयो दिवाकरः' इत्यादिप्रयोगाच्च परमात्मैवानन्दमयः ॥ १४ ॥

इतश्च—

## तद्धेतुव्यपदेशाच्च ॥ १५ ॥

"एष ह्येवानन्दयाति" ( तै. २-७ ) इति तस्य जीवानामानन्दस्य हेतुरयमेवेति व्यपदेशात् । आनन्दयितव्यानां जीवानामानन्दयिता परमात्मैव । दीर्घत्वं चात्र छान्दसम् । यथा लोके योऽन्येभ्यो धनं प्रयच्छति स प्रचुरधन इत्युच्यते । एवं योऽन्यानानन्दयति स प्रचुरानन्दः । तस्मात्प्राचुर्यार्थ एव मयट्, आनन्दमयवाच्यश्च परमात्मैव ॥ १५ ॥

इतश्चापि—

## मान्त्रवर्णिकमेव च गीयते ॥ १६ ॥

"ब्रह्मविदाप्नोति परम्" ( तै. २-१ ) इत्युपक्रमे विदुषां प्राप्यत्वेन, "सत्यं ज्ञानमनन्तं ब्रह्म" ( तै. २-१ ) इति सत्यज्ञानादिविशेष्यत्वेन, "तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः" ( तै. २-१ ) इत्यादिना जगत्कारणत्वेन, "तस्माद्विज्ञानमयादन्योऽन्तरः" ( तै. २-५ ) इत्यादिना जीवात्परत्वान्तरत्वाभ्याम्, "आनन्दं ब्रह्मणो विद्वान्" ( तै. २-९ ) इति स्वात्मानन्दं विदुषोऽभयदातृत्वेन च मन्त्रैर्ब्राह्मणैश्च गीयते, तन्मान्त्रवर्णिकम् । तदेवानन्दमयशब्दवाच्यः, उक्तासाधारणधर्माणां तत्रैव सम्भवात्; नान्यत्र । तस्मान्नान्यः ॥ १६ ॥

अत्र केचिच्छास्त्रार्थं नाशयन्त आहुः—न हीश्वरादन्यः कश्चित्प्रत्यगात्मा "नान्योऽतोऽस्ति द्रष्टा" ( बृ. उ. ३-७-२३ ) इत्यादिश्रुतेः । कथं तर्हि प्राप्यप्राप्तृत्वव्यपदेशः ? लौकिकद्रष्टेति ब्रूमः, यथा घटाकाशादुपाधिपरिच्छिन्नात्तदनुपहित आकाशोऽन्य ईदृशं च विज्ञानात्मपरमात्मभेदमाश्रित्य भेदशास्त्रप्रवृत्तिर्न

परमार्थतः, क्षेत्रज्ञ एव शुद्धस्वरूपो मान्त्रवर्णिक इति प्राप्ते ब्रवीति—

## नेतरोऽनुपपत्तेः ॥ १७ ॥

परमेश्वरादितरप्रत्यगात्मा मान्त्रवर्णिको न भवति। कुतः? अनुपपत्तेः। पूर्वपठिता ये विद्वत्प्राप्यत्वजगत्कर्तृत्वादयोऽसाधारणा मान्त्रवर्णिकगुणास्तेषां तदितरस्मिन्ननुपपत्तेः। न च "नान्योऽतोऽस्ति द्रष्टा" ( बृ. उ. ३-७-२३ ) इति वाक्यविरोध इति वाच्यं, तस्य प्रत्यगात्मस्वातन्त्र्यद्रष्टृत्वश्रोतृत्वादिनिषेधपरत्वात्। अन्यथा "नहि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते ऽविनाशित्वात्" इत्यादिस्वाभाविकद्रष्टृत्वादिप्रतिपादकाभ्याससहकृतशास्त्रव्याकोपात्। सामान्यवाक्येभ्योऽभ्यासवाक्यानां बलीयस्त्वस्य सर्ववादिसम्मतत्वात्। तस्माल्लौकिकत्वं भेदस्य ॥ १७ ॥

नवा घटाकाशादिवदुपाधिकृतो भेद इति वक्तुं शक्यते इत्याह—

## भेदव्यपदेशाच्च ॥ १८ ॥

परमेश्वराज्जीवस्य महान्भेदः स्वाभाविक एव व्यपदिश्यते। तस्मान्न मान्त्रवर्णिको विज्ञानात्मा। तथाहि "ब्रह्म विदाप्नोति परम्" ( तै. २-१ ) इत्युपक्रमे "आनन्दं ब्रह्मणो विद्वान्न बिभेति कुतश्चन" (तै. २-९) इत्युपसंहारे "विज्ञानमयादन्योऽन्तरः" ( तै. २-५ ) "यं लब्ध्वानन्दी भवति" ( तै. २-७ ) "अस्ति ब्रह्मेति चेद्वेद" ( तै. २-५ ) "भीषास्माद्वातः पवते" इत्याद्यभ्यासेन च भेदस्य स्वाभाविकत्वनिर्णयात्। उपक्रमादीनां निर्णयकारणत्वात्। न प्राप्यप्राप्तृभावाभ्यां वेत्तृवेद्यत्वाभ्यां

निकृष्टोत्कृष्टत्वाभ्यां नियम्यनियन्तृत्वाभ्यां लब्धृलब्धव्यत्वाभ्यां भयकर्तृभीतत्वाभ्यां चोपक्रमादिभिर्निर्दिष्टो भेदो गौणत्वं भजते । अतः स्वाभाविकभेदः । यदुक्तं घटाकाशादिवदुपाधिकृतो भेदः, तत्र ब्रूमः—यो घटाकाशशब्दवदुपाहित ईश्वर एव जीवशब्दाभिधेयः स सक्रियो निष्क्रियो वा ? नान्त्यः, गत्याद्यनुपपत्तेः । नापि चाद्यः, ईश्वराभिन्नत्वेन विभुत्वात् । तस्मादुभयथाऽप्यनुपपत्तेः । ननु स्वरूपत आकाशवन्निष्क्रियत्वेऽपि उपाधेः परिच्छिन्नत्वात् सक्रियत्वम् । तस्य क्रिया चेतनेऽध्यारोप्य घटगतिस्तद्वद(परि)च्छिन्नाकाशेऽध्यस्य 'घटाकाशश्चलति' इति 'देवदत्तश्चलति' इति व्यावहारिकगत्यादीनां नानुपपत्तिरितिचेत्? न, तथात्वे सति क्षणे क्षणे गमनादिक्रियासु बन्धमोक्षौ स्याताम् । पूर्वदेशे वियोगेनोत्तरदेशनिष्ठस्य शुद्धस्य सर्वस्थस्येश्वरांशस्याकस्मादनादिकर्मादिविकारहीनस्यैवोपाधिना बन्धः । पादविक्षेपयुक्तस्य चानादिकर्मादिबद्धस्य ज्ञानादिसाधनहीनस्यैवाकस्मान्मोक्ष इति । तस्मात्कल्पनामात्रमेवौपाधिकभेदारोपणम् । एवमेव प्रतिबिम्बादिपक्षेऽपि । तस्मात्स्वाभाविक एव भेदः । एतच्चाग्रे ध्वनिष्यते ॥ १८ ॥

इतश्च —

## कामाच्च नानुमानापेक्षा ॥ १९ ॥

यथा सृष्ट्यादिकरणे चतुर्मुखादीनां जीवानाम् आनुमानिकस्याचेतनस्य करणादेरपेक्षा तथा न परमेश्वरस्य प्रधानाद्यपेक्षा । कुतः ? कामात् सङ्कल्पमात्रेण सृष्टिकर्तृत्वश्रवणात् "सोऽकामयत बहु स्यां प्रजायेय" ( तै. २–६ ) स तपोऽतप्यत स तपस्तप्त्वा इदं सर्वमसृजत" ( तै. २–६ ) इत्यादिना । नहि

सङ्कल्पमात्रेण तदितरैः स्रष्टुं शक्यते। तस्मान्मान्त्रवर्णिक आनन्दमयः परमेश्वर एव ॥ १९ ॥

इतश्च—

## अस्मिन्नस्य च तद्योगं शास्ति ॥ २० ॥

अस्मिन्नानन्दमये मान्त्रवर्णिके परमेश्वरेऽस्य क्षेत्रज्ञस्य तद्योगम् आनन्दयोगं शास्ति भगवती श्रुतिः "रसो वै सः रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति" ( तै. २–७ ) इति। अत आनन्दमयः परमात्मैवेति सिद्धम्।

अत्र केचित्स्वबुद्ध्योत्प्रेक्षितपरिरक्षणाय क्लिश्यन्ति नानन्दमयस्य ब्रह्मत्वम्। कुतः ? "स वा एष पुरुषोऽन्नरसमयः" "तस्माद्वा एतस्मादन्नमयादन्योऽन्तरात्मा प्राणमयः" ( तै.२–१, २ ) इत्यादिना विज्ञानमयपर्यन्तविकारार्थमयट्प्रवाहपातित्वात्। अन्यथाऽस्मादेकस्यैव प्रवाहान्यार्थकल्पनेऽर्धजरतीयन्यायापत्तेः। तस्माद्विकारार्थमयट्प्रत्ययः। किञ्च "प्रियमेव शिरः, मोदो दक्षिणः पक्षः, प्रमोद उत्तरः पक्षः, आनन्द आत्मा, ब्रह्म पुच्छं प्रतिष्ठा" ( तै. २–५ ) इति शिरस्त्वाद्यवयवयोगाद्विकृत एवानन्दमयपदार्थः। अपिचानन्दमयस्यैव ब्रह्म पुच्छं प्रतिष्ठेति वाक्यस्यावयवपरत्वे आनन्दमय इत्यस्य चावयविवाचकत्वे च एकस्यैवावयवावयवित्वापत्तेः, उभयोरप्येकार्थत्वात्। किञ्च प्रातिपदिकमात्रस्यैवानन्दस्याभ्यासान्नानन्दमयस्यातो नानन्दमयं ब्रह्मेति। किञ्च मयट्प्राचुर्येऽपि दुःखाल्पस्य तत्र प्रतीतिर्दुर्वारा, प्राचुर्यस्य लोके प्रतियोग्यल्पत्वापेक्षत्वात्। तथा सति आनन्दप्रचुरोऽल्पदुःख इत्युभयात्मक आनन्दमयपदार्थोऽभ्युपगतः स्यात्। ईदृशश्च क्षेत्रज्ञ एवेति। किञ्च ब्रह्म पुच्छं प्र-

तिष्ठेत्यत्र ब्रह्मशब्दयोगादन्यत्रानन्दमय इत्यत्रानन्दशब्दसंयोगाच्च-

"असन्नेव स भवति असद्ब्रह्मेति वेद चेत् ।

अस्ति ब्रह्मेति चेद्वेद सन्तमेनं ततो विदुः" ( तै० २-६ )

इत्युत्तरश्लोकेति [पि] आनन्दमयं त्यक्त्वा ब्रह्मण एव ज्ञातभावाभावाभ्यां गुणदोषयोर्विधानाच्च नानन्दमयपदार्थो ब्रह्मेति । अपिचाऽऽनन्दमये ब्रह्मण्यभ्युपगम्यमाने सति सविशेषं ब्रह्मेत्यङ्गीकृतं स्यात् । इह तु वाक्यशेषे "यतो वाचो निवर्तन्ते, अप्राप्य मनसा सह" (तै० २-७) इत्यादिना निर्विशेषस्य श्रवणात् । अतो ब्रह्म पुच्छं प्रतिष्ठावाक्यपठितब्रह्म प्रतिपत्तव्यम् , आनन्दमयश्च विकृत एवेत्यादियुक्त्याभासैरधिकरणसूत्राण्यन्यथैव योजयन्ति। तत्र ब्रूमः, स्वमतिपरिकल्पितोऽयं पक्षः । तथाहि, तत्र तावद्यदुक्तं नानन्दमयस्य ब्रह्मत्वमित्यादि, तदसम्यक्, तस्य विकारार्थकमयट्प्रवाहपातित्वाभावात् । तथाहि, 'अन्नमयः' इत्यत्र मयटो विकारार्थत्वेऽपि 'प्राणमयः' इत्यादौ विकारार्थत्वाभावात् । तत्र प्राणमये तु पञ्चवृत्तेः प्राणस्यैकात्मकत्वात्कथं विकारत्वं घटस्य घट[वि]कारत्वाभावात् । एवं विकारार्थानुपपत्त्याऽगत्या स्वार्थवृत्तिविवक्षया वा मयट्प्रयोग इति निश्चीयते । तथैव 'विज्ञानमयः' इत्यत्रापि तद्वाच्यस्य जीवात्मनश्चेतनस्य नान्यविकारत्वं संभवति, तथा सति स्वरूपहानेः "न जायते म्रियते वा विपश्चित्" इत्यादिशास्त्रविरोधाच्च । तत्रापि प्राचुर्ये एव मयट्प्रत्यय इत्यवगम्यते । ननु कथं जीवात्मनो विज्ञानप्रचुरत्वं संसारित्वादिति चेत् ? न, बद्धावस्थायां विज्ञानधर्मस्य संकोचेऽपि तस्य स्वाभाविकत्वविवक्षया तथोक्तेः, "नहि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यतेऽविनाशित्वात्" इति श्रुतेः । तस्माद्विकारार्थप्र-

वाह एव नास्ति कुतस्तत्पातशङ्का कुतस्तरामर्द्धजरतीयन्या-यापातप्रसङ्गश्च । प्रत्युत प्राचुर्यार्थिकविज्ञानमयपदसान्निधाना-त्सुतरां प्राचुर्यार्थावगमः । न चैकत्राभ्यासेन द्विस्त्रिःकृत्वः प-ठितस्य सन्निहितस्य शब्दस्यैकार्थपरत्वनियम इति वक्तुं शक्यः "पौर्णमास्यां पौर्णमास्या यजेत" इत्यत्र पाठस्य साम्यस-न्निधानत्वयोः सतोरपि पूर्वस्य सप्तम्यन्तस्य कालवाचित्वेनो-त्तरस्य च तृतीयान्तस्य कालयुक्तकर्मवाचित्वेन भिन्नार्थत्वस्य च पूर्वकाण्डे निर्णयदर्शितत्वात् भगवता जैमिनिना । त-स्मात्स्वरूपासिद्धो हेतुः मयटो विकारार्थप्रवाहस्य हेतुः स्वरू-पस्यासिद्धत्वादित्यर्थः । यदुक्तम्—आनन्दमयस्य शिरस्त्वा-द्यवयवपाठाद्विकृत एव पदार्थ इति, तदसमीचीनं प्रियमोदादि-शब्दवाच्यानामपि मनोऽभीप्सितदर्शनजातादीनां सुखानां तद्वि-भूतिलक्षणतदंशत्वादवयवोक्तियुक्तैव । तथा चान्यत्र स्पष्टमेव "एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति" इत्यादि-श्रुत्या । तस्मादवयवविधानस्य परार्थत्वान्न विरोधः । यदुक्तमा-नन्दमयस्य ब्रह्मत्वे तस्यैवावयवावयवित्वापत्तिस्तयोरेकार्थत्वा-दिति, तदप्यविचारितं तयोरेकार्थपरत्वस्येष्टत्वात् । कयाचिद्विव-क्षयोक्तः अंशांशिनोर्विभूतिविभूतिमतोरभेदो न विरुद्ध्यते । य-दप्युक्तं प्रातिपदिकमात्रस्यैवानन्दस्याभ्यासान्नानन्दमयस्या-तो नानन्दमयं ब्रह्मेति, तदप्यपेशलं "वसन्ते वसन्ते ज्योति-षा यजेत" इत्यत्र ज्योतिःशब्दस्य ज्योतिष्टोमपरत्वं पूर्वतन्त्रे निर्धारितं, तद्वदिहापि प्रातिपदिकस्यानन्दपदस्यानन्दपरत्वं यु-क्तमेव गुणस्य गुणिनमन्तरेण स्थित्यनुपलब्धेः । अत आनन्द-मयवाच्यं ब्रह्मैव । यच्चोक्तं मयट्प्राचुर्येऽपि दुःखाल्पस्य तत्र प्रतीतिर्दुर्वारा प्राचुर्यस्य प्रतियोग्यल्पसापेक्षत्वादित्यादिना,

तदसाधु, यद्यपि प्राचुर्यस्य प्रतियोग्यल्पसापेक्षत्वमस्तीति सत्यं तथापि स्वात्मन्येव प्रतियोगिसत्तानियमाभावात् । अन्यत्रापि प्रतियोगिसत्तामपेक्ष्य प्रयोगस्य प्रवृत्तिः सङ्गच्छत्येव । यथा 'प्रचुरप्रकाशो दिवाकरः' इति प्रयोगस्य इन्दुवह्निदीपनक्षत्रादीन् स्वात्मभिन्नान् स्वल्पप्रकाशानपेक्ष्य प्रवृत्तिरितरथा विरोधादियोगानुपपत्तेः; तद्वदिहापि प्रियमोदादीन् वैषयिकान् सुखानपेक्ष्य तथा प्रयोगप्रवृत्तिरविरुद्धा । अन्यथा स्वात्मन्येवोभयकल्पनायां तमःप्रकाशयोरिव महद्विरुद्धेन वाक्यमूक[ता] प्रसङ्गात् । किञ्च तत्प्रचुरत्वं हि तत्प्रभूतत्वम् । तच्चेतरस्य सत्तां नावगमयति, अपितु अल्पत्वं निवर्तयति । इतरसद्भावाभावौ प्रमाणान्तरावसेयौ । इह च प्रमाणान्तरेण तदभावोऽवगम्यते "अपहतपाप्मा" ( छा० उ० ८–७–१ ) इत्यादिश्रुत्येति । अन्यैरपि वैष्णवाचार्यैरुक्तं—तस्मादानन्दमयं ब्रह्मैव न क्षेत्रज्ञसम्भावनाऽपि । यदुक्तं ब्रह्मपुच्छमिति आनन्दमय इत्यनयोर्वाक्ययोर्ब्रह्मशब्दस्य सम्प्रयोगासम्प्रयोगाभ्यामपि नानन्दमयवाच्यं ब्रह्मेति, तत्तुच्छं यथाऽऽनन्दमयवाक्ये ब्रह्मशब्दासम्प्रयोगस्तथा ब्रह्म पुच्छमिति वाक्ये आनन्दासम्प्रयोगस्य तुल्यत्वात् । अनयोर्मध्ये सूत्रितत्वेनाभ्यस्तत्वेन चाऽऽनन्दपदस्यैव सूत्रकाराभिमतत्वाद्बलीयस्त्वम् । तद्विरुद्धश्च तव पक्ष एव महद्दोषमावहति । यदि ब्रह्माभ्यास एव सूत्रकृदभिप्रेतः स्यात्तर्हि "ब्रह्म पुच्छं प्रतिष्ठाभ्यासात्" इति सूत्रितं भवेत् । न त्वेतद्दृश्यते, किन्तु आनन्दमयं प्रतिज्ञाय अभ्यासश्च हेतुतयोक्तः । तथात्वे च प्रतिज्ञाहेत्वोरुभयोरपि सूत्रितयोर्हानिः असूत्रितस्य च कल्पनाप्रसङ्गात् । किञ्च भृगुवल्ल्यामपि प्राणाद्युपासने उत्तरोत्तरजिज्ञासायास्तदवस्थत्वादानन्दस्य

ज्ञानानन्तरमुपदेशसमाप्तेश्चानन्दस्य वलिष्ठत्वम् । तस्मान्निष्कृष्ट एष पक्षः । न च 'असद्ब्रह्म' इत्यत्रानन्दमयस्य त्यागादन्यपरत्वं तस्येति वक्तुं शक्यते गुणिमात्रस्य निर्देशेऽपि गुणप्रतिपत्तिः सुकरैव, सर्वज्ञस्यानन्दाद्यनन्तगुणस्यैव प्रस्तुतत्वात् । यदुक्तम्–आनन्दमये ब्रह्मण्यभ्युपगम्यमाने सविशेषं ब्रह्माभ्युपगतं स्यादित्यादि, तत्तुच्छतरं, "सैषानन्दस्य मीमांसा भवति" इति गुणभूतानन्दस्योत्तरोत्तरवाक्यैराधिक्यं निर्धार्य "आनन्दं ब्रह्मणो विद्वान्" ( तै० २–९ ) इति गुणगुणिनोः पृथक्पाठ एव कण्ठरवेण ब्रह्मणः सविशेषत्वं ज्ञापयति । न च "यतो वाचो निवर्त्तन्ते" ( तै० २–९ ) इति वाक्यशेषेण निर्विशेषत्वं वक्तुं शक्यं, तस्य वाक्यस्य ब्रह्मानन्दस्यान्येषामानन्दवत्परिच्छेदवारणपरत्वात् । अन्यथा तत्रैवोत्तरार्द्धे "आनन्दं ब्रह्मणो विद्वान्न बिभेति कुतश्चन" इति भेदनिर्देशो वेदनक्रियाविषयत्वनिर्देशश्च विरुद्ध्येत । नहि युष्मत्पक्षे धर्मधर्मिभावेन निर्देशः सङ्गच्छते । वेदनाविषयस्तु सुतरामनवगमस्तस्मादानन्दमयः परमात्मैवेति सिद्धम् । किञ्च मयटो विकारार्थे को वानन्दमयपदार्थ इति विवेचनीयं चेतनोऽचेतनो वेति । न तावच्चेतन इति वाच्यं, तस्य निर्विकारत्वात् एकरसत्वाच्च । नाप्यचेतनः जडत्वात् । इतरथा घटादीनामप्यानन्दाश्रयत्वापत्तेः, तेषामपि जडत्वसाम्यात् यस्माद्विकारार्थः कोपि न घटते, तस्मात्प्राचुर्यार्थे एव मयट् आनन्दप्रचुरश्च परमात्मा श्रीभगवान् पुरुषोत्तम एवेत्यलं विस्तरेण ॥ २० ॥

इत्यानन्दमयाधिकरणम् ॥ ६ ॥

( ७ अन्तराधिकरणम् । २१-२२ )

एवमधिकरणद्वयेन सामान्यतः क्षेत्रक्षेत्रज्ञयोः कारणत्वं निरस्तमिदानीं विशेषतः प्राप्तैश्वर्याणां क्षेत्रज्ञानां चेतनानां प्रधानकार्याणामाकाशादीनामचेतनानां चेतनत्वं निराकरोत्यापादसमाप्तेः ।

## अन्तस्तद्धर्मोपदेशात् ॥ २१ ॥

छान्दोगैरिदमाम्नातं "एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेश आप्रणखात् सर्व एव सुवर्णः" "तस्य यथा कप्यासं पुण्डरीकमेवाक्षिणी तस्योदिति नाम स एष वै सर्वेभ्यः पाप्मभ्य उदितः। उदेति ह वै सर्वेभ्यः पाप्मभ्यो य एवं वेद तस्य ऋक् साम च गेष्णावित्यधिदैवतम्" ( छा० उ० १-६ ७, ८ ) "अथाध्यात्ममपि अथ य एषोन्तरक्षिणि पुरुषो दृश्यते सैवर्क् तत्साम तदुक्थं तद्यजुस्तद्ब्रह्म तस्यैतस्य तदेव रूपं यदमुष्य रूपं यावमुष्य गेष्णौ तौ गेष्णौ यन्नाम" ( छा० उ० १-७-५ ) इति । तत्र संशयः आदित्यमण्डलाक्ष्णोरन्तस्थत्वेन श्रूयमाणः पुण्यवशात्प्राप्तैश्वर्यः कश्चित् सवित्रादिक्षेत्रज्ञविशेषः उत नित्यशुद्धस्वाभाविकापरिच्छिन्ननिरतिशयैश्वर्यः श्रीपुरुषोत्तम इति । किं तावत् ? क्षेत्रज्ञ एवेति, हिरण्यश्मश्रुरित्यादिरूपकथनेन शरीरयोगश्रवणात् । किञ्च "ये (१)चैतस्मात्पराञ्चो लोकास्तेषां चेष्टे देवकामानां च" ( छा० उ० १-६-८ ) इत्यादिना "स एष ये चैतस्मादर्वाञ्चो लोकास्तेषां चेष्टे मनुष्यकामानाम्" ( छा० उ० १-७-६ ) इत्यादिना चोभयोरप्यैश्वर्ययत्ताश्रवणात् "एषोऽन्तरादित्यः । एषोऽन्तरा-

(१) 'ये चामुष्मात्' क० ।

परमार्थतः, क्षेत्रज्ञ एव शुद्धस्वरूपो मान्त्रवर्णिक इति प्रा
ब्रवीति—

## नेतरोऽनुपपत्तेः ॥ १७ ॥

परमेश्वरादितरप्रत्यगात्मा मान्त्रवर्णिको न भवति। कुतः
अनुपपत्तेः। पूर्वपठिता ये विद्वत्प्राप्यत्वजगत्कर्तृत्वादयोऽसाध
रणा मान्त्रवर्णिकगुणास्तेषां तदितरस्मिन्ननुपपत्तेः। न
"नान्योऽतोऽस्ति द्रष्टा" ( बृ. उ. ३-७-२३ ) इति वाव
विरोध इति वाच्यं, तस्य प्रत्यगात्मस्वातन्त्र्यद्रष्टृत्वश्रोतृत्वा
निषेधपरत्वात्। अन्यथा "नहि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते ऽ
नाशित्वात्" इत्यादिस्वाभाविकद्रष्टृत्वादिप्रतिपादकाभ्यास
कृतशास्त्रव्याकोपात्। सामान्यवाक्येभ्योऽभ्यासवाक्य
बलीयस्त्वस्य सर्ववादिसम्मतत्वात्। तस्माल्लौकि
भेदस्य ॥ १७ ॥

ननु घटाकाशादिवदुपाधिकृतो भेद इति वक्तुं शक्
इत्याह—

## भेदव्यपदेशाच्च ॥ १८ ॥

परमेश्वराज्जीवस्य महान्भेदः स्वाभाविक एव व्यपदिश्
तस्मान्न मान्त्रवर्णिको विज्ञानात्मा। तथाहि "ब्रह्म विदा
परम्" ( तै. २-१ ) इत्युपक्रमे "आनन्दं ब्रह्मणो वि
बिभेति कुतश्चन" (तै. २-९) इत्युपसंहारे "विज्ञानमयाद
न्तरः" ( तै. २-५ ) "यं लब्ध्वानन्दी भवति" ( तै. २-
"अस्ति ब्रह्मेति चेद्वेद" ( तै. २-५ ) "भीषास्माद्वातः प
इत्याद्यभ्यासेन च भेदस्य स्वाभाविकत्वनिर्णयात्। उपक्रमा
निर्णयकारणत्वात्। न प्राप्यप्राप्तृभावाभ्यां वेत्तृवेद्यत्व

निकृष्टोत्कृष्टत्वाभ्यां नियम्यनियन्तृत्वाभ्यां लब्धृलब्धव्यत्वा-भ्यां भयकर्तृभीतत्वाभ्यां चोपक्रमादिभिर्निर्दिष्टो भेदो गौण-त्वं भजते । अतः स्वाभाविकभेदः । यदुक्तं घटाकाशादिवदु-पाधिकृतो भेदः, तत्र ब्रूमः–यो घटाकाशशब्दवदुपाहित ईश्वर एव जीवशब्दाभिधेयः स सक्रियो निष्क्रियो वा ? नान्त्यः, गत्याद्य-नुपपत्तेः । नापि चाद्यः, ईश्वराभिन्नत्वेन विभुत्वात् । तस्मादु-भयथाऽप्यनुपपत्तेः । ननु स्वरूपत आकाशवन्निष्क्रियत्वेऽपि उपाधेः परिच्छिन्नत्वात् सक्रियत्वम् । तस्य क्रिया चेतनेऽध्यारोप्य घटगतिस्तद्वद(परि)च्छिन्नाकाशेऽध्यस्य 'घटाकाशश्चलति' इति 'देवदत्तश्चलति' इति व्यावहारिकगत्यादीनां नानुपपत्तिरिति चेन्न ! न, तथात्वे सति क्षणे क्षणे गमनादिक्रियासु बन्धमोक्षौ स्या-ताम् । पूर्वदेशे वियोगेनोत्तरदेशनिष्ठस्य शुद्धस्य सर्वस्वतन्त्रे-श्वरांशस्याकस्मादनादिकर्मादिविकारहीनस्यैवोपाधिना बन्धः । पादविक्षेपयुक्तस्य चानादिकर्मादिबद्धस्य ज्ञानादिसाधनहीन-स्यैवाकस्मान्मोक्ष इति । तस्मात्कल्पनामात्रमेवौपाधिकभेदारो-पणम् । एवमेव प्रतिबिम्बादिपक्षेऽपि । तस्मात्स्वाभाविक एव भेदः । एतच्चाग्रे ध्वनिष्यते ॥ १८ ॥

इतश्च —

## कामाच्च नानुमानापेक्षा ॥ १९ ॥

यथा सृष्ट्यादिकरणे चतुर्मुखादीनां जीवानाम् आनुमा-निकस्याचेतनस्य करणादेरपेक्षा तथा न परमेश्वरस्य प्रधानाद्यपे-क्षा । कुतः ? कामात् सङ्कल्पमात्रेण सृष्टिकर्तृत्वश्रवणात् "सोऽ-कामयत बहु स्यां प्रजायेय" ( तै. २–६ ) स तपोऽतप्यत स तपस्तप्त्वा इदं सर्वमसृजत" ( तै. २–६ ) इत्यादिना । नहि

सङ्कल्पमात्रेण तदितरैः स्रष्टुं शक्यते । तस्मान्मान्त्रवर्णिक आनन्दमयः परमेश्वर एव ॥ १९ ॥

इतश्च—

## अस्मिन्नस्य च तद्योगं शास्ति ॥ २० ॥

अस्मिन्नानन्दमये मान्त्रवर्णिके परमेश्वरेऽस्य क्षेत्रज्ञस्य तद्योगम् आनन्दयोगं शास्ति भगवती श्रुतिः "रसो वै सः रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति" ( तै. २–७ ) इति । अत आनन्दमयः परमात्मैवेति सिद्धम् ।

अत्र केचित्स्वबुद्ध्योत्प्रेक्षितपरिरक्षणाय क्लिश्यन्ति नानन्दमयस्य ब्रह्मत्वम् । कुतः ? "स वा एष पुरुषोऽन्नरसमयः" "तस्माद्वा एतस्मादन्नमयादन्योऽन्तरात्मा प्राणमयः" ( तै. २–१, २ ) इत्यादिना विज्ञानमयपर्यन्तविकारार्थमयट्प्रवाहपातित्वात् । अन्यथाऽस्मादेकस्यैव प्रवाहान्यार्थकल्पनेऽर्धजरतीयन्यायापत्तेः । तस्माद्विकारार्थमयट्प्रत्ययः । किञ्च "प्रियमेव शिरः, मोदो दक्षिणः पक्षः, प्रमोद उत्तरः पक्षः, आनन्द आत्मा, ब्रह्म पुच्छं प्रतिष्ठा" ( तै. २–५ ) इति शिरस्त्वाद्यवयवयोगाद्विकृत एवानन्दमयपदार्थः । अपिचानन्दमयस्यैव ब्रह्म पुच्छं प्रतिष्ठेति वाक्यस्यावयवपरत्वे आनन्दमय इत्यस्य चावयविवाचकत्वे च एकस्यैवावयवावयवित्वापत्तेः, उभयोरप्येकार्थत्वात् । किञ्च प्रातिपदिकमात्रस्यैवानन्दस्याभ्यासान्नानन्दमयस्यातो नानन्दमयं ब्रह्मेति । किञ्च मयट्प्राचुर्येऽपि दुःखाल्पस्य तत्र प्रतीतिर्दुर्वारा, प्राचुर्यस्य लोके प्रतियोग्यल्पसापेक्षत्वात् । तथा सति आनन्दप्रचुरोऽल्पदुःख इत्युभयात्मक आनन्दमयपदार्थोऽभ्युपगतः स्यात् । ईदृशश्च क्षेत्रज्ञ एवेति । किञ्च ब्रह्म पुच्छं प्र-

तिष्ठेत्यत्र ब्रह्मशब्दयोगादन्यत्रानन्दमय इत्यत्रानन्दशब्दसंयोगाच्च-

"असन्नेव स भवति असद्ब्रह्मेति वेद चेत् ।
अस्ति ब्रह्मेति चेद्वेद सन्तमेनं ततो विदुः" ( तै० २-६ )

इत्युत्तरश्लोकेति [पि] आनन्दमयं त्यक्त्वा ब्रह्मण एव ज्ञातभावाभावाभ्यां गुणदोषयोर्विधानाच्च नानन्दमयपदार्थो ब्रह्मेति । अपिचाऽऽनन्दमये ब्रह्मण्यभ्युपगम्यमाने सति सविशेषं ब्रह्मेत्यङ्गीकृतं स्यात् । इह तु वाक्यशेषे "यतो वाचो निवर्तन्ते, अप्राप्य मनसा सह" (तै० २-७) इत्यादिना निर्विशेषस्य श्रवणात् । अतो ब्रह्म पुच्छं प्रतिष्ठावाक्यपठितब्रह्म प्रतिपत्तव्यम् , आनन्दमयश्च विकृत एवेत्यादियुक्त्याभासैरधिकरणसूत्राण्यन्यथैव योजयन्ति । तत्र ब्रूमः, स्वमतिपरिकल्पितोऽयं पक्षः । तथाहि, तत्र तावद्यदुक्तं नानन्दमयस्य ब्रह्मत्वमित्यादि, तदसम्यक्, तस्य विकारार्थकमयट्प्रवाहपातित्वाभावात् । तथाहि, 'अन्नमयः' इत्यत्र मयटो विकारार्थत्वेऽपि 'प्राणमयः' इत्यादौ विकारार्थत्वाभावात् । तत्र प्राणमये तु पञ्चवृत्तेः प्राणस्यैकात्मकत्वात्कथं विकारत्वं घटस्य घट[वि]कारत्वाभावात् । एवं विकारार्थानुपपत्त्याऽगत्या स्वार्थवृत्तिविवक्षया वा मयट्प्रयोग इति निश्चीयते । तथैव 'विज्ञानमयः' इत्यत्रापि तद्वाच्यस्य जीवात्मनश्चेतनस्य नान्यविकारत्वं संभवति, तथा सति स्वरूपहानेः "न जायते म्रियते वा विपश्चित्" इत्यादिशास्त्रविरोधाच्च । तत्रापि प्राचुर्ये एव मयट्प्रत्यय इत्यवगम्यते । ननु कथं जीवात्मनो विज्ञानप्रचुरत्वं संसारित्वादिति चेत् ? न, बद्धावस्थायां विज्ञानधर्मस्य संकोचेऽपि तस्य स्वाभाविकत्वविवक्षया तथोक्तेः, "नहि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यतेऽविनाशित्वात्" इति श्रुतेः । तस्माद्विकारार्थप्र-

वाह एव नास्ति कुतस्तत्पातशङ्का कुतस्तरामर्द्धजरतीयन्या-यापातप्रसङ्गश्च । प्रत्युत प्राचुर्यार्थिकविज्ञानमयपदसन्निधाना-त्सुतरां प्राचुर्यार्थावगमः । न चैकत्राभ्यासेन द्वित्रिकृत्वः प-ठितस्य सन्निहितस्य शब्दस्यैकार्थपरत्वनियम इति वक्तुं शक्यः "पौर्णमास्यां पौर्णमास्या यजेत"इत्यत्र पाठस्य साम्यस-न्निधानत्वयोः सतोरपि पूर्वस्य सप्तम्यन्तस्य कालवाचित्वेनो-त्तरस्य च तृतीयान्तस्य कालयुक्तकर्मवाचित्वेन भिन्नार्थत्वस्य च पूर्वकाण्डे निर्णयदर्शितत्वात् भगवता जैमिनिना । त-स्मात्स्वरूपासिद्धो हेतुः मयटो विकारार्थप्रवाहस्य हेतुः स्वरू-पस्यासिद्धत्वादित्यर्थः । यदुक्तम्—आनन्दमयस्य शिरस्त्वा-द्यवयवपाठाद्विकृत एव पदार्थ इति, तदसमीचीनं प्रियमोदादि-शब्दवाच्यानामपि मनोऽभीप्सितदर्शनजातादीनां सुखानां तद्वि-भूतिलक्षणतदंशत्वादवयवोक्तियुक्तैव । तथा चान्यत्र स्पष्टमेव "एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति" इत्यादि-श्रुत्या । तस्मादवयवविधानस्य परार्थत्वान्न विरोधः। यदुक्तमा-नन्दमयस्य ब्रह्मत्वे तस्यैवावयवावयवित्वापत्तिस्तयोरेकार्थत्वा-दिति, तदप्यविचारितं तयोरेकार्थपरत्वस्येष्टत्वात् । कयाचिद्विव-क्षयोक्तः अंशांशिनोर्विभूतिविभूतिमतोरभेदो न विरुद्ध्यते। य-दप्युक्तं प्रातिपदिकमात्रस्यैवानन्दस्याभ्यासान्नानन्दमयस्या-तो नानन्दमयं ब्रह्मेति, तदप्यपेशलं "वसन्ते वसन्ते ज्योति-षा यजेत"इत्यत्र ज्योतिःशब्दस्य ज्योतिष्टोमपरत्वं पूर्वतन्त्रे निर्धारितं, तद्वदिहापि प्रातिपदिकस्यानन्दपदस्यानन्दपरत्वं यु-क्तमेव गुणस्य गुणिनमन्तरेण स्थित्यनुपलब्धेः । अत आनन्द-मयवाच्यं ब्रह्मैव । यच्चोक्तं मयट्प्राचुर्येऽपि दुःखाल्पस्य तत्र प्रतीतिर्दुर्वारा प्राचुर्यस्य प्रतियोग्यल्पसापेक्षत्वादित्यादिना,

दसाधु, यद्यपि प्राचुर्यस्य प्रतियोग्यल्पसाक्षेत्वमस्तीति सत्यं तथापि स्वात्मन्येव प्रतियोगिसत्तानियमाभावात् । अन्यत्रापि प्रतियोगिसत्तामपेक्ष्य प्रयोगस्य प्रवृत्तिः सकृच्छ्रत्येव । यथा 'प्रचुरप्रकाशो दिवाकरः' इति प्रयोगस्य इन्दुवह्निदीपनक्षत्रादीन् स्वात्मभिन्नान् स्वल्पप्रकाशानपेक्ष्य प्रवृत्तिरितरथा विरोधादियोगानुपपत्तेः; तद्वदिहापि प्रियमोदादीन् वैषयिकान् सुखानपेक्ष्य तथा प्रयोगप्रवृत्तिरविरुद्धा । अन्यथा स्वात्मन्येवोभयकल्पनायां तमःप्रकाशयोरिव महद्विरुद्धेन वाक्यमूक[ता] प्रसङ्गात् । किञ्च तत्प्रचुरत्वं हि तत्प्रभूतत्वम् । तच्चेतरस्य सत्तां नावगमयति, अपितु अल्पत्वं निवर्तयति । इतरसद्भावाभावौ प्रमाणान्तरावसेयौ । इह च प्रमाणान्तरेण तदभावोऽवगम्यते "अपहतपाप्मा" ( छा० उ० ८–७–१ ) इत्यादिश्रुत्येति । अन्यैरपि वैष्णवाचार्यैरुक्तं—तस्मादानन्दमयं ब्रह्मैव न क्षेत्रज्ञसम्भावनाऽपि । यदुक्तं ब्रह्मपुच्छमिति आनन्दमय इत्यनयोर्वाक्ययोर्ब्रह्मशब्दस्य सम्प्रयोगासम्प्रयोगाभ्यामपि नानन्दमयवाच्यं ब्रह्मेति, तत्तुच्छं यथाऽऽनन्दमयवाक्ये ब्रह्मशब्दासम्प्रयोगस्तथा ब्रह्म पुच्छमिति वाक्ये आनन्दासम्प्रयोगस्य तुल्यत्वात् । अनयोर्मध्ये सूत्रितत्वेनाभ्यस्तत्वेन चाऽऽनन्दपदस्यैव सूत्रकाराभिमतत्वाद्बलीयस्त्वम् । तद्विरुद्धश्च तव पक्ष एव महद्दोषमावहति । यदि ब्रह्माभ्यास एव सूत्रकृदभिमतः स्यात्तर्हि "ब्रह्म पुच्छं प्रतिष्ठाभ्यासात्" इति सूत्रितं भवेत् । न त्वेतद्दृश्यते, किन्तु आनन्दमयं प्रतिज्ञाय अभ्यासश्च हेतुतयोक्तः । तथात्वे च प्रतिज्ञाहेत्वोरुभयोरपि सूत्रितयोर्हानिः असूत्रितस्य च कल्पनाप्रसङ्गात् । किञ्च भृगुवल्ल्यामपि प्राणाद्युपासने उत्तरोत्तरजिज्ञासायास्तदवस्थत्वादानन्दस्य

ज्ञानानन्तरमुपदेशसमाप्तेश्चानन्दस्य बलिष्ठत्वम् । तस्मान्निष्कृष्ट एष पक्षः । न च 'असद्ब्रह्म' इत्यत्रानन्दमयस्य त्यागादन्यपरत्वं तस्येति वक्तुं शक्यते गुणिमात्रस्य निर्देशेऽपि गुणप्रतिपत्तिः सुकरैव, सर्वज्ञस्यानन्दाद्यनन्तगुणस्यैव प्रस्तुतत्वात् । यदुक्तम्–आनन्दमये ब्रह्मण्यभ्युपगम्यमाने सविशेषं ब्रह्माभ्युपगतं स्यादित्यादि, तत्तुच्छतरं, "सैषानन्दस्य मीमांसा भवति" इति गुणभूतानन्दस्योत्तरोत्तरवाक्यैराधिक्यं निर्धार्य "आनन्दं ब्रह्मणो विद्वान्" ( तै० २–९ ) इति गुणगुणिनोः पृथक्पाठ एव कण्ठरवेण ब्रह्मणः सविशेषत्वं ज्ञापयति । न च "यतो वाचो निवर्त्तन्ते" ( तै० २–९ ) इति वाक्यशेषेण निर्विशेषत्वं वक्तुं शक्यं, तस्य वाक्यस्य ब्रह्मानन्दस्यान्येषामानन्दवत्परिच्छेदवारणपरत्वात् । अन्यथा तत्रैवोत्तरार्द्धे "आनन्दं ब्रह्मणो विद्वान्न बिभेति कुतश्चन" इति भेदनिर्देशो वेदनक्रियाविषयत्वनिर्देशश्च विरुद्धेयाताम् । नहि युष्मत्पक्षे धर्मधर्मिभावेन निर्देशः सङ्गच्छते । वेदनाविषयस्तु सुतरामनवगमस्तस्मादानन्दमयः परमात्मैवेति सिद्धम् । किञ्च मयटो विकारार्थे को वानन्दमयपदार्थ इति विवेचनीयं चेतनोऽचेतनो वेति । न तावच्चेतन इति वाच्यं, तस्य निर्विकारत्वात् एकरसत्वाच्च । नाप्यचेतनः जडत्वात् । इतरथा घटादीनामप्यानन्दाश्रयत्वापत्तेः, तेषामपि जडत्वसाम्यात् यस्माद्विकारार्थः कोपि न घटते, तस्मात्प्राचुर्यार्थ एव मयट् आनन्दप्रचुरश्च परमात्मा श्रीभगवान् पुरुषोत्तम एवेत्यलं विस्तरेण ॥ २० ॥

इत्यानन्दमयाधिकरणम् ॥ ६ ॥

( ७ अन्तराधिकरणम् । २१-२२ )

एवमधिकरणद्वयेन सामान्यतः क्षेत्रक्षेत्रज्ञयोः कारणत्वं निरस्तमिदानीं विशेषतः प्राप्तैश्वर्याणां क्षेत्रज्ञानां चेतनानां प्रधानकार्य्याणामाकाशादीनामचेतनानां चेतनत्वं निराकरोत्यापादसमाप्तेः ।

## अन्तस्तद्धर्मोपदेशात् ॥ २१ ॥

छान्दोगैरिदमाम्नातं "एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेश आप्रणखात् सर्व एव सुवर्णः" "तस्य यथा कप्यासं पुण्डरीकमेवाक्षिणी तस्योदिति नाम स एष वै सर्वेभ्यः पाप्मभ्य उदितः। उदेति ह वै सर्वेभ्यः पाप्मभ्यो य एवं वेद तस्य ऋक् साम च गेष्णावित्यधिदैवतम्" ( छा० उ० १-६ ७, ८ ) "अथाध्यात्ममपि अथ य एषोन्तरक्षिणि पुरुषो दृश्यते सैवर्क् तत्साम तदुक्थं तद्यजुस्तद्ब्रह्म तस्यैतस्य तदेव रूपं यदमुष्य रूपं यावमुष्य गेष्णौ तौ गेष्णौ यन्नाम" ( छा० उ० १-७-५ ) इति । तत्र संशयः आदित्यमण्डलाक्ष्णोरन्तस्थत्वेन श्रूयमाणः पुण्यवशात्प्राप्तैश्वर्यः कश्चित् सवित्रादिक्षेत्रज्ञविशेषः उत नित्यशुद्धस्वाभाविकापरिच्छिन्ननिरतिशयैश्वर्यः श्रीपुरुषोत्तम इति । किं तावत् ? क्षेत्रज्ञ एवेति, हिरण्यश्मश्रुरित्यादिरूपकथनेन शरीरयोगश्रवणात् । किञ्च "ये (१)चैतस्मात्पराञ्चो लोकास्तेषां चेष्टे देवकामानां च" ( छा० उ० १-६-८ ) इत्यादिना "स एष ये चैतस्मादर्वाञ्चो लोकास्तेषां चेष्टे मनुष्यकामानाम्" ( छा० उ० १-७-६ ) इत्यादिना चोभयोरप्यैश्वर्ययत्ताश्रवणात् "एषोऽन्तरादित्यः । एषोऽन्तरा-

(१) 'ये चामुष्मात्' क० ।

क्षिणी" इत्यादिपराश्रितत्वश्रवणाच्च । नहीश्वरे भगवति रूपवत्त्वपरिच्छिन्नैश्वर्यपराश्रितत्वानां जीवासाधारणधर्माणां श्रवणं क्वापि दृश्यते, प्रत्युत तद्विपरीतश्रवणात्—"अशब्दमस्पर्शमरूपम्" ( का० १-३-१५ ) इति "एष सर्वेश्वरः । एष सर्वभूताधिपतिः" ( बृ० उ० ४-४-२२ ) इति "स वा कस्मिन्प्रतिष्ठते" इति "स्वमाहिम्नि" इत्यादिना । किञ्च शरीरयोगे परिच्छिन्नैश्वर्ये च सति कर्मयोगोऽपि दुर्वारः शरीरादिकारणत्वात्; तद्वत् सुखदुःखयोरवश्यंभावित्वात् । तस्माद्धिरण्यगर्भादिष्वन्यतमः कश्चित् क्षेत्रज्ञ एवेति प्राप्ते राद्धान्तमाह—अन्तस्तद्धर्मोपदेशात् । आदित्याक्ष्णोरन्तः श्रूयमाणः पुरुषः सर्वेश्वर एव । कुतः ? तद्धर्मोपदेशात् तस्यैव धर्माणामस्मिन्वाक्ये उपदेशात् । तथाहि, "सर्वेभ्यः पाप्मभ्य उदितः" ( छा० उ० १-६-७ ) इति सर्वपापगन्धसम्बन्धासंस्पर्शत्वम् "उदेति सर्वेभ्यः पाप्मभ्यः एवं वेद" ( छा० उ० १-६-७ ) इति स्वोपासकस्य सर्वपापेभ्यो मोचयितृत्वं "सैवर्क् साम तदुक्थं तद्यजुः" (छा० उ० १-७-५) इति सर्वात्मकत्वमित्यादिना ब्रह्मण एवासाधारणमुपदेशोऽत्र श्रूयते । तथाऽन्यत्रापि "आत्माऽपहतपाप्मा" ( छा० उ० ८-७-१ ) इत्यादिसंसारबन्धस्थितिमोक्षहेतुरिति, "एष सर्वभूतान्तरात्मा" इत्यादिना । न ह्येतेषामन्यत्र सम्भवः । क्षेत्रज्ञानां कस्यचिदपि सर्वपापविनिर्मुक्तिर्नास्ति । अतः परमेश्वर एव । न च रूपवत्त्वं विरुद्ध्यते सकलपत्वादीनां स्वाभाविकधर्माणामिव रूपवत्त्व(स्य) शास्त्रसिद्धत्वात् । न च मायिकत्वकल्पनावकाशः, मोक्षश्रुतिविरोधत् । तथाच—

"यदापश्यः पश्यते रुक्मवर्णं कर्त्तारमीशपुरुषं ब्रह्मयोनिम् ।

तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति" ॥

इति श्रुत्या भगवद्रूपदर्शनं मोक्षफलकत्वेन प्रतिपाद्यते, तत्र मायिकत्वारोपणे मोक्षविरोधः । नहि मायावस्तुदर्शनं मोक्षफलकं भवितुमर्हति । तथात्वे सति स्वस्यान्येषां च देहानां पृथिव्यादीनां च मायामयत्वाविशेषात् तद्दर्शनस्य सर्वप्राप्तत्वात् सर्वमोक्षप्रसङ्गः । तस्मात्परमार्थ एव भगवदीयो विग्रहो नित्यदिव्याप्राकृतद्रव्यलक्षण उपासकानां सर्वपुरुषार्थसाधक इति । तथाऽन्यत्रापि श्रूयते—

"वेदाहमेतं पुरुषं महान्त—
मादित्यवर्णं तमसः परस्तात्" इति ।

समस्ताः शक्तयश्चैता नृप यत्र प्रतिष्ठिताः ।
तद्विश्वरूपवैरूप्यं रूपमन्यद्धरेर्महत् ॥
समस्तशक्तिरूपाणि तत्करोति जनेश्वर ।
देवतिर्य्यङ्मनुष्याख्य चेष्टावन्ति स्वलीलया ॥
जगतामुपकाराय न सा कर्मनिमित्तजा ॥

इत्यादिपराशरवचनात् । श्रीपञ्चरात्रे च—

यो वेत्ति भौतिकं देहं कृष्णस्य परमात्मनः ।
स सर्वस्माद्बहिः कार्य्यः श्रौतस्मार्त्तविधानतः ॥
मुखं तस्यापि चालोक्य सचैलं स्नानमाचरेत् ॥

इत्यादि,

न भूतसङ्घसंस्थानो देहोऽस्य परमात्मनः ॥

इति महाभारताच्च । न च परिच्छिन्नैश्वर्यमत्र विधीयते, अधिदैवादिव्यवसायपरत्वात् । परिच्छेदवाक्यस्यैकदेशक-

थनेनैश्वर्यस्य परिच्छेदशङ्का । यथाऽनन्तब्रह्माण्डनायकोपि श्रीरामः 'अयोध्याधिपतिः' इत्यादिव्यपदेशेन परिच्छिद्यते, तथाऽत्रापि; अन्यथाऽधिदैवतविभागानुपपत्तेः । न च "अन्तरादित्य" इत्युक्तौ पराश्रयत्वापत्तिर्वाच्या सर्वाश्रयत्ववत् सर्वान्तरत्वस्यापि शास्त्रसिद्धत्वात् "अन्तः प्रविष्टः शास्ता जनानाम् । एष सर्वभूतान्तरात्मा" "यः पृथिव्यां तिष्ठन्" इत्यादिना । नच 'अशब्दम्' इत्यादिवाक्यविरोधः शङ्कनीयः, तस्य प्राकृतशब्दादिनिषेधपरत्वात् । तथाऽन्यत्र तद्गुणत्वेनाप्राकृतत्वं स्वाभाविकत्वं च गम्यते "सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः" ( छा. उ. ३–१४–२ ) इत्यादि । यदुक्तं शरीरयोगादिना कर्मयोगो दुर्वार इत्यादि । तदत्यन्ततुच्छं, तस्य सर्वनियन्तृत्वात् । न हि रूपश्रवणवत् कुत्रापि तस्य कर्मयोगः श्रूयते । प्रत्युत कर्मनियन्तृत्वं च मन्त्रैः प्रतिपाद्यते "कर्माध्यक्षः सर्वभूताधिवासः" इत्यादिभिः । ननु देवानामपि कर्मण्यनधिकारात् कर्मभावत्वमिति चेत् ? न, क्रियमाणकर्माभावेऽपि सञ्चितप्रारब्धयोः फलस्य सुखदुःखलक्षणस्य तेषामपि सत्त्वात् । दृश्यते च तेषां पुण्यकर्मभिर्भोगाधिक्यं पापैश्चासुरादिजनितदुःखमिति । देवानां सुखाधिक्येऽपि परस्माद्भयं यस्य न (तस्य) सुखभोक्तृत्वम् । पुरुषोत्तमपारतन्त्र्यादपि न देवानां तत्त्वम् । "भीषास्माद्वातः पवते भीषोदेति सूर्यः" इत्यादिश्रवणात् । ननु युष्मत्पक्षे मुक्तानामपि भगवत्तन्त्रत्वान्न स्वातन्त्र्याभ्युपगमस्तथा सति मुक्तबद्धयोः पारतन्त्र्याविशेषाद्भयस्य मुक्तावपि तादवस्थ्यमिति चेत् ? न, मुक्तानां सर्वेश्वरतन्त्रत्वेऽपि भयकारणाभावान्न भयमस्ति । अन्येषां तु चतुर्मुखपर्यन्तानां तद्भावाद्भयं विद्यते । एतदुक्तं भवति भयकारणं हि सर्वेश्वराद्भगवतोन्तरत्वम् ।

तत्त्वं च तदन्यसाधनान्यसम्बन्धान्यप्रयोजनवत्त्वम् । तस्य च देवादिषु सत्त्वाद्भयमपि श्रूयते । मुक्तानां तादृशानां मुमुक्षूणां च तदभावान्न भयमिति । विद्यते चान्वयव्यतिरेकवाक्ये "यदा ह्येवैषैतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते अथ सोऽभयं गतो यदा ह्येवैष तस्मिन्नुदरमन्तरं कुरुते अथ तस्य भयं भवति" ( तै. २–७ ) इति ।

अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते ।

तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम् ॥" ( गी. ९–२२ ) इति भगवद्वचनमिति । अस्यार्थः—यदा यस्मिन् श्रीभगवतो निर्हेतुककृपाकटाक्षसमये एषः अनन्यशरणो विद्वान् एतस्मिन् पुरुषोत्तमे भगवति अभयं यथा स्यात्तथा प्रतिष्ठामुक्तव्यभिचारशून्यामनन्यनिष्ठां तस्यैव कृपया विन्दते लभते । अथ उक्तनिष्ठालाभानन्तरमेव अभयं गतो भवति भयकारणान्यनिष्ठाभावात् । पुरुषोत्तमत्वं व्यञ्जयन् विशिनष्टि अदृश्ये दृश्यो जडवर्गस्तद्विलक्षणे । अनात्म्ये आत्मनां चेतनानां वर्गमात्म्यं तद्भिन्ने क्षराक्षराभ्यां विजातीये, तथाच श्रुतिः—"प्रधानक्षेत्रज्ञपतिर्गुणेशः" इति । अनिरुक्ते इयत्तावच्छिन्नविषयकशब्दानिर्वाच्ये । निरतिशये निरङ्कुशैश्वर्येऽनन्ताचिन्त्यशक्तौ इत्यर्थः । प्रतिष्ठाशब्दो 'नित्याभियुक्तानाम्' इतिपदेन भगवतैव व्याख्यातः । नित्याभियुक्तं चानन्यनिष्ठमेव । यदा चाज्ञानकाले एषोऽविद्वान् उक्तलक्षण उदरम् ईषदपि साधनादित्रयाणामेकतमं कमप्यन्तरम् अन्यानिष्ठां कुरुते तस्य भयं भवतीत्यर्थः । "तन्निष्ठस्य मोक्षव्यपदेशात्"( ब्र. सू. १–१–७ )इत्यत्र सूत्रकृतापि व्यतिरेकमुखेन तदन्यनिष्ठस्य संसारित्वमुक्तं भवति "अथोऽन्यां देवतामुपासते" इत्यादिवाक्या-

नामप्येतदर्थकत्वम् । एतच्चोक्तमेव स्पष्टं श्रूयते चान्यत्र "यो स्वां देवतामतियजति परस्वायै देवतायै च्यवते न परं प्राप्नोति पापीयान्भवति" इत्यादि । स्मर्यतेऽपि—

ईश्वरो भगवान्विष्णुः परमात्मा सनातनः ।
शास्ता चराचरस्यैको यतीनां परमा गतिः ॥
ध्यायतेऽर्चते स योऽन्यं विष्णुलिङ्गसमाश्रितः ।
कल्पकोटिशतेनापि न गतिस्तस्य विद्यते ॥

इत्यलं प्रासङ्गिकोक्त्या । तस्मात्पुरुषोत्तम एवादित्याद्यन्तःस्थो न देवप्रभृतिषु कतमोऽपि क्षेत्रज्ञः ॥ २१ ॥

इतश्च—

## भेदव्यपदेशाच्चान्यः ॥ २२ ॥

आदित्याद्यन्तःस्थः परमेश्वर एव । कुतः ? भेदव्यपदेशात् आदित्यादिक्षेत्रज्ञवर्गाद्भेदेन व्यपदिश्यते परमपुरुषस्तस्मात् । श्रूयते चान्तर्यामिब्राह्मणे—"य आदित्ये तिष्ठन्नादित्यादन्तरो यमादित्यो न वेद यस्यादित्यः शरीरं य आदित्यमन्तरो यमयत्येष ते आत्मान्तर्याम्यमृतः" ( बृ. उ. ३–७–९ ) इत्यादिना । तस्मात्परं ब्रह्मैवादित्याक्ष्णोरन्तःस्थमिति सिद्धम् ।

इत्यन्तराधिकरणम् ॥ ७ ॥

( ८ आकाशाधिकरणम् । सू० २३ )

## आकाशस्तल्लिङ्गात् ॥ २३ ॥

इदं श्रूयते छान्दोग्ये शालावत्यजैवलि(१)संवादे—"अस्य लोकस्य का गतिरित्याकाश इति होवाच सर्वाणि ह वा इमानि भूतानि आकाशादेव समुत्पद्यन्त आकाशं प्रत्यस्तं यन्त्याकाशो ह्येवैभ्यो ज्यायानाकाशः परायणम्" इति। तत्र संशयः—किमत्राकाशशब्दवाच्यो भूताकाश उत परमेश्वर इति। किं तावत्प्राप्तम्? भूताकाश इति। कुतः? आकाशशब्दस्योभयवाचकत्वेऽपि भूताकाशे प्राचुर्यादन्तरङ्गत्वं, ब्रह्मपरत्वं क(२)चिद्वेद एव, अतो गौणत्वम्। मुख्ये संभवति गौणस्यान्याय्यत्वादिति प्राप्तेऽत्र ब्रूमः—आकाशस्तल्लिङ्गात्। आकाशोऽत्र परमेश्वर एव न भूताकाशः। कुतः? तल्लिङ्गात्। लिङ्गं चाव्यभिचारिधर्मः। लीनं स्वावच्छिन्नं धर्मिविशेषं गमयतीति तथेति व्युत्पत्त्याऽपि वाक्यशेषे परस्यैवासाधारणलिङ्गानां सर्वकारणत्वज्यायस्त्वपरायणत्वादीनां श्रवणात्। न ह्येतेषां भूताकाशे संभव इति यावत्। नन्वाकाशस्यापि वाय्वादीनां कारणत्वं तेभ्यो ज्यायस्त्वं तेषां परायणत्वं च संभवत्येवेति चेत्? न, वाय्वादीनां कारणत्वादिसंभवे सत्यपि "सर्वाणि ह वा इमानि भूतानि" इति सर्वपदपाठात् सर्वकारणत्वादीनां लिङ्गानामसंभवस्तदवस्थ एव। नहि आकाशस्यात्मकारणत्वमस्ति। तथा सति आत्माश्रयतापत्तेः।

---

( १ ) शालावत्यो ब्राह्मणो जैवालराजं पृच्छति, स च वदति, तस्मिन् संवादे इत्यर्थः।

( २ ) "यदेष आकाश आनन्दो न स्यात्" (तै.२–७) "आकाशो वै नाम नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्म" (छा० उ० ८–१४–१) इत्येवमादौ।

ननु तत्र पक्षेऽपि कारणस्य कारणान्तरानभ्युपगमादात्माश्रयत्व-स्य साम्यमेवेति चेत् ? न, यदि प्रकृतस्यान्यत्र श्रूयमाणं कार्य-त्वं तर्हि तस्य गौणत्वेनात्माश्रयत्वं दूषणमेव । अस्माकं तु पर-मेश्वरस्य श्रीभगवतः सर्वत्रात्मसन्नारायणादिशब्दैः कारणत्व-मेव श्रूयते, कार्यत्वस्य कुत्राप्यप्रसिद्धत्वात् । प्रत्युतात्मा-श्रयत्वानन्यकारणकत्वादि श्रुतिभिरेव प्रतिपाद्यते–"सकारणं करणाधिपाधिपः" [इति] इतरकारणकारणत्वमुपक्रम्य "न तस्य कश्चिज्जनिता न चाधिपः" इत्यादिना । तच्च श्रुतिप्रमाणसिद्धं भूषणमेव । अतो नोक्तदोषः । यदुक्तम्–आकाशशब्दस्योभय-परत्वेऽपि आकाशे प्राचुर्यान्मुख्य इति । तन्न, योगवृत्त्या ब्रह्म-ण्यपि मुख्य एव आसमन्तात् काशते काशयतीत्याकाशः सर्व-मभिव्याप्याकाशत इति वा; "तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति" इति श्रुतेः । न च रूढ्या योगस्य बाध इति वाच्यं, रूढ्याप्याकाशशब्दस्य ब्रह्मपरत्वं श्रुतिसिद्धमेव "कोऽन्यात् कः प्राण्यात् यदेष आकाश आनन्दो न स्यात्" ( तै. २–७ ) "आकाशो वै नामरूपयो(१)र्निर्वहिता" ( छा. उ. ८–१४–१ ) । अत आकाशशब्दोऽत्र ब्रह्मपर एव । अन्यत्रापि कारणत्वज्यायस्त्वादीनां ब्रह्मलिङ्गत्वेन स्पष्टपठित-त्वात् "सोऽकामयत सर्वमसृजत विज्ञानमानन्दं ब्रह्म (२)रातेर्दातुः परायणम्" ( बृ. उ. ३–९–२८ ) "ज्यायान् पृथिव्या ज्या-यानन्तरिक्षात्" ( छा. उ. ३–१४–३ ) इत्यादिना । प्रकरणा-

---

(१) निर्वहिता उत्पत्तिस्थितिहेतुः । अस्याग्रे 'ते यदन्तरा तद् ब्रह्म' इति वाक्यशेषो वर्तते । ते नामरूपे 'यदन्तरा' यस्मादन्ये यस्य वा मध्ये स्तः तन्नामरूपास्पृष्टं ब्रह्मेति तदर्थः । तस्माद् वाक्यशेषाद् आकाशो ब्रह्म इति गम्यते इति भावः ।

(२) रातेः धनस्य दातुः यजमानस्येत्यर्थः ।

पसंहारे च "एष(१)परो वरीयान्" ( छा. उ. १-९-२ ) इत्यादिना । ननु आकाश इति श्रुतिः तस्याश्च लिङ्गापेक्षया बलीयस्त्वम् । तथोक्तं भगवता जैमिनिना पूर्वकाण्डे "श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात्" ( जै. सू. ३-३-७-१४ ) इति । नहि बलीयः प्रमाणं दुर्बलेन बाधितुमर्हतीति चेत् ? न, प्रमाणस्य बलीयस्त्वेऽपि प्रमेयलिङ्गोपपत्तावेव तस्य प्रवृत्तिरनुपपत्तौ चाप्रवृत्तिरिति न्यायः । अत्र परस्य ब्रह्मणोऽसाधारणानां लिङ्गानां भूताकाशे सर्वथाऽनुपपन्नत्वाद् अनुपपत्तिसहायस्य लिङ्गस्य प्राबल्यात्तेन श्रुतेर्बाधो घटते इति उभयोरपि शब्दवृत्त्योर्मुख्यत्वाविशेषात् । यथा कृशेन केनचित्पुरुषेण बलीयांसो देशीया जना बाधितुमनर्हा अपि राजसहायेन तेनैव सर्वेऽपि बाध्यन्ते तद्वदत्रापि केवलेन लिङ्गेन निर्बलत्वाद्बलीयसी श्रुतिर्बाधितुमनर्हापि बलवदनुपपत्तिप्रमाणसंस्कृतेन तेनैव बाध्यते सापीति न विरोध इति । तस्मिद्धमाकाशः परमात्मैवेति ॥ २३ ॥

इत्याकाशाधिकरणम् ॥

---

(२) एतस्य परत्वं देशतोऽनन्तत्वं वरीयस्त्वं च गुणत उत्कृष्टत्वं बोध्यम् ।

( ९ प्रणाधिकरणम् । सू० २४ )

## अत एव प्राणः ॥ २४ ॥

तत्रैव श्रूयते आकाशवाक्यानन्तरमुद्गीथे--"प्रस्तोतर्या (१)देवता प्रस्तावमन्वायत्ता" इत्युपक्रम्य "तां चेदविद्वान्प्रस्तोष्यसि मूर्द्धा ते व्यपतिष्यति कतमा सा देवतेति प्राण इति होवाच सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति प्राणमभ्युज्जिहते सैषा देवता प्रस्तावमन्वायत्ता" ( छा. उ. १--११ ४, ५ ) इत्यादि । तत्र प्राणशब्दस्यापि वायुवृत्तौ(२)ब्रह्मणि च प्रयोगदर्शनात्पूर्ववत् संशयः । किं युक्तम् ? वायुवृत्तिरेवात्र प्राणशब्देनोच्यते । कुतः ? तत्रैव प्राणशब्दस्यातिप्रसिद्धत्वात्, वेदे हि प्राणेन्द्रियसम्वादे प्रयोगदर्शनात् ; इति प्राप्ते प्रब्रूतेऽतिदेशमुखेन--अत एव प्राणः । प्राणशब्दवाच्यः पुरुषोत्तम एव न वायुवृत्तिः । कुतः ? अत एव तल्लिङ्गादेव "सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति प्राणमभ्युज्जिहते" इति वाक्यशेषे सर्वभूतसम्वेशनादिब्रह्मलिङ्गस्य श्रुतत्वात् अतिदेशप्रयोजनभूताशङ्काऽस्तु । ननु "यदा वै पुरुषः स्वपिति प्राणं(३)तर्हि वागप्येति प्राणं चक्षुः प्राणं श्रोत्रं प्राणं मनः(४)स यदा प्रतिबुध्यते

---

(१) धनार्थी चाक्रायणर्षी राज्ञो यज्ञं गत्वोवाच-हे प्रस्ततिः । या देवता प्रस्तावं सामभक्तिम् अन्वायत्ता अनुगतेति ।

(२) "प्राणबन्धनं हि सोम्य मनः" (छा. उ. ६-८-२) "प्राणस्य प्राणम्" ( बृ. उ. ४-४-१८ ) इत्येवमादौ क्वचिदेव वेदे इति शेषः । तत्र प्राणः परमात्मा बन्धनमाश्रयो यस्येति ब्रह्मोच्यते ।

(३) तर्हि तस्यामवस्थायाम् । वाक् इत्यनुक्तकर्मेन्द्रियोपलक्षणं, चक्षुः श्रोत्रे बुद्धीन्द्रियाणां, मनश्च बुद्धेरिति बोध्यम् ।

(४) 'स' आदर्शपुस्तके नास्ति, अस्ति च तत्र 'चक्षुः प्राणं मनः प्राणं श्रोत्रं यदा' इति मनःश्रोत्रयोर्व्यत्यासेन पाठः ।

प्राणादेवाधि पुनर्जायते" ( श. ब्रा. १०-३-३-६ ) इत्यादि-श्रुत्या वायुवृत्तिलक्षणे प्राणेऽपि कार्यप्रवेशनादिश्रवणात्तदेवात्रो-पास्यतया विधीयते इति चेत् ? न, तत्रेन्द्रियमात्रसम्वेशनसंभवे-ऽपि महाभूतानामचेतनानां चेतनानां च सम्वेशनादेः पुरुषोत्तमं विना कुत्राप्यश्रवणात् । तस्माच्चेतनाचेतनविलक्षणपरमकारण-मेव सर्वशक्ति ब्रह्म प्राणयति सर्वमिति प्रकर्षेणाणिति लभ्यते-ऽस्मिन्सर्वं जगदिति वा प्राणशब्दवाच्यमिति सिद्धम् ॥

इति प्राणाधिकरणम् ॥ ९ ॥

---

( १० ज्योतिरधिकरणम् । सू० २५-२८ )

## ज्योतिश्चरणाभिधानात् ॥ २५ ॥

इदमाम्नायते छान्दोग्ये गायत्रीविद्यायाम्—"अथ यदतः परो दिव्यो ज्योतिर्दीप्यते विश्वतः पृष्ठेषु सर्वतः पृष्ठेष्वनुत्तमे-षूत्तमेषु लोकेष्विदं वाव यद्यदिदस्मिन्नन्तः पुरुषे ज्योतिः" ( छा. उ. ३-१३-७ ) इति । तत्र सन्दिह्यते किमत्र ज्योतिः-शब्दाभिधेयं प्रसिद्धज्योतिः परं ब्रह्म वा ? तत्र ज्योतिःशब्द-स्य तमोनिवारकत्वप्रसिद्धेः तदेव श्रुत्या व्युत्पाद्यते, दीप्यते इति द्युमर्यादत्वश्रवणाच्च । न च भौतिकेऽपि द्युमर्यादत्वमनुप-पन्नमेव अर्वागपि दिवो दर्शनादिति वाच्यं, तस्योपासनार्थं द्युम-र्यादत्वस्य विधानमविरुद्धम् । न हि ब्रह्मणि तत्त्वं युक्तं, तस्य वि-भुत्वेन निष्प्रदेशत्वात् । किञ्च "तदेतद् दृष्टं च श्रुतं चेत्युपासीत चक्षु-ष्यः श्रुतो भवति य एवं वेद" (छा०उ०३-१३ ८)इति अल्पफलश्र-

षणादपि। तस्माद्भौतिकमेव तेज इति प्राप्ते ब्रूमः—ज्योतिश्चरणाभिधानात्। अत्र ज्योतिःशब्दवाच्यं निरतिशयदीप्तिमत्परं ब्रह्मैव "पादोऽस्य सर्वाभूतानि त्रिपादस्यामृतं दिवि" (छा.३-१२-६) इतिचतुष्पादत्वेन निर्देशात्। पूर्वस्मिन्वाक्ये द्युसम्बन्धितया प्रसिद्धं ब्रह्मात्रापि द्युसबन्धाविशेषाद्यच्छब्देन प्रत्यभिजायते। यच्छब्दस्य सर्वनामत्वेन प्रसिद्धार्थपरत्वात्। अतो न भौतिकं तेजः। न च यदतः पर इति मर्यादाश्रवणविरोध इति वाच्यम्, उत्कृष्टतापरत्वात्। अत्र परशब्दस्य नाव्यापकत्वविवक्षा, नापि फलश्रवणाविरोधः। श्रूयते च ज्योतिःशब्दो ब्रह्मपरत्वेन (१)"तद्देवा ज्योतिषां ज्योतिः" इत्यादिना। नहि ब्रह्मोपासनेऽल्पाधिक्यफलनियमोऽस्ति। यत्र यथोपासनं तत्र तथैव फलं तस्य तु सर्वफलदातृत्वात् सर्वमुपपद्यते। तथाच श्रूयते वाजसनेयिनामाग्निरहस्ये—"तं यथा यथोपासते तदेव भवति"इति। अत्र च ब्रह्मणः कौक्षेयज्योतिषा तादात्म्योपासने तात्पर्यमिति भावः॥ २५॥

## छन्दोऽभिधानान्नेति चेन्न तथा चेतोऽर्पण-निगमात्तथाहि दर्शनम्॥ २६॥

पूर्ववाक्ये "गायत्री वा इदं सर्वम्"( छा. उ. ३-१२-१ ) इत्युपक्रम्य"तावानस्य महिमा" ( छा. उ. ३-१२-६ ) इत्यस्यापि वाक्यशेषस्य उपक्रान्तगायत्रीछन्दोविषयत्वेन छन्दस एवाभिधानदर्शनान्न ब्रह्मण इति चेत् ? न, तथा चेतोऽर्पणनिगमात्। न ह्यत्र गायत्रीशब्देन छन्दोमात्राभिधानमभ्युपगन्तव्यं, वर्णसन्निवेशमात्रायास्तस्याः सर्वात्मकत्वासंभवात्;

(१) 'सदैव' आदर्शपुस्तके।

अपि तु ब्रह्मण्येव गायत्रीद्वारेण चेतोऽर्पणं चित्तसमाधानं निगम्यते । गायत्रीसादृश्यानुसन्धानं वा फलार्थमत्रोपदिश्यते । तत्र दृष्टान्तः—तथाहि दर्शनम् । यथा गायत्री षडक्षरैः पादैश्चतुष्पदा एवं ब्रह्मापि चतुष्पादिति चतुष्पदत्वयोगात्सादृश्यम् । ननु गायत्र्याश्चतुष्पात्त्वं विरुद्धमिति चेत् ? न, "इन्द्रः शचीपतिर्बलेन पीडितो दुश्च्यवनो मृषा सत्सु सासहिः" इत्यत्र गायत्र्याश्चतुष्पात्त्वश्रवणात् । तथाऽन्यत्रापि छन्दोभिधायिशब्दस्य सादृश्यात् प्रयोगो दृश्यते । "ते वा एते पञ्चान्ये पञ्चान्ये दश सन्तस्तत्कृतम्"इत्युपक्रम्याह—"सैषा विराड्" (छा. उ. ४-३-८) इति । तस्माद्गायत्रीशब्दोऽपि सादृश्याद्ब्रह्मैव । यद्वा, तथाहि दर्शनं दृश्यते चान्यत्र विकारद्वारेण (१)एवकारेणोपासनमित्यर्थः । "एतं ह्येव बह्वृचा महत्युक्थे मीमांसन्ते एतमग्नावध्वर्यव एतं महाव्रते छन्दोगाः" (ऐ.आ.३-२-३-१२) इति श्रुतौ दृष्टम् ॥ २६ ॥

## भूतादिपादव्यपदेशोपपत्तेश्चैवम् ॥ २७ ॥

गायत्रीशब्दवाच्यता ब्रह्मण एवाङ्गीकर्त्तव्या । कुतः ? चैवमिति चकारोत्रावधारणे, एवमेवेति यावत् । ब्रह्मण एव गायत्रीपदार्थत्वाभ्युपगतावेव भूतादिपादव्यपदेशोपपत्तेः भूतपृथिवीशरीरहृदयानां चतुष्पात्त्वोपपत्तेर्न तु छन्दोमात्रस्येत्यर्थः ॥२७॥

## उपदेशभेदान्नेति चेन्नोभयस्मिन्नप्यविरोधात् ॥ २८ ॥

ननु पूर्वत्र वाक्ये "त्रिपादस्यामृतं दिवि"(छा. उ. ३-१२-६ ) इति सप्तमीविभक्त्याऽऽधारत्वेन निर्देशात् "अथ यदतः

(१) अत्र 'द्वारेण ब्रह्मण एवोपासनमित्यर्थः' इति पाठः साधीयान् । आदर्शपुस्तके 'द्वारेण एवकारणेपास्वनमित्यर्थः' इति वर्तते, तदशुद्धप्रायम् ।

परो दिवो ज्योतिः" ( छा. उ. ३-१३-७ )इत्युत्तरत्र पञ्च
म्याऽवधित्वेन द्यौःनिर्दिश्यते । तथाच विभक्तिभेदेनोपदेशस्या
भेदाज्ज्यो[ति]र्वाक्ये न प्रत्यभिज्ञायाः संभवः इति चेत्? न, कुतः
उभयस्मिन्नप्यविरोधात् विभक्तिभेदेनोपदेशभेदेऽपि प्रत्यभिज्ञ
या अविरोधात् । प्रधानप्रातिपदिकार्थस्य प्रत्यभिज्ञा हेतोर्गुणभूतवि
भक्त्यर्थेन न प्रतिबद्धुं शक्यते इति भावः । यद्वा, (द्व)योरप्ये
कार्थत्वमेव यथा 'वृक्षाग्रे श्येनः' 'वृक्षाग्रात्परतः श्येनः' इत्युभ
यस्यापि प्रयोगस्य तात्पर्यैक्यवदत्रापीति । तस्मान्निरतिशयदीप्तिम
त्परब्रह्मैव तज्ज्योतिःशब्दाभिधेयमिति सिद्धम् ॥२८॥

इति ज्योतिरधिकरणम् ॥ १० ॥

---

( ११ इन्द्रप्राणाधिकरणम् । सू० २९-३२ )

## प्राणस्तथानुगमात् ॥ २९ ॥

ननु "न वै वाचो न चक्षूषीत्याचक्षते प्राण एवेदं सर्वम्
इत्यारभ्य कौषीतकिब्राह्मणे प्रतर्दनविद्याम्नायते-"प्रतर्दनो
वै दैवोदासिरिन्द्रस्य प्रियं धामोपजगाम युद्धेन च पौरुषेण च
( कौ. उ. ३-१ ) इत्यारभ्य तत्र "वरं ते ददामि" इतीन्द्रेण
क्तः प्रतर्दनस्तं प्रति "त्वमेव मेऽत्र वरं वृणीष्व यं त्वं मनुष्या
हिततमं मन्यसे" इति । तं वरं त्वमेवालोच्य मे मह्यं वृणीष्
देहीत्यर्थः । एवं प्रतर्दनेनोक्त इन्द्र इदमाह-"प्राणोऽस्मि प्रज्ञात्म
तं मामायुरमृतमित्युपास्व" ( कौ. उ.३-२ ) इति । उत्तर
त्रापि-"अथ खलु प्राण एव प्रज्ञात्मा इदं शरीरं परिगृह्योत्थ

पयति (कौ. उ. ३-८-३) इति। "न वाचं विजिज्ञासीत वक्तारं विद्यात्" ( कौ. उ. ३-४ ) इति च । उपसंहारे च "स एष प्राण एव प्रज्ञात्मा आनन्दोऽजरोऽमृतः" ( कौ. उ. ३-८) इति श्रूयते । तत्रेन्द्रप्राणशब्दवाच्यः किं जीवः उत परं ब्रह्मेति संशये जीव इति पूर्वः पक्षः, इन्द्रशब्दस्य तत्रैव प्रसिद्धेः । इन्द्रशब्दसहचरितप्राणशब्दस्यापि स एवार्थ इति "तं मामायुरमृतमित्युपास्व" इति तस्यैवोपास्यत्वोपदेशादिति प्राप्ते आह-प्राणस्तथानुगमात् । "प्राणोऽस्मि" इत्यादीन्द्रप्राणशब्दनिर्दिष्टः परमात्मैव। कुतः? तथानुगमात् हिततमत्वप्रज्ञात्मत्वानन्दत्वाजरत्वादीनां हि तथा परमात्मपरिग्रहे सत्येवानुगन्तुं शक्यत्वात् ॥२९॥

## न वक्तुरात्मोपदेशादिति चेदध्यात्मसम्बन्धभूमा ह्यस्मिन् ॥ ३० ॥

यदुक्तमिन्द्रप्राणशब्दानिर्दिष्टः परमात्मेति, तन्नोपपद्यते, "मामेव विजानीहि मामुपास्व" इति वक्तुरिन्द्रस्य "त्रिशीर्षाणं (१.)त्वाष्ट्रमहनमरु(२)न्मुखान् यतीन् शालावृकेभ्यः प्रायच्छम्" इत्येवमादिभिः प्रज्ञातजीवभावस्यैव स्वात्मन उपास्यत्वोपदेशात् । उपक्रमे जीवभावे निश्चिते सति "आनन्दोऽजरोऽमृतः" इत्युपसंहारस्यापि तदनुगुणतया नेतव्यत्वादिति

(१) त्वष्टृपुत्रं विश्वरूपं ब्राह्मणम् अहनम् अरुन्मुखान् रौति यथार्थं शब्दयति इति रुत् वेदान्तवाक्यं तत् मुखो येषां ते रुन्मुखाः तेभ्योऽन्यान् वेदान्तबहिर्मुखान् यतीन् शालावृकेभ्योऽरण्यश्वभ्यो दत्तवानस्मि इत्यर्थः ।

(२) 'अरुन्मुख्यान्' आदर्शपुस्तके ।

चेत् ? तत्र समाधत्ते—अध्यात्मसम्बन्धभूमा ह्यस्मिन् । आत्मनि सम्बन्धोऽध्यात्मसम्बन्धस्तस्य भूमा बहुत्वम् आत्मन्याधेयतया सम्बध्यमानानां तदसाधारणधर्माणां तथा चिदचितोश्च बहुलेन सम्बन्धबहुत्वस्य वक्तुः परमात्मत्वे सत्येव सम्भवात् । तथाहि, "यं त्वं मनुष्याय हिततमं मन्यसे" इत्युपक्रमे हिततमोपासनं परमात्मोपासनमेव तस्यैव हिततमत्वात्, "तमेव विदित्वाऽतिमृत्युमेति" इत्यादिश्रुत्यन्तरात् । तथा "एक एव साधु कर्म कारयति" इत्यादिसाधुकर्मकारयितृत्वं परमात्मन एव धर्मः, "तद्यथा(१)रथस्यारेषु नेमिरर्पिता नाभावरा अर्पिता एवमेवैता भूतमात्राः प्रज्ञामात्रास्वर्पिताः प्रज्ञामात्राः प्राणेऽर्पिताः" इति भूतमात्राप्रज्ञामात्राशब्दोदितचेतनात्मककृत्स्नवस्त्वाधारत्वं "स एष प्राण एव प्रज्ञात्मा आनन्दोऽजरोऽमृतः" इत्यानन्दादयश्च हि यस्मात्परमात्मन एव धर्माः, अतोऽस्मिन्प्रकरणे इन्द्रप्राणशब्दनिर्दिष्टः परमात्मैवोपास्य इत्यर्थः॥३०॥

एवं चेत्तर्हि कथमिन्द्रो मामुपास्वेत्युपदिष्टवानित्यत आह—

## शास्त्रदृष्ट्या तूपदेशो वामदेववत्॥३१॥

"ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि अयमात्मा ब्रह्म सर्वं खलु इदं ब्रह्म तज्जलानिति अभयं वै जनक प्राप्तोऽसि यदात्मानं वेदाहं ब्रह्मास्मीति अन्तः प्रविष्टः शास्ता जनानां सर्वात्मा सत आत्मान्तर्याम्यमृतः एष सर्वभूतान्तरात्मा एष ते आत्मान्तर्याम्यमृतः" इत्यादिशास्त्रदृष्ट्या परब्रह्म-

(१) यस्य अरेषु नेमिनाभ्योर्मध्यस्थशलाकासु चक्रोपान्तरूपा नेमिरर्पिता, नाभौ चक्रपिण्डिकायाम् अराः अर्पिताः एवं भूतानि पृथिव्यादीनि पञ्च मीयन्ते इति मात्राः, भोग्याः शब्दादयः पञ्चेति दश भूतमात्रा इत्यर्थः ।

णः सर्वान्तर्यामित्वेन सर्वात्मत्वमवगम्य "मामेव विजानीहि, मामुपास्व" इतीन्द्रस्य जीवस्यैव स्वात्मत्वेन परमात्मोपदेशो-ऽयं यथा वामदेवः शास्त्रदृष्ट्या स्वान्तर्यामिणं परमात्मानं पश्यन् "अहं मनुरभवं सूर्यश्च कक्षिवानृषिरस्मि विप्रः" ( बृ० उ० १-४-१० ) इति तमेवावोचत् ॥ ३० ॥

## जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात् ॥ ३१ ॥

"न वाचं विजिज्ञासीत वक्तारं विद्यात् त्रिशीर्षाणं त्वाष्ट्रमहनमरुन्मुखान्यतीन् शालावृकेभ्यः प्रायच्छम्" इत्यादौ प्राणशब्दवाच्यं प्राणवायुरन्यद्वा इति पूर्वपक्षे वायुरेव मुख्यवृत्त्या तत्रानुगमादिति चेत् ? न, प्राणस्तथानुगमात् । प्राणशब्दवाच्यत्वं परब्रह्मैव तत् शब्दवाच्यत्वं तस्यैवानुगमात् "प्राणस्य प्राणम्" इत्यादिश्रुतेः । न वक्तुरात्मोपदेशादिति चेदध्यात्मसम्बन्धभूमा ह्यस्मिन् । ननु वायुरेवोपासनाविषयस्तत्तदोपास्यस्य आत्मोपदेशात् वक्तुरिन्द्रादेः 'मामुपास्व' इत्यात्मोपदेशादिति चेत् ? न, अस्मिन्नध्याये अध्यात्मसम्बन्धभूमा बहुत्वेन भाति तदन्येष्वनुपपत्तेः, "नारायणादिन्द्रोजायत" इत्यादिवाक्यात् । शास्त्रदृष्ट्या तूपदेशो वामदेववत् । ननु मामित्यहमर्थस्य कथमपहूयत इति चेत् ? न, शास्त्रदृष्ट्या तूपदेशो वामदेववत् । यथा वामदेवः "अहं मनुरभवं सूर्यश्च" इत्यादिना शास्त्रदृष्ट्या तादात्म्योपदेशेन वक्तुं शक्य एव । जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात् । ननु जीवात्कारणं परं "प्राण एवेदं सर्वम्" इत्यादिना जीवमुख्यप्राणयोः परत्वविधानादिति

(२) 'अरुन्मुखान्' आदर्शपुस्तके ।

चेत् ? न, यतस्तदधिकारिभेदेन प्राणजीवब्रह्मणामुपास्यत्वैविध्यात् । ननु प्रकारभेदेन धर्मिभेदो विवक्षित एव इति चेद्धेत्वन्तरमाह—आश्रितत्वात् । यः कारणानि निखिलानि तानि कालात्मयुक्तान्यधितिष्ठत्येकः यदासीत्तदधीनमासीत् नामानि सर्वाणि यमाविशन्ति" इत्यादिना सर्वेषां कारणानां तत्तद्वाचकानां शब्दानां च ब्रह्माश्रितत्वात् । इह वेदान्तशास्त्रे सर्वेषां तदाश्रितत्वयोगादिति । अनेन पूर्वोक्तन्यायकृतस्वरूपेण भिन्नत्वेऽपि तद्व्याप्यत्वतदाश्रितत्वादिना चाभिन्नमिति राद्धान्तः ॥ ३१ ॥

इति इन्द्रप्राणाधिकरणम् ॥ ११ ॥

इति प्रथमाध्यायस्य प्रथमः पादः ।

इति श्रीभगवद्देवाचार्यपादविरचितायां वेदान्तसिद्धान्तजाह्नव्यां द्वितीयस्तरङ्गः समाप्तः ।

CHOWKHAMBÂ SANSKRIT SEREIS
No. 358

---

श्रीमत्पुरुषोत्तमायुधप्रवरसुदर्शनावतार-
निम्बार्काचार्यविरचिता ।

# दशश्लोकी ।

निर्दिष्टाचार्यपथावलम्बि-श्रीगिरिधरप्रपन्नविरचितया
लघुमञ्जूषाख्यव्याख्यया समुल्लासिता ।
वैष्णवसंप्रदायविदुषा न्यायोपाध्यायपदवीसनाथेन
काशीस्थ पं० ढुण्ढिराजशास्त्रिणा
संशोधिता ।

---

# DASHASHLOKEE

by
Shree Nimbârkâchârya
with a commentry called Laghumanjushâ
by
Shree Giridhar Prapanna
Edited by
P. Dhundirâj Shâstri Nyâyopâdhyây & Kâvyatirth

श्रीसर्वेश्वरो विजयते ।

श्री ६ भगवन्निम्बार्कमहामुनीन्द्राय नमः ।

## लघुमञ्जूषादशश्लोकीव्याख्याया

# भूमिका ।

अथेयं प्रकाश्यते मुद्रायित्वा लघुमञ्जूषाऽऽख्या दशश्लोकीव्याख्या । सेयं दशश्लोकी स्वयं भगवता श्रीनिम्बार्कमहामुनीन्द्रेण व्यधायि । निखिलद्वैताद्वैतदर्शनपुञ्जरहस्यमल्पबुद्धीनामुपकारायोपर्युक्ताऽऽचार्यवर्यैः संक्षेपेणाऽस्यां सङ्गृहीतम् । तदनु श्रीमद्भगवन्निम्बार्कमहामुनीन्द्रप्रदर्शितभेदाभेदासिद्धान्तपथधौरेयैः पदवाक्यप्रमाणपारावारीणैः श्रीभगवत्पुरुषोत्तमाचार्यदेशिकैः श्रुतिस्मृतिप्रमाणगर्भितं वेदान्तरत्नमञ्जूषाभिधानमादिमं भाष्यव्याख्यानं दशश्लोक्या निबद्धम् । यत्किल वाराणसेयचौखम्बासंस्कृतसीरिजनाम्नि संस्कृतपुस्तकमुद्रणालये प्राङ्मुद्रितमभूत् । लघुमञ्जूषाख्यस्या एव समस्तसरलार्था टीका । मिरजापुरस्थबदली(घाट)घट्टनिवासिना श्रीमदनमोहनदेवाधिदेवानां सेवाधिकारिणो महत्तमपण्डितप्रवरश्रीगिरिधारिप्रपन्नमहोदयाः खल्वस्या निर्मातारोऽन्येषामपि द्वैताद्वैतदर्शनग्रन्थानाम् ।

लघुमञ्जूषातिरिक्ता अन्या अपि काश्चन दशश्लोक्याष्टीकाः सन्ति, यासां यथावसरमस्माभिर्मुद्रणे प्रयतिष्यते । एतत्पुस्तकप्रकाशनसाहाय्ये पं०किशोरदासमहोदयाः विशेषतो धन्यवादार्हाः, यैः श्रीगोकुलदासान्तेवासिनः श्रीकेशवदासमहोदयादिदमुपलभ्य मुद्रणार्थं प्रेषयद्भिर्महानुपकारो विहितः ।

संभाव्यते चास्याः पठनपाठनादिना महानुपकारो भाविता स्वसम्प्रदायिनां वैष्णवानां येनास्माकमस्या लघुमञ्जूषायाः प्रकाशनपरिश्रमो सफलीभविष्यति । प्रीयतां चानेन कर्मणा गोपीजनवल्लभावतारो निम्बार्कमहामुनीन्द्र इत्यभ्यर्थयते—


फाल्गुनकृष्णाचतुर्थ्या ई०१९२७

ढुण्ढिराजशास्त्री
वैष्णवविदुषामनुचरः,
चौखम्बासंस्कृत–सीरीज–सम्पादकः ।

लघुमञ्जूषाव्याख्यासहिताया

# दशश्लोक्या विषयानुक्रमणिका।

विषयः पृष्ठम्

विषयः पृष्ठम्.

श्रीसर्वेश्वरो जयतितरां नितराम् ॥
श्रीभगवन्निम्बार्कमहामुनीन्द्राय नमः ॥

## लघुमञ्जूषा व्याख्या सहिता

# दशश्लोकी ।

वरेण्यम्ब्रह्माद्यैर्विविधविबुधैर्वन्द्यमनिशं
सुवेद्यम्वेदान्तैर्भवविटपबीजं यदुपतेः ॥
शरण्यं सर्वेषां चरणकमलं नौमि सततं
सदा वृन्दारण्ये पशुपपशुवृन्दानुगमनम् ॥ १ ॥

नत्वाऽऽद्याचार्यपादाब्जं स्मृत्वा कृष्णपदाम्बुजम् ॥
लघुमंजूषिकां टीकां दशश्लोक्याः करोम्यहम् ॥ २ ॥
मंजूषैवात्र संक्षेपाल्लिखिता यत्र कुत्रचित् ॥
विलक्षणं च बालानां सुखबोधो यतो भवेत् ॥ ३ ॥

इह खलु निखिलचेतनाचेतनात्मकानन्तकोटिब्रह्माण्डोद्भवस्थितिलयलीलस्यानन्ताचिन्त्यापरिमितनिरवधिकातिशयस्वरूपगुणशक्तिकस्य केशशेषाद्यमरनिकराधीशावतंसरत्ननिकरदीधितिनीराजिताङ्घ्रियुगलनखज्योत्स्नाभिहतनिजजनान्तःकरणाज्ञानतिमिरस्य निजमायाकृताप्रबन्धनात्मविमुखविश्वजीवोद्दिधीर्षोर्भगवतो महाविभूतिपतेः पुरुषोत्तमस्यायुधप्रवरोऽगणितानन्तकोटिप्रचण्डचण्डांशुसमप्रकाशः सुदर्शनो जगदुद्दिधीर्षया भगवदाज्ञयाऽवनितले तैलंगदेशे द्विजवररूपेणावतीर्य्य तत्र नियमानन्दनिम्बादित्यनिम्बार्केत्यादिनामभिर्विख्यातो भूत्वा ततः श्रीमद्धंसस्वरूपनारायणशिष्याच्चतुःसनाल्लब्धदीक्षान्नारदात्संप्राप्ताष्टादशाक्षरमन्त्रराजस्तथोक्तं विष्णुयामले—

नारायणमुखाम्भोजान्मन्त्रस्त्वष्टादशाक्षरः ।
आविर्भूतः कुमारैस्तु गृहीत्वा नारदाय च ॥
उपदिष्टः स्वशिष्याय निम्बार्काय च तेन तु ।
एवं परम्पराप्राप्तो मन्त्रस्त्वष्टादशाक्षरः ॥

इतिप्रामाण्यात्सत्संप्रदायप्रवर्त्तकः सर्वाद्याचार्यः श्रीनियमानन्दो दशश्लोकीं निर्ममे । तस्या व्याख्या तु पूर्वाचार्यैर्विस्तरतः कृताऽपि मया मन्दमतीनां बुद्धिप्रवेशार्थं तेषु तेषु तत्तदर्थमादाय मिताक्षरैः क्रियते हरिगुर्वनुग्रहकामेन ।

तत्र विवरणभूतायां वेदान्तरत्नमंजूषायां कोष्ठचतुष्टयं कथितं तदत्रापि ज्ञेयं तथाहि—

तत्त्वत्रयं प्रथमके वाक्यार्थं च द्वितीयके ।
तृतीये साधनं प्रोक्तं फलं कोष्ठे चतुर्थके ॥

तत्र तावच्चेतनाचेतनब्रह्मेति भेदेन पदार्थत्रयाणां मध्ये त्वंपदवाच्यानां प्रत्यगात्मनां स्वरूपं स्वयं निरूपयति ज्ञानस्वरूपं चेत्यादिना ।

**ज्ञानस्वरूपं च हरेरधीनं शरीरसंयोगवियोगयोग्यम् ।**
**अणुं हि जीवं प्रतिदेहभिन्नं ज्ञातृत्ववन्तं यदनन्तमाहुः॥१॥**

यच्छब्दस्य सर्वैर्विशेषणैः सह सम्बन्धः । जीवमिति विशेष्यं पदम् । एवंभूतं जीवं जीवात्मानं आहुः श्रुत्यादय इति शेषः । कीदृशमित्यपेक्षायामाह ज्ञानस्वरूपमिति । यद्यस्माद्धेतोः ज्ञानं चेतनं स्वरूपं यस्य स तं स्वयंज्योतिस्वरूपमात्मानं "यथा सैंधवघनोऽनन्तरोऽवाह्यः कृत्स्नो रसघन एव एवं वा अरेऽयमात्माऽनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एवात्रायं पुरुषः स्वयंज्योतिर्भवती"त्यादयः श्रुतयः आहुस्तस्माज्जडात्मस्वरूपवादिनां तार्किकादीनां पक्षो न सम्भवति श्रुतिस्मृत्यादिप्रमाणहीने-

नेतरानुमानाद्यप्रमाणत्वात् । चकारोऽहमर्थस्य संग्रहार्थः अहमर्थस्वरूपमित्यर्थः ।

नन्वहंकारस्य मायाकार्य्यत्वं प्रसिद्धमात्मा तद्रूपश्चेज्जडस्वरूप एव सिद्धः कथं तर्हि ज्ञानस्वरूपमिति भवद्भिः प्रतिपाद्यते इति चेन्न । मुक्तावस्थायामपि प्रकृतिसम्बन्धरहितानां वामदेवादीनामहमर्थश्रवणत्वादात्मनामहमर्थस्वरूपत्वमेव न तु प्रकृतिकार्य्यरूपोऽहंकारः "अहं मनुरभवं सूर्य्यश्चेति" श्रुतेः, किञ्च परमेश्वरस्याप्यहमर्थत्वं श्रूयते श्रीमुखवचनेन "मामेकं शरणं व्रज, अहं त्वां सर्वपापेभ्य" इत्यादिसहस्रशो वारंवाराभ्यासरूपेण जीवात्मनस्तु किमु वक्तव्यं विस्तरस्तु बृहन्मंजूषायां द्रष्टव्यः संदिग्धचित्तैः ।

ननु जीवेशयोरुभयोरप्यहमर्थाभिन्नज्ञानस्वरूपत्वं चेत्तर्हि तयोर्विशेषाभावाज्जीव एवेश्वर इति कथं न वदसीत्याशंकायां स्वतन्त्रपरतन्त्ररूपं विशेषमाह हरेरधीनमिति । यस्मात् हरेः पुरुषोत्तमस्य वासुदेवस्याधीनमायत्तं सर्वदेशकालवस्तुविषयकज्ञानादौ सर्वकालस्वरूपस्थितिप्रवृत्तिपूर्वककर्मप्रवृत्त्यादौ च श्रीपुरुषोत्तमायत्तसत्ताकमित्यर्थः । पुरुषोत्तमस्तु स्वतन्त्रसत्ताक एव तस्मात्तयोर्महांतो विशेषाः संत्येवातो हरौ नातिप्रसङ्ग इत्यर्थः । "यदासीत्तदधीनमासीदि"त्यादिश्रुतेः ।

नन्वीश्वराधीनत्वादीश्वरेऽतिव्याप्तिर्मास्तु किन्त्वचेतनेऽस्त्येव तस्यापि परतन्त्रत्वसाम्यादिति चेत्तत्राह शरीरसंयोगवियोगयोग्यमिति। शरीरशब्देनोपलक्षितानां बाह्याभ्यन्तरकरणप्राणादीनां कार्य्यकारणाभेदेनानादिकर्मात्मिकाविद्याप्रकृत्यादीनां च संयोगस्य वियोगस्तस्य योग्योऽर्हस्तं यस्मादेतेभ्यः सर्वेभ्यः स्वरूपेण पृथग्भवितुं योग्यो भवति तस्मात्परतन्त्रसाम्येऽप्यचेतनात्पृथ-

भवनरूपविशेषगुणाश्रयत्वादात्मनो नाचेतनस्वरूपत्वमित्यर्थः । इत्यनेनाऽस्य हरिगुरुकृपयानादिकर्मात्मिकामविद्यामपहाय मोक्षभक्तिस्वरूपकत्वं सूचितम् ।

नन्वचेतनेऽतिप्रसंगो मास्तु किन्त्वात्मनां विभुरूपत्वमस्त्येव श्रुतिसूत्रादिप्रमाणात् तथात्वे च कालाकाशेश्वरादिष्वतिव्याप्तिः स्यादिति चेत्तत्राह अणुमिति । यस्मात् अणुं अणुपरिमाणकं जीवात्मानं श्रुत्यादयो वदंति तस्माद्विभुवादो नोपपद्यते तथा च "अणुर्ह्ययमात्मा चेतसा वेदितव्यो यस्मिन्प्राणः पञ्चधा संविवेश अणुर्ह्येष आत्मा यं वा एते सिनीता पुण्यं पापं ।

बालाग्रशतभागस्य शतधा कल्पितस्य च ।

भागो जीवः स विज्ञेयः स चानन्त्याय कल्पते ॥

इत्यादिश्रुतिभ्यः । उत्क्रान्तिगत्यागतीनां नाणुस्तच्छ्रुतेरिति चेन्नेतराधिकारात् तद्गुणसारत्वात्तद्व्यपदेशः प्राज्ञवदित्यादिन्यायाच्च । ननु यथैकः सर्षपकणो मेरोः स्वल्पैकदेशमेव व्याप्नोति न समग्रं तथात्मापि कुञ्जरादिपिपीलिकापर्यन्तदेहस्यातिसूक्ष्मदेशमेव न तु सर्वमसम्भवादिति चेन्न । स्वरूपस्याणुत्वेपि तस्य ज्ञानभूतधर्मस्य विभुत्वेन समग्रदेहव्याप्तित्वान्नासम्भवः गुणाद्वालोकवदिति न्यायात्,

यथा प्रकाशयत्येकः कृत्स्नं लोकमिमं रविः ।

क्षेत्रं क्षेत्री तथा कृत्स्नं प्रकाशयति भारत ! ॥

इतिदृष्टान्तोपपत्तिसहकृतभगवद्वचनाच्च । एतेनैव विभुप्रतिपादकं सर्ववाक्यमात्रमपि व्याख्यातम् । ननूपाधिभूताया बुद्धेरणुपरिमाणकत्वं प्रसिद्धं स्यात्तद्गुणेनैव तदुपहितानामात्मनामप्यणुत्वं स्यात् "बुद्धेर्गुणेनात्मगुणेन चैव ह्याराग्रमात्रो ह्यवरोपि दृष्ट" इत्यादिश्रुतेरात्मा विभुरेव नाणुरिति चेन्न । रजःपिहितदृ-

ष्टीनामेवं वक्तॄणां तेषामस्य वाक्यस्यार्थज्ञानाभावत्वात्, तथाहि बुद्धेरणुपरिमाणगुणेन च पुनः आत्मनः स्वस्याणुपरिमाणगुणेनोभयथाप्यवरोऽणुपरिमाणको हि यस्मादाराग्रमात्रोऽतिसूक्ष्मोऽतिसूक्ष्मदर्शिभिरेव दृष्टः इत्यस्यार्थः। हि शब्देन मध्यमपरिमाणवादिनां पक्षो व्यावर्त्यते ।

नन्वात्मनो विभुत्वं तु मास्तु किन्त्वविद्याया एकरूपत्वात्तदवच्छिन्न आत्माप्येक एव सर्वेषु देहेष्विति चेत्तत्राह प्रतिदेहभिन्नमिति । देहं देहं प्रति भिन्नो यः सः प्रतिदेहभिन्नस्तं यस्माद्धेतोर्ब्रह्मादिस्थावरान्तेषु चतुर्विधेषु शरीरेषु स्वरूपेण भिन्नं तस्मान्नैकस्वरूपमित्यर्थः । यद्येवं न स्यादात्मा तर्ह्येकस्मिन्सुप्ते मूर्छिते मृते भयरोगादियुक्ते सति सर्वेषामपि प्रतीतिः स्यात्सा तु कस्यापि नास्त्येवैतेन सुखदुःखादिसांकर्यशङ्कापि दूरतो निरस्ता विशेषस्तु बृहन्मञ्जूषायां द्रष्टव्यः ।

ननु ज्ञानस्वरूपादिप्रतिदेहभिन्नान्तैरेव विशेषणैर्नात्मस्वरूलक्षणस्य निर्दोषत्वं स्याद्यतोऽस्मन्मतप्रवेशेन दोषग्रस्तत्वात्, तथाहि—पारमार्थिकप्रातिभाषिकव्यावहारिकासु दशासु सतीषु अस्माकं सर्वकथनव्यापारः सम्भवत्येव परमार्थदशायां ज्ञानस्वरूपकथनं प्रातिभाषिकव्यावहारिकयोश्च हरेरधीनत्वादिकथनमनवद्यमेव स्यादित्याशङ्क्य नित्यस्वाभाविकयावदात्मवृत्तिधर्मभूतानेकज्ञानाद्याश्रयत्वेनात्मनो लक्षणस्य निर्दोषत्वमाह ज्ञातृत्ववन्तमिति । यस्माद्धेतोः ज्ञातृत्ववन्तं ज्ञानधर्माश्रयमात्मानमाहुस्तस्मान्न मायावादिमतेऽतिव्याप्तिः, "ते त्वात्मना निर्द्धर्मकं स्वरूपं मन्यन्ते योयं वेद जिघ्राणीति स आत्मा कतम" इत्युपक्रम्य "पुरुष एव द्रष्टा श्रोता रसयिता घ्राता मन्ता बोद्धा विज्ञानात्मा पुरुषः विज्ञातारमरे केन विजानीयात् जानात्वेवायं पुरुषः न

पश्यो मृत्युं पश्यति न रोगं नोत दुःखतां सोत्तमः पुरुषो नोपजनं स्मरन्निदं शरीरं एवमेव परिद्रष्टुरिमाः षोडशकलाः पुरुषायनाः पुरुषं प्राप्यास्तं गच्छन्ति यद्वै पश्यन्न पश्यति नहि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यतेऽविनाशित्वात् अविनाशी वा अरे आत्मा अनुच्छित्तिधर्मा" इत्यादिश्रुतिभ्यः ज्ञात एवेति "कर्त्ता शास्त्रार्थवत्वादि"त्यादिन्यायात् । "एतद्यो वेत्ति तं प्राहुः क्षेत्रज्ञ" इति गीयमानाच्च कर्तृत्वभोक्तृत्वादीनामुपलक्षणं ज्ञातव्यम् ।

ननु यथा जले जलं ज्योतिषि ज्योतिर्वा भिन्नं नावतिष्ठते तथात्मनि ज्योतिःस्वरूपे ज्योतिरपीति चेन्न । धर्मिधर्मयोरत्यन्तसाजात्यस्याभेदे नियामकाभावात्, किन्तु भेदाग्रहमात्रे एव तयोर्ज्ञानत्वाविशेषत्वेपि धर्मित्वधर्मत्वावच्छेदेन विजातीयत्वाद्दृष्टान्तासिद्धिः द्युमणितत्प्रभयोस्तैजसत्वसाम्येपि द्युमणित्वप्रभात्वावच्छिन्नतया धर्मिधर्मभावस्य दृष्टचरत्वान्नानुपपत्तिः । वस्तुतस्तु जले ज्योतिषि चात्यन्तसाजात्यं न साजात्येन भेदाग्रहेपि भेदस्य सत्त्वमेव सावयवद्रव्यत्वेनानुमानात्, अन्यथा घटादौ पार्थिवावयवानामप्यभेदः इति कुतो नाशङ्केथाः तथाचात्र प्रयोगः जले निःक्षिप्तं जलं भिन्नत्वेनावस्थातुमर्हति सावयवद्रव्यत्वात् पार्थिवरजसिनिक्षिप्तपार्थिवरजोवत् तिलराशौ निक्षिप्ततिलवच्च । ननु

एक एव हि भूतात्मा भूते भूते व्यवस्थितः ।
एकधा बहुधा चैव दृश्यते जलचन्द्रवत् ॥

उपमासूर्यकादिति श्रुतिसूत्राभ्यामीश्वरस्य बुद्धौ यः प्रतिबिंबः तद्वृत्तौ यः स तु तज्ज्ञानभूतः उक्तः कथं स्वाभाविकज्ञानादिधर्माशयो ज्ञानस्वरूपश्चोच्यते इति चेन्न । श्रुतिसूत्रयोरन्यार्थपरत्वेन प्रतिबिंबत्वासंभवात्, तथाहि यथा जले एक एव चंद्रः प्रतिबिंबात्मनातिष्ठत्यपि जलगतशीताद्रादिधर्मैर्न लिप्य-

ते प्रत्युत स्वगतशीतप्रकाशादिधर्मैः शीतं प्रकाशं च करोति तथा एक एव भूतात्मा भूते व्यवस्थितः सन् एकधा बहुधा दृश्यते न तत्तद्गतजन्मजराज्वरमरणादिधर्मैर्लिप्यते प्रत्युत ज्ञानानन्दादिस्वधर्मैस्तं तं भूतं ज्ञानानंदादियुक्तं करोतीतिश्रुत्यर्थः। एवंसूत्रस्याप्यर्थः। सूर्यकादिवत्सूर्यजलादिवत् भूतात्मनो भूतेषूपमा ज्ञेया। किञ्च दुराग्रहेण तयोः प्रतिबिंबपरत्वमर्थं करोति चेत्तत्रापि न सम्भवत्येव यतो दृष्टान्तासिद्धिः स्यात् तथाहि सरूपसाकारादिधर्मविशिष्टयोः सूर्यचन्द्रयोः प्रतिबिंबसरूपादि विशिष्टजले सम्भवत्येव दार्ष्टान्ते तु निरूपनिर्विशेषादिरूपयोर्बिंबोपाध्योः प्रतिबिंबः सर्वथैव न घटते एवमवच्छेदवादोपि नोपपद्यते यतोऽसद्रूपेणाविद्यान्तःकरणरूपेणोपाधिनाशु बुद्धनिर्विशेषव्यापकस्य ब्रह्मणः आवरणासंभवात् सद्द्रव्याभ्यां मठघटाभ्यामाकाशस्यावरणं तु संभवति दार्ष्टान्ते तु न घटतेऽतो दृष्टान्तासिद्धिः वादीन्द्रकरीन्द्रमुखे चपेटस्तु बृहद्रत्नमंजूषायां कंठीरवाचार्यैः पूर्वाचार्यैर्दृढतरः कृतोऽतोत्रोपरम्यते।

ननु तथापीश्वरेतिप्रसंगस्तदवस्थ एव यतो भवन्मते ज्ञातृत्वादिधर्माश्रयः ईश्वरोपि स्यादिति चेत्तत्राह अनन्तमिति। यस्माद्धेतोरनन्तं संख्यावच्छेदशून्यमसंख्यातस्वरूपं तस्मादेकस्वरूपे ईश्वरे नातिव्याप्तिः स्यात्। ननु "सत्यं ज्ञानमनन्तं ब्रह्मेति" श्रुतिरीश्वरस्याप्यनन्तत्वं वदतीति कृत्वा पुनस्तत्रातिव्याप्तिः स्यादितिचेन्न, यत ईश्वरस्य तु स्वरूपस्येयत्तावच्छेदशून्यत्वं गुणशक्त्यादीनां च संख्याविच्छेदशून्यत्वं च श्रुतिर्वक्ति अतो नातिव्याप्तिशंकावकाशत्वं लक्षणस्येत्यर्थः॥ १॥

नन्वेवमात्मनः स्वरूपगुणादिकं चेत्तर्हि सः कथं नानुभूयते सर्वजनैरित्येवं शंकां परिहरन् विशिनष्टि अनादीत्यादिना--

**अनादिमायापरियुक्तरूपं त्वेनं विदुर्वै भगवत्प्रसादात् ।**
**मुक्तश्च भक्तं किल बद्धमुक्तं प्रभेदबाहुल्यमथापि बोध्यम् २**

अनाद्याघटनघटनापटीयस्या गुणमय्या मायया प्रकृत्या परियुक्तं परिवेष्टितं रूपं यस्य सतं श्रीपुरुषोत्तमात्पराङ्मुखत्वेनानादिमायया संकुचितधर्मभूतज्ञानमित्यर्थः । नन्वेवं चेत्तज्ज्ञानं न स्यादथ च विविदिषायास्तत्प्रतिपादकशास्त्राणां च वैयर्थ्यापत्तेरिति चेत्तत्राह त्वेनमिति । तुशब्दः शंकानिरासार्थकः वै निश्चयार्थकः एवं शास्त्रप्रमाणसिद्धं प्रत्यगात्मानं भगवत्प्रसादात् श्रीपुरुषोत्तमानुग्रहात् विदुः जानंति के श्रीभगवदीयानादिसंप्रदायानुयायिनः नान्ये—

तमक्रतुं पश्यति वीतशोको धातुः प्रसादान्महिमानमात्मनः ।

इत्यादिश्रुतेः । एवं जीवात्मस्वरूपादिकं तज्ज्ञानाज्ञानकारणं च प्रतिपाद्येदानीमात्मा कतिविधः स इत्यपेक्षायामाह—मुक्तश्चेत्यादिना। किलेति निश्चयेन मुक्तंच पुनः भक्तं अथापि बद्धमुक्तं प्रभेदबाहुल्यं बोध्यमित्यन्वयः।तत्र मुक्तास्तावद्द्विविधाः नित्यमुक्ताः मुक्ताश्चेति। तत्र गर्भजन्मजरामरणादिप्रकृतिसम्बन्धतत्कार्यविषयकानुभवशून्यत्वे सति नित्यभगवदीयदर्शनादिभजनानुभवानन्दैकरसाः नित्यमुक्ताः "सदा पश्यंति सूरय" इत्यादिवचनात् । तेपि द्विविधाः आनंतर्याः पार्षदाश्च तत्रानंतर्याः किरीटकुंडलवंश्यादयः पार्षदाश्च गरुडविष्वक्सेनादयः । मुक्ता नाम अनादिकर्माऽत्मिकाविद्यानिरूपितप्रकृतिसम्बन्धतत्कार्यदुःखादिविनिर्मुक्ताः । तेपि द्विविधाः एके भगवद्भावापत्तिलक्षणमुक्तिमन्तः ।

बहवो ज्ञानतपसा पूतामद्भावमागताः ॥
मम साधर्म्यमागता ।
सर्गेपि नोपजायंते प्रलये न व्यथन्ति च ॥

इति भगवद्वचनात् । अन्ये स्वस्वरूपानन्दापत्तिमात्रेण सन्तुष्टाः । चकाराद्बद्धा अनादिकर्मवासनाकार्य्यभूतदेवतिर्य्यगाद्यनेकविधशरीरेषु तत्सम्बन्धिषु चात्मत्वात्मीयत्वाभिमानदार्ढ्यवंतस्ते एव बुभुक्षुशब्देनाभिधेयाः वैषयिकभोगमिच्छवः । तेऽपि द्विविधाः बद्धाः नित्यबद्धाश्च भाविश्रेयस्काः बद्धाः नित्यसंसारिणश्च नित्यबद्धाः भक्तं भजनार्हमुमुक्षुं स्वाभाविकापरिच्छिन्नध्येयाकारेन्द्रियवृत्तिमत्तया भजनशीलत्वाद्भक्तशब्दो मुमुक्षुवाचकः । अध्यात्म्यादिविविधसांसारिकदुःखानुभवजा तत्केशत्त्या विरक्ताः सन्तः संसारान्मोक्षमिच्छवो मुमुक्षवः । तेपि द्विविधाः श्रीभगवद्भावापत्तिमुक्तिकामाः स्वस्वरूपापत्तिकामाश्च । यद्यपि बद्धमुक्तेतिभेदेनात्मनो द्विविधत्वमेव सिद्धं तथापि प्रभेदबाहुल्यं प्रकृष्टेन भेद प्रभेदस्तेन बाहुल्यं बहुप्रकारकं मुक्तनित्यमुक्तबद्धनित्यबद्धमुमुक्षिवत्यादिरूपकं बोध्यम् । वैष्णवैरिति शेषः । इति त्वंपदार्थसंग्रहः ॥ २ ॥

अथ चाचेतनं निरूप्यते

**अप्राकृतं प्राकृतरूपकं च कालस्वरूपं तदचेतनं मतम् ।**
**मायाप्रधानादिपदप्रवाच्यं शुक्लादिभेदाश्च समेऽपि तत्र ॥**

अप्राकृतमित्यादिना तत् अचेतनं मतं श्रुतिभिरिति शेषः । इत्यन्वयः । ज्ञानादिधर्मानधिकरणत्वे सति चेतनत्वं तत्रिविधं प्राकृताप्राकृतकालभेदात् । तत्र तत्रादप्राकृतमाह प्रकृतिकालाभ्यामत्यंतविलक्षणं प्रकाशात्मकमनावरकस्वभावमचेतनद्रव्यमप्राकृतं स्यात् "आदित्यवर्णं तमसः परस्तादि"त्यादिश्रुतेः । तमःशब्दाभिधेयाभ्यां प्रकृतिकालाभ्यां परो विलक्षणमादित्यवत्प्रकाशरूपामिति श्रुत्यर्थः । एतेन त्रिगुणात्मकद्रव्यभिन्नमपि शुद्धमायाकार्य्यमिति मतनिरासः कृत

प्रकृतिमण्डलाद्भिन्नदेशं परिच्छिन्नवद्दृश्यमानमप्यपरिच्छिन्नं तत्तु विश्वरूपदर्शनेऽर्जुनेन दृष्टं आनन्दानित्यविभूतिपरमात्मलोकपरमपदादिशब्दाभिधेयं "योऽस्याध्यक्षः परमव्योमन् तिष्ठति, तद्विष्णोः परमं पदं सदा पश्यंति सूरयः। एते वै निरयास्तात लोकस्य परमात्मनः" । इत्यादि वचनेभ्यः। तच्च भगवदीयानादिसंकल्पात्तस्य तदीयानां नित्यमुक्तानां च भोग्यादिरूपेणानेकविधं तत्र भोग्यं भगवद्विग्रहादिभोगोपकरणं च भूषणायुधयानासनालंकारकुसुमपत्रफलादिस्थानं च गोपुरचत्वरप्राकारमणिमण्डपवलोपवनसरोवरादिकम्। तत्रेश्वरस्य नित्यमुक्तानां च विग्रहसंस्थानं च भगवदीयानाद्यनंतेच्छासिद्धं स्वाभाविकमेव बद्धमुक्तानां त्वनादिसिद्धैर्विग्रहादिभिर्योगः । न त्वत्र जन्यत्वादिविकारंशकापि तस्य निर्विकारत्वात् यथोत्सवादिसमये प्राक्सिद्धा वस्त्रभूषणालङ्कारादयो राजभिः स्वभृत्येभ्यो दीयन्ते तथैव प्रकृतिवियोगसमये पूर्वसिद्धा नित्याः सर्वविकारशून्या विग्रहादयस्तत्सेवोपकरणरूपाः श्रीपुरुषोत्तमेन दीयंते इति। श्रीविग्रहश्च स्वरूपवदनंतकल्याणगुणाश्रयः । गुणाश्च निरतिशयसौंदर्यसौगंध्यकुमार्यादयोऽपरिमिता अनंताश्च। "सर्वगन्धः सर्वरसः आप्रणखात्सुवर्ण" इत्यादिश्रुतिभ्यः श्रीभगवतः सर्वदर्शनगमनादिशक्तिमत्त्वान्न तत्रेन्द्रियादिविभागकल्पनापेक्षया गौरवात्। "अपाणिपादो जवनो गृहीते" त्यादिश्रुतिभ्यः तत्साम्यं भजतामपि तथैव व्यवहारः "निरंजनः परमं साम्यमुपैती"त्यादिश्रुतेः "मम साधर्म्यमागता" इत्यादिस्मृतेश्च। कालातीतवस्तुत्वान्न तत्र कालप्रभावः।

कालेमुहूर्तादिमयश्च काला न यद्विभूतेः परिणामहेतुरिति शतुर्थांशे ब्रह्मवचनात्।

अथ प्राकृतपदार्थमाह प्राकृतमिति । मायाप्रधानादिपदप्रवा-च्यं मायाप्रधानादिशब्दैरभिधीयमानं प्राकृतं स्यात् । आदिश-ब्देन तमोऽव्यक्तादिसंग्रहः "मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरं, प्रधानक्षेत्रज्ञपतिर्गुणेशः, अव्यक्तात्पुरुषः पर" इत्यादि-श्रुतिभ्यः । तदेव लक्षणमुखेन द्योतयति शुक्लादिभेदाश्चसमेपि तत्रेति । च पुनः तत्र तस्मिन्प्राकृतपदार्थे समेपि सर्वेपि शुक्लादि-भेदाः शुक्ललोहितकृष्णपदाभिधेयाः गुणाः संति गुणत्रयाश्रय-त्वमित्यर्थः । "अजामेकां लोहितशुक्लकृष्णा"मित्यादिश्रुतेः । गुणाश्च सत्त्वरजस्तमांसि "सत्त्वात्संजायते ज्ञानं रजसो लोभ एव च । प्रमादमोहौ तमस" इति लक्षितलक्षणभगवद्वचनात् ।

सृष्टिक्रमश्च प्रथमं तावत्प्रलयावसाने सृष्टिसमये श्रीपुरुषो-त्तमेक्षणक्षुभितगुणायाः स्वतंत्रसत्तायाः प्रकृतेरध्यवसायहेतुः सात्त्विकादिभेदात्त्रिविधो महानुत्पद्यते । ततो जीवानां देहादावा-त्मबुद्ध्युत्पादनासाधारणहेतुरहंकारः । सोपि सात्त्विकादिभेदा-त्त्रिविधः वैकारिकतैजसभूतादिसंज्ञकः तत्र वैकारिकादिन्द्रिया-धिष्ठात्र्यो देवता मनश्च तदेव नोवृत्तिभेदात् स्थानभेदाच्चान्तस्क-रणचतुष्टयसंज्ञां लभते । तत्र मननादिहेतुत्वं मनस्त्वम् । इदमेव मनः शब्दादिसंबद्धं सद्बन्धनहेतुः तत्परित्यागपूर्वकं सपरिकरभ-गवत्प्रावण्ये सति मोक्षहेतुः "मन एव मनुष्याणां कारणं बन्ध-मोक्षयो"रिति वचनात् । बोधनहेतुत्वं बुद्धित्वं देहादावहंकर-णहेतुत्वमहंकारत्वं चेतनहेतुत्वं चित्तत्वं मनसः स्थानं गलांतरं बुद्धेर्वदनं अहंकारस्य हृदयं चित्तस्य नाभिरिति स्थानानि । एषां चन्द्रब्रह्मरुद्रक्षेत्रज्ञाः अधिष्ठात्र्यो देवताः व्यूहदेवा वासुदे-वादयोपि तत्तदंतर्यामितयाऽत्रोपास्याः इत्येवमुभयमपि घटत एव । तैजसाहंकारकार्याणि बाह्येंद्रियाणि दश तेपि ज्ञानकर्म-

भेदेन द्विविधानि । तत्र श्रोत्रत्वक्चक्षूरसनाघ्राणभेदेन पञ्च ज्ञानेंद्रियाणि दिग्वातार्कवरुणाश्विनः एतेषां देवताः । शब्दस्पर्शरूपरसगन्धा विषयाः । वाक्पाणिपादपायूपस्थानि पञ्चकर्मेन्द्रियाणि वह्नींद्रविष्णुमृत्युप्रजापतिरूपा देवताः वचनादानविहरणोत्सर्गानंदाः पञ्च कर्मेन्द्रियाविषयाः । भूतादिलक्षणतामसाहंकाराच्छब्दादितन्मात्राणि आकाशादिमहाभूतानिचोत्पद्यन्ते तामसाहंकारस्य भूतानां चांतरालिकव्यवहितसूक्ष्मपरिणामात्मकं द्रव्यं तन्मात्रशब्दाभिधेयं दुग्धदध्योरांतरालिकसलिलादिपारिणामवत् । तदेव स्थूलावस्थापन्नभूतशब्दवाच्यं भवति । एवं च तामसादहंकाराच्छब्दतन्मात्रं शब्दतन्मात्रादाकाशं आकाशात् स्पर्शतन्मात्रं तस्माद्वायुः वायोः रूपतन्मात्रं ततस्तेजस्तेजसो रसतन्मात्रं तस्माज्जलं जलाद्गन्धतन्मात्रं तस्मात्पृथिवीत्युत्पत्तिक्रमः । तेषां गुणा शब्दस्पर्शरूपरसगंधाः, तत्र पञ्चैव पृथिव्याः गुणाः रसपर्यंता जलस्य रूपपर्यंतास्तेजसः स्पर्शपर्यंतौ वायोः शब्दमात्रं नभसः । प्राणाः पञ्चविधाः प्राणापानसमानोदानव्यानभेदात् नागकूर्मादीनां प्राणादिष्वेवान्तर्भावान्न पृथग्ग्रहणम् । इत्थं प्रकृतिमहदहंकारमनोदशेन्द्रियाणि तन्मात्रपञ्चकं भूतपञ्चकं चेति चतुर्विंशतितत्त्वानि प्राकृतानि । तत्र प्रकृतिमहदहंकाराः पञ्च भूतानि च स्थूलदेहस्योपादानकारणानि इंद्रियाणि भूषणे रत्नानीव तदाक्रम्य स्थितानि पञ्चतन्मात्राणि मनो दशेन्द्रियाणि प्राणश्च सूक्ष्मदेहस्योपादानानि ब्रह्मांडं च कपित्थफलाकारं पञ्चीकृतं पञ्चमहाभूतारब्धं चतुर्दशलोकगर्भकं प्राकृतद्रव्यं मुमुक्षुहेयञ्च विभज्य द्विधा पञ्चभूतानि देवस्तदर्धानि पश्चाद्द्विभागानि कृत्वा तदन्येषु मुख्येषु भागेषु तत्तान्नियुंजन्सपञ्चीकृतं पश्यति स्मेति पञ्चकिरणम् । महदादिशरीरपर्यंतेषु

मध्येऽन्नविकारत्वात् शरीरमन्नमयः पुरुष इत्युच्यते ज्ञानेन्द्रियैः सहितं मनोमयः पुरुषः कर्मेन्द्रियैः सहितं प्राणादिपञ्चकं प्राणमयः पुरुषः जीवात्मा विज्ञानमयः पुरुषः परमात्मानंदमयः पुरुषः—"स वा एष पुरुषोन्नरसमय" इत्यादिश्रुतिभ्यः ।

लयक्रमश्च पृथिवी गन्धतन्मात्रद्वारणाप्सु लीयते आपो रसतन्मात्रद्वारेण तेजसि तेजो रूपतन्मात्रद्वारेण वायौ वायुः स्पर्शतन्मात्रद्वारेण व्योम्नि व्योम शब्दतन्मात्रलयपूर्वकं तामसाहंकारे इन्द्रियाणि राजसाहंकारे मनो देवश्च वैकारिके त्रिविधोप्यहंकारो महति स चाव्यक्ते सोपि पुरुषे सोपि पुरुषोत्तमे इति प्राकृतः ।

अथ कालमाह कालस्वरूपं चेति । च पुनः कालस्वरूपमचेतनं मतमित्यन्वयः । प्राकृताप्राकृतोभयाभिन्नत्वे सत्यचेतनद्रव्यविशेषः काल उच्यते । स च नित्यो विभुश्च "अथ ह वा नित्यो पुरुषः प्रकृतिः काल" इति श्रुतेः । स च भूतभविष्यद्वर्त्तमानाचिराक्षिप्रादिव्यवहारहेतुः सर्गप्रलययोर्निमित्तं च परमाण्वादिपरार्द्धान्तव्यवहारासाधारणं च । तत्र यावता दिवाकरः परमाणुपरिमाणकं देशमाक्रमति स कालः परमाणुशब्दाभिधेयः, द्वौ परमाणू द्व्यणुकस्त्रयो द्व्यणुकास्त्रसरेणवः त्रसरेणुत्रिकं त्रुटिः त्रुटिशतं वेधः त्रिभिर्वेधैर्लवः तैस्त्रिभिर्निमेषः पञ्चशनिमेषाः काष्ठा त्रिंशत्काष्ठाः कलाः कलास्त्रिंशन्मुहुर्तः त्रिंशन्मुहूर्तैर्मानुषमहोरात्रं तैः पञ्चदशभिः पक्षः द्वौ पक्षौ मासः द्वौ मासावृतुः षण्मासैरयनं द्वेऽयने वर्षं तत्र दक्षिणायनं देवानां रात्रिरुत्तरायणं च दिनं अयनद्वयात्मकाहोरात्राणां षष्ठ्यधिकशतत्रयेण देववर्षादिव्यैर्वर्षसहस्रैर्द्वादशभिः कृतादियुगचतुष्टयम् । तत्राष्टशतोत्तरचतुःसहस्रवर्षपरिमितं ससंध्यं कृतयुगम्, षट्शतोत्तरत्रिसहस्रवर्षपरिमितं ससंध्यं त्रेतायुगम्, चतुःशतोत्तरं द्विसहस्रवर्षपरिमितं ससन्ध्यं

द्वापरयुगम् शतद्वयोत्तरैकसहस्रवर्षपरिमितं ससंध्यं कलियुगं भवति । चतुर्युगसहस्रपरिमितं चतुर्मुखदिवसं तत्रैकस्मिन्दिवसे मनवश्चतुर्दश जायन्ते तथैव सप्तर्षयो महेन्द्रादयश्च । तत्र चतुर्युगाणां साधिका ह्येकसप्ततिमन्वन्तं मनोः काल उच्यते । तस्य चतुर्दशगुणब्राह्ममहस्तत्परिमाणिका च रात्रिः। ईदृशाहोरात्राणां मानेन वर्षशतं चतुर्मुखस्यायुस्तदर्द्धं तत्रैकं व्यतीतं द्वितीयपरार्द्धस्य वर्त्तमानस्य प्रथमोऽयं कल्पो वाराहसंज्ञकः । सर्वमपि प्राकृतं कालाधीनं कालस्यैतत्सर्वनियामकत्वेपि परमेश्वरस्य नियम्यत्वमेव "ज्ञः कालकालो गुणी सर्वविद्य" इतिश्रुतेः । लीलाविभूतौ तु परमेश्वरस्य कालपारतन्त्र्यमनुकरणमात्रमेव नित्यविभूतौ तु न तत्प्रभावशङ्कापि "कलामुहूर्तादिमयश्च कालो न यद्विभूतेः परिणामहेतु"रित्यादिवचनात् । इत्यचेतनपदार्थः ॥ ३ ॥

अथ तत्पदवाच्यपरमात्मतत्त्वमाह–

**स्वभावतोऽपास्तसमस्तदोषमशेषकल्याणगुणैकराशिम्।**
**व्यूहाङ्गिनं ब्रह्म परं वरेण्यं ध्यायेम कृष्णं कमलेक्षणं हरिम्॥**

स्वभावत इत्यादिना। वयं कृष्णं सदानन्दं ध्यायेम इत्यन्वयः । बहुवचनं शिष्याभिप्रायेण "कृषिर्भूवाचकः शब्दो णश्च निर्वृत्तिवाचक" इति वचनात् ।

ननु व्यासार्जुनादिष्वनेकेषु कृष्णशब्दो वर्त्तते कथमेवमर्थः क्रियत इति चेत्तत्राह ब्रह्मेति । ब्रह्मस्वरूपमित्यर्थः। तत्रापि विधिरुद्रादावतिव्याप्तिवारणायाह परमिति । परं क्षराक्षराभ्यामुत्कृष्टम् एतैर्विशेषणैरूपम् ।

क्रमसूत्रं व्याख्यातमिदानीं लक्षणसूत्रादीन्यन्यान्यपि व्याचक्षाणो भगवत्पदार्थाभिन्नं ब्रह्मपदार्थमाह निर्वचनमुखेन स्वभावत इति । स्वभावेनैवानादिप्रकृत्यैवापास्ता निरस्ताः समस्ताः

